शब्दमूलत्वाधिकरणम् - ८

ॐ श्रुतेस्तु शब्दमूलत्वात् ॐ २८
ॐ आत्मनि चैवं विचित्राश्च हि ॐ २९
ॐ स्वपक्षदोषाच्च ॐ ३०
ॐ सर्वोपेता च तद्दर्शनात् ॐ ३१
ॐ विकरणत्वान्नेति चेत्तदुक्तम् ॐ ३२

न प्रयोजनाधिकरणम् - ९

ॐ न प्रयोजनवत्त्वात् ॐ ३३
ॐ लोकवत्तु लीलाकैवल्यम् ॐ ३४

वैषम्यनैर्घृण्याधिकरणम् - १०

ॐ वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथा हि दर्शयति ॐ ३५
ॐ न कर्माविभागादिति चेन्नानादित्वात् ॐ ३६
ॐ उपपद्यते चाप्युपलभ्यते च ॐ ३७

सर्वधर्मोपपत्त्यधिकरणम् - ११

ॐ सर्वधर्मोपपत्तेश्च ॐ ३८

।। इति द्वितीयाध्यायस्य प्रथमः पादः ।।

## द्वितीयः पादः

रचनानुपपत्त्यधिकरणम् - १

ॐ रचनानुपपत्तेश्च नानुमानम् ॐ १
ॐ प्रवृत्तेश्च ॐ २
ॐ पयोऽम्बुवच्चेत्तत्रापि ॐ ३
ॐ व्यतिरेकानवस्थितेश्चानपेक्षत्वात् ॐ ४

अन्यत्राभावाधिकरणम् - २

ॐ अन्यत्राभावाच्च न तृणादिवत् ॐ ५

अभ्युपगमाधिकरणम् - ३

ॐ अभ्युपगमेऽप्यर्थाभावात् ॐ ६

पुरुषाश्माधिकरणम् - ४

ॐ पुरुषाश्मवदिति चेत्तथाऽपि ॐ ७

ॐ अङ्गित्वानुपपत्तेः ॐ ८

अन्यथानुमित्यधिकरणम् - ५

ॐ अन्यथाऽनुमितौ च ज्ञशक्तिवियोगात् ॐ ९

ॐ विप्रतिषेधाच्चासमञ्जसम् ॐ १०

वैशेषिकाधिकरणम् - ६

ॐ महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम् ॐ ११

ॐ उभयथाऽपि न कर्मातस्तदभावः ॐ १२

ॐ समवायाभ्युपगमाच्च साम्यादनवस्थितेः ॐ १३

ॐ नित्यमेव च भावात् ॐ १४

ॐ रूपादिमत्त्वाच्च विपर्ययो दर्शनात् ॐ १५

ॐ उभयथा च दोषात् ॐ १६

ॐ अपरिग्रहाच्चात्यन्तमनपेक्षा ॐ १७

समुदायाधिकरणम् - ७

ॐ समुदाय उभयहेतुकेऽपि तदप्राप्तिः ॐ १८

ॐ इतरेतरप्रत्ययत्वादिति चेन्न
उत्पत्तिमात्रनिमित्तत्वात् ॐ १९

ॐ उत्तरोत्पादे च पूर्वनिरोधात् ॐ २०
ॐ असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा ॐ २१
ॐ प्रतिसङ्ख्याऽप्रतिसङ्ख्यानिरोधाप्राप्तिर-
विच्छेदात् ॐ २२
ॐ उभयथा च दोषात् ॐ २३
ॐ आकाशे चाविशेषात् ॐ २४
ॐ अनुस्मृतेश्च ॐ २५

असदधिकरणम् - ८

ॐ नासतोऽदृष्टत्वात् ॐ २६
ॐ उदासीनानामपि चैवं सिद्धिः ॐ २७
ॐ नाभाव उपलब्धेः ॐ २८
ॐ वैधर्म्याच्च न स्वप्नादिवत् ॐ २९

अनुपलब्ध्यधिकरणम् - ९

ॐ न भावोऽनुपलब्धेः ॐ ३०
ॐ क्षणिकत्वाच्च ॐ ३१
ॐ सर्वथाऽनुपपत्तेश्च ॐ ३२

नैकस्मिन्नधिकरणम् - १०

ॐ नैकस्मिन्नसम्भवात् ॐ ३३
ॐ एवञ्चात्माकात्स्न्र्यम् ॐ ३४
ॐ न च पर्यायादप्यविरोधो विकारादिभ्यः ॐ ३५
ॐ अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषात् ॐ ३६

पत्युरधिकरणम् - ११

ॐ पत्युरसामञ्जस्यात् ॐ ३७

ॐ सम्बन्धानुपपत्तेश्च ॐ ३८
ॐ अधिष्ठानानुपपत्तेश्च ॐ ३९
ॐ करणवच्चेन्न भोगादिभ्यः ॐ ४०
ॐ अन्तवत्त्वमसर्वज्ञता वा ॐ ४१

उत्पत्त्यधिकरणम् - १२

ॐ उत्पत्त्यसम्भवात् ॐ ४२
ॐ न च कर्तुः करणम् ॐ ४३
ॐ विज्ञानादिभावे वा तदप्रतिषेधः ॐ ४४
ॐ विप्रतिषेधाच्च ॐ ४५

।। इति द्वितीयाध्यायस्य द्वितीयः पादः ।।

## तृतीयः पादः

वियदधिकरणम् - १

ॐ न वियदश्रुतेः ॐ १
ॐ अस्ति तु ॐ २
ॐ गौण्यसम्भवात् ॐ ३
ॐ शब्दाच्च ॐ ४
ॐ स्याच्चैकस्य ब्रह्मशब्दवत् ॐ ५
ॐ प्रतिज्ञाहानिरव्यतिरेकाच्छब्देभ्यः ॐ ६
ॐ यावद्विकारं तु विभागो लोकवत् ॐ ७

मातरिश्वाधिकरणम् - २

ॐ एतेन मातरिश्वा व्याख्यातः ॐ ८

अऽसम्भवाधिकरणम् - ३

ॐ असम्भवस्तु सतोऽनुपपत्तेः ॐ ९

तेजोऽधिकरणम् - ४

ॐ तेजोऽतस्तथा ह्याह ॐ १०

अवधिकरणम् - ५

ॐ आपः ॐ ११

पृथिव्यधिकरणम् - ६

ॐ पृथिव्यधिकाररूपशब्दान्तरादिभ्यः ॐ १२

तदभिध्यानाधिकरणम् - ७

ॐ तदभिध्यानादेव तु तल्लिङ्गात्सः ॐ १३

विपर्ययाधिकरणम् - ८

ॐ विपर्ययेण तु क्रमोऽत उपपद्यते च ॐ १४

अन्तराधिकरणम् - ९

ॐ अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति
चेन्नाविशेषात् ॐ १५

ॐ चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशो
भाक्तस्तद्भावभावित्वात् ॐ १६

आत्माधिकरणम्-१०

ॐ नात्माऽश्रुतेर्नित्यत्वाच्च ताभ्यः ॐ १७

ज्ञाधिकरणम् - ११

ॐ ज्ञोऽत एव ॐ १८

ॐ युक्तेश्च ॐ १९

उत्क्रान्त्यधिकरणम् - १२

ॐ उत्क्रान्तिगत्यागतीनाम् ॐ २०
ॐ स्वात्मना चोत्तरयोः ॐ २१
ॐ नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात् ॐ २२
ॐ स्वशब्दोन्मानाभ्यां च ॐ २३
ॐ अविरोधश्चन्दनवत् ॐ २४
ॐ अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृदि हि ॐ २५
ॐ गुणाद्वाऽऽलोकवत् ॐ २६

व्यतिरेकाधिकरणम् - १३

ॐ व्यतिरेको गन्धवत्तथा च दर्शयति ॐ २७

पृथगधिकरणम् - १४

ॐ पृथगुपदेशात् ॐ २८
ॐ तद्गुणसारत्वात्तु तव्द्यपदेशः प्राज्ञवत् ॐ २९

यावदधिकरणम् - १५

ॐ यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात् ॐ ३०

पुंस्त्वाधिकरणम् - १६

ॐ पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात् ॐ ३१
ॐ नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतरनियमो
वाऽन्यथा ॐ ३२

कर्तृत्वाधिकरणम् - १७

ॐ कर्ता शास्त्रार्थवत्त्वात् ॐ ३३
ॐ विहारोपदेशात् ॐ ३४

ॐ उपादानात् ॐ ३५
ॐ व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः ॐ ३६
ॐ उपलब्धिवदनियमः ॐ ३७
ॐ शक्तिविपर्ययात् ॐ ३८
ॐ समाध्यभावाच्च ॐ ३९
ॐ यथा च तक्षोभयथा ॐ ४०
ॐ परात्तु तच्छ्रुतेः ॐ ४१
ॐ कृतप्रयत्नापेक्षस्तु विहितप्रतिषेधा-
वैयर्थ्यादिभ्यः ॐ ४२

अंशाधिकरणम् - १८

ॐ अंशो नानाव्यपदेशादन्यथा चापि
दाशकितवादित्वमधीयत एके ॐ ४३
ॐ मन्त्रवर्णात् ॐ ४४
ॐ अपि स्मर्यते ॐ ४५
ॐ प्रकाशादिवन्नैवं परः ॐ ४६
ॐ स्मरन्ति च ॐ ४७
ॐ अनुज्ञापरिहारौ देहसम्बन्धाज्ज्योतिरादिवत् ॐ ४८
ॐ असन्ततेश्चाव्यतिकरः ॐ ४९
ॐ आभास एव च ॐ ५०

अदृष्टाधिकरणम् - १९

ॐ अदृष्टानियमात् ॐ ५१
ॐ अभिसन्ध्यादिष्वपि चैवम् ॐ ५२
ॐ प्रदेशादिति चेन्नान्तर्भावात् ॐ ५३

।। इति द्वितीयाध्यायस्य तृतीयः पादः ।।

# चतुर्थः पादः

प्राणाधिकरणम् (प्राणोत्पत्त्यधिकरणम्) - १

ॐ **तथा प्राणाः** ॐ १

ॐ **गौण्यसम्भवात्** ॐ २

ॐ **प्रतिज्ञानुपरोधाच्च** ॐ ३

मनोधिकरणम् - २

ॐ **तत्प्राक्श्रुतेश्च** ॐ ४

वागधिकरणम् - ३

ॐ **तत्पूर्वकत्वाद्वाचः** ॐ ५

सप्तगत्यधिकरणम् - ४

ॐ **सप्तगतेर्विशेषितत्वाच्च** ॐ ६

ॐ **हस्तादयस्तु स्थितेऽतो नैवम्** ॐ ७

अण्वधिकरणम् - ५

ॐ **अणवश्च** ॐ ८

मुख्यप्राणाधिकरणम् - ६

ॐ **श्रेष्ठश्च** ॐ ९

ॐ **न वायुक्रिये पृथुगुपदेशात्** ॐ १०

चक्षुराद्यधिकरणम् - ७

ॐ **चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्यः** ॐ ११

ॐ **अकरणत्वाच्च न दोषस्तथा हि दर्शयति** ॐ १२

पञ्चवृत्त्यधिकरणम् - ८

ॐ **पञ्चवृत्तिर्मनोवद्व्यपदिश्यते** ॐ १३

प्राणाणुत्वाधिकरणम् - ९

ॐ अणुश्च ॐ १४

ज्योतिराद्यधिकरणम् - १०

ॐ ज्योतिराद्यधिष्ठानं तु तदामननात् ॐ १५

ॐ प्राणवता शब्दात् ॐ १६

ॐ तस्य च नित्यत्वात् ॐ १७

तइन्द्रियाधिकरणम् - ११

ॐ त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात् ॐ १८

ॐ भेदश्रुतेः ॐ १९

ॐ वैलक्षण्याच्च ॐ २०

संज्ञाधिकरणम् - १२

ॐ संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात् ॐ २१

मांसाधिकरणम् - १३

ॐ मांसादि भौमं यथाशब्दमितरयोश्च ॐ २२

ॐ वैशेष्यात्तु तद्वादस्तद्वादः ॐ २३

।। इति द्वितीयाध्यायस्य चतुर्थः पादः ।।

## तृतीयाध्यायस्य प्रथमः पादः

तदन्तराधिकरणम् - १

ॐ तदन्तरप्रतिपत्तौ रंहति सम्परिष्वक्तः
प्रश्ननिरूपणाभ्याम् ॐ १

त्र्यात्मकत्वाधिकरणम् - २

ॐ त्र्यात्मकत्वात्तु भूयस्त्वात् ॐ २

प्राणगत्यधिकरणम् - ३

ॐ प्राणगतेश्च ॐ ३

अग्न्याद्यधिकरणम् - ४

ॐ अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात् ॐ ४

प्रथमाधिकरणम् - ५

ॐ प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्तेः ॐ ५

अश्रुतत्वाधिकरणम् - ६

ॐ अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः ॐ ६

भाक्ताधिकरणम् - ७

ॐ भाक्तं वाऽनात्मवित्त्वात्तथा हि दर्शयति ॐ ७

कृतात्ययाधिकरणम् - ८

ॐ कृतात्ययेऽनुशयवान्दृष्टस्मृतिभ्याम् ॐ ८

यथेताधिकरणम् - ९

ॐ यथेतमनेवं च ॐ ९

चरणाधिकरणम् - १०

ॐ चरणादिति चेन्न तदुपलक्षणार्थेति
काष्णाजिनिः ॐ १०

ॐ आनर्थक्यमिति चेन्न तदपेक्षत्वात् ॐ ११

ॐ सुकृतदुष्कृते एवेति तु बादरिः ॐ १२

अनिष्टाधिकरणम् - ११

ॐ **अनिष्टादिकारिणामपि च श्रुतम् ॐ** १३

ॐ **संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात् ॐ** १४

ॐ **स्मरन्ति च ॐ** १५

अपिसप्ताधिकरणम् - १२

ॐ **अपि सप्त ॐ** १६

तत्राप्यधिकरणम् - १३

ॐ **तत्रापि च तद्व्यापारादविरोधः ॐ** १७

विद्याधिकरणम् - १४

ॐ **विद्याकर्मणोरिति तु प्रकृतत्वात् ॐ** १८

नतृतीयाधिकरणम् - १५

ॐ **न तृतीये तथोपलब्धेः ॐ** १९

ॐ **स्मर्यतेऽपि च लोके ॐ** २०

ॐ **दर्शनाच्च ॐ** २१

ॐ **तृतीये शब्दावरोधः संशोकजस्य ॐ** २२

ॐ **स्मरणाच्च ॐ** २३

तत्स्वाभाव्याधिकरणम् - १६

ॐ **तत्स्वाभाव्यापत्तिरुपपत्तेः ॐ** २४

नातिचिरेणाधिकरणम् - १७

ॐ **नातिचिरेण विशेषात् ॐ** २५

अन्याधिकरणम् - १८

**ॐ अन्याधिष्ठिते पूर्ववदभिलापात् ॐ** २६

**ॐ अशुद्धमिति चेन्न शब्दात् ॐ** २७

रेतोऽधिकरणम् - १९

**ॐ रेतःसिग्योगोऽथ ॐ** २८

योन्यधिकरणम् - २०

**ॐ योनेः शरीरम् ॐ** २९

।। इति तृतीयाध्यायस्य प्रथमः पादः ।।

## द्वितीयः पादः

सन्ध्याधिकरणम् - १

**ॐ सन्ध्ये सृष्टिराह हि ॐ** १

**ॐ निर्मातारं चैके पुत्रादयश्च ॐ** २

**ॐ मायामात्रं तु कार्त्स्न्र्येनानभिव्यक्तस्वरूपत्वात् ॐ** ३

**ॐ सूचकश्च हि श्रुतेराचक्षते च तद्विदः ॐ** ४

पराभिध्यानाधिकरणम् - २

**ॐ पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ ॐ** ५

देहयोगाधिकरणम् - ३

**ॐ देहयोगाद्वासोऽपि ॐ** ६

तदभावाधिकरणम् - ४

**ॐ तदभावो नाडीषु तच्छ्रुतेरात्मनि ह ॐ** ७

अनिष्टाधिकरणम् - ११

ॐ अनिष्टादिकारिणामपि च श्रुतम् ॐ १३
ॐ संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात् ॐ १४
ॐ स्मरन्ति च ॐ १५

अपिसप्ताधिकरणम् - १२

ॐ अपि सप्त ॐ १६

तत्राप्यधिकरणम् - १३

ॐ तत्रापि च तद्व्यापारादविरोधः ॐ १७

विद्याधिकरणम् - १४

ॐ विद्याकर्मणोरिति तु प्रकृतत्वात् ॐ १८

नतृतीयाधिकरणम् - १५

ॐ न तृतीये तथोपलब्धेः ॐ १९
ॐ स्मर्यतेऽपि च लोके ॐ २०
ॐ दर्शनाच्च ॐ २१
ॐ तृतीये शब्दावरोधः संशोकजस्य ॐ २२
ॐ स्मरणाच्च ॐ २३

तत्स्वाभाव्याधिकरणम् - १६

ॐ तत्स्वाभाव्यापत्तिरुपपत्तेः ॐ २४

नातिचिरेणाधिकरणम् - १७

ॐ नातिचिरेण विशेषात् ॐ २५

अन्याधिकरणम् - १८

ॐ अन्याधिष्ठिते पूर्ववदभिलापात् ॐ २६

ॐ अशुद्धमिति चेन्न शब्दात् ॐ २७

रेतोऽधिकरणम् - १९

ॐ रेतःसिग्योगोऽथ ॐ २८

योन्यधिकरणम् - २०

ॐ योनेः शरीरम् ॐ २९

।। इति तृतीयाध्यायस्य प्रथमः पादः ।।

## द्वितीयः पादः

सन्ध्याधिकरणम् - १

ॐ सन्ध्ये सृष्टिराह हि ॐ १

ॐ निर्मातारं चैके पुत्रादयश्च ॐ २

ॐ मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात् ॐ ३

ॐ सूचकश्च हि श्रुतेराचक्षते च तद्विदः ॐ ४

पराभिध्यानाधिकरणम् - २

ॐ पराभिध्यानात्तु तिरोहितं ततो ह्यस्य
बन्धविपर्ययौ ॐ ५

देहयोगाधिकरणम् - ३

ॐ देहयोगाद्वासोऽपि ॐ ६

तदभावाधिकरणम् - ४

ॐ तदभावो नाडीषु तच्छ्रुतेरात्मनि ह ॐ ७

प्रबोधाधिकरणम् - ५

ॐ अतः प्रबोधोऽस्मात् ॐ ८

कर्मानुस्मृत्यधिकरणम् - ६

ॐ स एव च कर्मानुस्मृतिशब्दविधिभ्यः ॐ ९

सम्पत्त्यधिकरणम् - ७

ॐ मुग्धेऽर्धसम्पत्तिः परिशेषात् ॐ १०

न स्थानतोऽप्यधिकरणम् - ८

ॐ न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि ॐ ११

ॐ न भेदादिति चेन्न प्रत्येकमतद्वचनात् ॐ १२

ॐ अपि चैवमेके ॐ १३

अरूपाधिकरणम् - ९

ॐ अरूपवदेव हि तत्प्रधानत्वात् ॐ १४

ॐ प्रकाशवच्चावैयर्थ्यम् ॐ १५

ॐ आह च तन्मात्रम् ॐ १६

ॐ दर्शयति चाथो अपि स्मर्यते ॐ १७

उपमाधिकरणम् - १०

ॐ अत एव चोपमा सूर्यकादिवत् ॐ १८

अम्बुवदधिकरणम् - ११

ॐ अम्बुवदग्रहणात्तु न तथात्वम् ॐ १९

वृद्धिह्रासाधिकरणम् - १२

ॐ वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवम् ॐ २०

ॐ दर्शनाच्च ॐ २१

पालकत्वाधिकरणम् - १३

ॐ प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः ॐ २२

अव्यक्तत्वाधिकरणम् - १४

ॐ तदव्यक्तमाह हि ॐ २३
ॐ अपि संराधने प्रत्यक्षानुमानाभ्याम् ॐ २४
ॐ प्रकाशवचावैशेष्यम् ॐ २५
ॐ प्रकाशश्च कर्मण्यभ्यासात् ॐ २६
ॐ अतोऽनन्तेन तथा हि लिङ्गम् ॐ २७

उभयव्यपदेशाधिकरणम् - १५

ॐ उभयव्यपदेशात्त्वहिकुण्डलवत् ॐ २८
ॐ प्रकाशाश्रयवद्वा तेजस्त्वात् ॐ २९
ॐ पूर्ववद्वा ॐ ३०
ॐ प्रतिषेधाच्च ॐ ३१

परमता(परानन्दा)धिकरणम् - १६

ॐ परमतः सेतून्मानसम्बन्धभेदव्यपदेशेभ्यः ॐ ३२
ॐ दर्शनात् ॐ ३३
ॐ बुद्ध्यर्थः पादवत् ॐ ३४

स्थानविशेषाधिकरणम् - १७

ॐ स्थानविशेषात्प्रकाशादिवत् ॐ ३५
ॐ उपपत्तेश्च ॐ ३६

तथान्यत्वाधिकरणम् - १८

ॐ तथाऽन्यत्प्रतिषेधात् ॐ ३७

सर्वगतत्वाधिकरणम् - १९

**ॐ अनेन सर्वगतत्वमायामयशब्दादिभ्यः ॐ ३८**

फलाधिकरणम् - २०

**ॐ फलमत उपपत्तेः ॐ ३९**

**ॐ श्रुतत्वाच्च ॐ ४०**

**ॐ धर्मं जैमिनिरत एव ॐ ४१**

**ॐ पूर्वं तु बादरायणो हेतुव्यपदेशात् ॐ ४२**

।। इति तृतीयाध्यायस्य द्वितीयः पादः ।।

## तृतीयः पादः

सर्ववेदान्तप्रत्ययाधिकरणम् - १

**ॐ सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात् ॐ १**

**ॐ भेदान्नेति चेदेकस्यामपि ॐ २**

**ॐ स्वाध्यायस्य तथात्वेन हि समाचारेऽधिकाराच्च ॐ ३**

**ॐ सलिलवच्च तन्नियमः ॐ ४**

**ॐ दर्शयति च ॐ ५**

उपसंहाराधिकरणम् - २

**ॐ उपसंहारोऽर्थाभेदाद्विधिशेषवत्समाने च ॐ ६**

**ॐ अन्यथात्वं (च) शब्दादिति चेन्नाविशेषात् ॐ ७**

**ॐ न वा प्रकरणभेदात्परोवरीयस्त्वादिवत् ॐ ८**

**ॐ संज्ञातश्चेत्तदुक्तमस्ति तु तदपि ॐ ९**

प्राप्त्यधिकरणम् - ३

ॐ **प्राप्तेश्च समञ्जसम्** ॐ १०

सर्वाभेदाधिकरणम् - ४

ॐ **सर्वाभेदादन्यत्रेमे** ॐ ११

आनन्दाद्यधिकरणम् - ५

ॐ **आनन्दादयः प्रधानस्य** ॐ १२

प्रियशिरस्त्वाधिकरणम् - ६

ॐ **प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे** ॐ १३

इतराधिकरणम् - ७

ॐ **इतरे त्वर्थसामान्यात्** ॐ १४

आध्यानाधिकरणम् - ८

ॐ **आध्यानाय प्रयोजनाभावात्** ॐ १५

ॐ **आत्मशब्दाच्च** ॐ १६

आत्मगृहीत्यधिकरणम् - ९

ॐ **आत्मगृहीतिरितरवदुत्तरात्** ॐ १७

अन्वयाधिकरणम् - १०

ॐ **अन्वयादिति चेत्स्यादवधारणात्** ॐ १८

कार्याधिकरणम् - ११

ॐ **कार्याख्यानादपूर्वम्** ॐ १९

समानाधिकरणम् - १२

ॐ **समान एवञ्चाभेदात्** ॐ २०

ॐ सम्बन्धादेवमन्यत्रापि ॐ २१

न वाधिकरणम् - १३

ॐ न वा विशेषात् ॐ २२

ॐ दर्शयति च ॐ २३

सम्भृत्यधिकरणम् - १४

ॐ सम्भृतिद्युव्याप्त्यपि चातः ॐ २४

पुरुषाधिकरणम् - १५

ॐ पुरुषविद्यायामपि चेतरेषामनाम्नानात् ॐ २५

वेधाद्यधिकरणम् - १६

ॐ वेधाद्यर्थभेदात् ॐ २६

हान्यधिकरणम् - १७

ॐ हानौ तूपायनशब्दशेषत्वात्कुशाछन्द-
स्तुत्युपगानवत्तदुक्तम् ॐ २७

ॐ साम्पराये तर्तव्याभावात्तथा ह्यन्ये ॐ २८

छन्दाधिकरणम् - १८

ॐ छन्दत उभयाविरोधात् ॐ २९

ॐ गतेरर्थवत्त्वमुभयथाऽन्यथा हि विरोधः ॐ ३०

ॐ उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत् ॐ ३१

अनियमाधिकरणम् - १९

ॐ अनियमः सर्वेषामविरोधाच्छब्दानुमानाभ्याम् ॐ ३२

यावदधिकरणम् - २०

ॐ **यावदधिकारमवस्थितिराधिकारिकाणाम्** ॐ ३३
ॐ **अक्षरधियां त्वविरोधः**
**सामान्यतद्भावाभ्यामौपसदवत्तदुक्तम्** ॐ ३४

इयदामननाधिकरणम् - २१

ॐ **इयदामननात्** ॐ ३५
ॐ **अन्तरा भूतग्रामवदिति चेत्तदुक्तम्** ॐ ३६
ॐ **अन्यथा भेदानुपपत्तिरिति चेन्नोपदेशवत्** ॐ ३७

व्यतिहाराधिकरणम् - २२

ॐ **व्यतिहारो विशिंषन्ति हीतरवत्** ॐ ३८

सत्याधिकरणम् - २३

ॐ **सैव हि सत्यादयः** ॐ ३९

कामाधिकरणम् - २४

ॐ **कामादितरत्र तत्र चाऽऽयतनादिभ्यः** ॐ ४०
ॐ **आदरादलोपः** ॐ ४१
ॐ **उपस्थितेस्तद्वचनात्** ॐ ४२

निर्धारणाधिकरणम् - २५

ॐ **तन्निर्धारणार्थनियमस्तद्दृष्टेः पृथग्घ्य-**
**प्रतिबन्धः फलम्** ॐ ४३

प्रदानाधिकरणम् - २६

ॐ **प्रदानवदेव हि तदुक्तम्** ॐ ४४

लिङ्गभूयस्त्वाधिकरणम् - २७

ॐ **लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि ॐ** ४५

पूर्वविकल्पाधिकरणम् - २८

ॐ **पूर्वविकल्पः प्रकरणात्स्यात्क्रियामानसवत् ॐ** ४६

ॐ **अतिदेशाच्च ॐ** ४७

विद्याधिकरणम् - २९

ॐ **विद्यैव तु निर्धारणात् ॐ** ४८

ॐ **दर्शनाच्च ॐ** ४९

श्रुत्यधिकरणम् - ३०

ॐ **श्रुत्यादिबलीयस्त्वाच्च न बाधः ॐ** ५०

अनुबन्धाधिकरणम् - ३१

ॐ **अनुबन्धादिभ्यः ॐ** ५१

प्रज्ञान्तराधिकरणम् - ३२

ॐ **प्रज्ञान्तरपृथक्त्ववद्दृष्टिश्च तदुक्तम् ॐ** ५२

न सामान्याधिकरणम् - ३३

ॐ **न सामान्यादप्युपलब्धेर्मृत्युवन्न हि लोकापत्तिः ॐ** ५३

परेणाधिकरणम् - ३४

ॐ **परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः ॐ** ५४

एकाधिकरणम् - ३५

ॐ **एक आत्मनश्शरीरे भावात् ॐ** ५५

ॐ **व्यतिरेकस्तद्भावभावित्वान्न तूपलब्धिवत् ॐ** ५६

अङ्गावबद्धाधिकरणम् - ३६

ॐ **अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम् ॐ** ५७

ॐ **मन्त्रादिवद्वाऽविरोधः ॐ** ५८

भूमाधिकरणम् - ३७

ॐ **भूम्नः क्रतुवज्ज्यायस्त्वं तथा च दर्शयति ॐ** ५९

नानाशब्दाधिकरणम् - ३८

ॐ **नाना शब्दादिभेदात् ॐ** ६०

विकल्पाधिकरणम् - ३९

ॐ **विकल्पो विशिष्टफलत्वात् ॐ** ६१

काम्याधिकरणम् - ४०

ॐ **काम्यास्तु यथाकामं समुच्चीयेरन्न**
**वा पूर्वहेत्वभावात् ॐ** ६२

अङ्गाधिकरणम् - ४१

ॐ **अङ्गेषु यथाऽऽश्रयभावः ॐ** ६३

ॐ **शिष्टेश्च ॐ** ६४

ॐ **समाहारात् ॐ** ६५

ॐ **गुणसाधारण्यश्रुतेश्च ॐ** ६६

नवाधिकरणम् - ४२

ॐ **न वाऽतत्सहभावश्रुतेः ॐ** ६७

ॐ **दर्शनाच्च ॐ** ६८

।। इति तृतीयाध्यायस्य तृतीयः पादः ।।

# चतुर्थः पादः

## पुरुषार्थाधिकरणम् - १

ॐ पुरुषार्थोऽतःशब्दादिति बादरायणः ॐ १
ॐ शेषत्वात्पुरुषार्थवादो यथाऽन्येष्विति जैमिनिः ॐ २
ॐ आचारदर्शनात् ॐ ३
ॐ तच्छ्रुतेः ॐ ४
ॐ समन्वारम्भणात् ॐ ५
ॐ तद्वतो विधानात् ॐ ६
ॐ नियमाच्च ॐ ७
ॐ अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात् ॐ ८
ॐ तुल्यं तु दर्शनम् ॐ ९

## असार्वत्रिकाधिकरणम् - २

ॐ असार्वत्रिकी ॐ १०
ॐ विभागश्शतवत् ॐ ११
ॐ अध्ययनमात्रवतः ॐ १२

## अविशेषाधिकरणम् - ३

ॐ नाविशेषात् ॐ १३

## स्तुत्यधिकरणम् - ४

ॐ स्तुतयेऽनुमतिर्वा ॐ १४
ॐ कामकारेण चैके ॐ १५
ॐ उपमर्दं च ॐ १६
ॐ ऊर्ध्वरेतस्सु च शब्दे हि ॐ १७
ॐ परामर्शं जैमिनिरचोदना चापवदति हि ॐ १८

ॐ अनुष्ठेयं बादरायणः साम्यश्रुतेः ॐ १९
ॐ विधिर्वा धारणवत् ॐ २०
ॐ स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात् ॐ २१
ॐ भावशब्दाच्च ॐ २२
ॐ पारिप्लवार्था इति चेन्न विशेषितत्वात् ॐ २३
ॐ तथा चैकवाक्योपबन्धात् ॐ २४
ॐ अत एव चाग्नीन्धनाद्यनपेक्षा ॐ २५
ॐ सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् ॐ २६
ॐ शमदमाद्युपेतः स्यात्तथाऽपि तु
तद्विधेस्तदङ्गतया तेषामवश्यानुष्ठेयत्वात् ॐ २७
ॐ सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् ॐ २८
ॐ अबाधाच्च ॐ २९
ॐ अपि स्मर्यते ॐ ३०
ॐ शब्दश्चातोऽकामचारे ॐ ३१
ॐ विहितत्वाच्चाऽऽश्रमकर्माऽपि ॐ ३२
ॐ सहकारित्वेन च ॐ ३३

उभयलिङ्गाधिकरणम् - ५

ॐ सर्वथाऽपि तु त एवोभयलिङ्गात् ॐ ३४
ॐ अनभिभवं च दर्शयति ॐ ३५
ॐ अन्तरा चापि तु तद्दृष्टेः ॐ ३६
ॐ अपि स्मर्यते ॐ ३७
ॐ विशेषानुग्रहं च ॐ ३८
ॐ अतस्त्वितरज्ज्यायो लिङ्गाच्च ॐ ३९

ॐ तद्भूतस्य तु तद्भावो जैमिनेरपि
नियमातद्रूपाऽभावेभ्यः ॐ ४०

आधिकारिकाधिकरणम् - ६

ॐ न चाऽधिकारिकमपि पतनानुमानात्तदयोगात् ॐ ४१
ॐ उपपूर्वमपीत्येके भावशमनवत्तदुक्तम् ॐ ४२
ॐ बहिस्तूभयथाऽपि स्मृतेराचाराच्च ॐ ४३

फलश्रुत्यधिकरणम् - ७

ॐ स्वामिनः फलश्रुतेरित्यात्रेयः ॐ ४४
ॐ आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रियते ॐ ४५
ॐ सहकार्यन्तरविधिः पक्षेण तृतीयं
तद्वतो विध्यादिवत् ॐ ४६

कृत्स्नभावाधिकरणम् - ८

ॐ कृत्स्नभावात्तु गृहिणोपसंहारः ॐ ४७
ॐ मौनवदितरेषामप्युपदेशात् ॐ ४८

अन्वयाधिकरणम् - ९

ॐ अनाविष्कुर्वन्नन्वयात् ॐ ४९

ऐहिकाधिकरणम् - १०

ॐ ऐहिकमप्रस्तुतप्रतिबन्धे तद्दर्शनात् ॐ ५०

मुक्तिफलाधिकरणम् - ११

ॐ एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदव-
स्थावधृतेः ॐ ५१

।। इति तृतीयाध्यायस्य चतुर्थः पादः ।।

।। तृतीयाध्यायः समाप्तः ।।

# चतुर्थाध्यायस्य प्रथमः पादः

आवृत्त्यधिकरणम् - १

ॐ **आवृत्तिरसकृदुपदेशात्** ॐ १
ॐ **लिङ्गाच्च** ॐ २

आत्माधिकरणम् - २

ॐ **आत्मेति तूपगच्छन्ति ग्राहयन्ति च** ॐ ३

नप्रतीकाधिकरणम् - ३

ॐ **न प्रतीके न हि सः** ॐ ४

ब्रह्माधिकरणम् - ४

ॐ **ब्रह्मदृष्टिरुत्कर्षात्** ॐ ५

आदित्याधिकरणम् - ५

ॐ **आदित्यादिमतयश्चाङ्ग उपपत्तेः** ॐ ६

आसीनाधिकरणम् - ६

ॐ **आसीनस्सम्भवात्** ॐ ७
ॐ **ध्यानाच्च** ॐ ८
ॐ **अचलत्वं चापेक्ष्य** ॐ ९
ॐ **स्मरन्ति च** ॐ १०
ॐ **यत्रैकाग्रता तत्राविशेषात्** ॐ ११

आप्रायणाधिकरणम् - ७

ॐ **आ प्रायणात्तत्रापि हि दृष्टम्** ॐ १२

तदधिगमाधिकरणम् - ८

ॐ तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ
तद्व्यपदेशात् ॐ १३

ॐ इतरस्याप्येवमसंश्लेषः पाते तु ॐ १४

ॐ अनारब्धकार्ये एव तु पूर्वे तदवधेः ॐ १५

ॐ अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् ॐ १६

ॐ अतोऽन्यदपीत्येकेषामुभयोः ॐ १७

ॐ यदेव विद्ययेति हि ॐ १८

ॐ भोगेन त्वितरे क्षपयित्वाऽथ सम्पत्स्यते ॐ १९

।। इति चतुर्थाध्यायस्य प्रथमः पादः ।।

## द्वितीयः पादः

वाङ्मनसाधिकरणम् - १

ॐ वाङ्मनसि दर्शनाच्छब्दाच्च ॐ १

ॐ अत एव च सर्वाण्यनु ॐ २

मनः प्राणाऽधिकरणम् - २

ॐ तन्मनः प्राण उत्तरात् ॐ ३

अध्यक्षाधिकरणम् - ३

ॐ सोऽध्यक्षे तदुपगमादिभ्यः ॐ ४

भूताधिकरणम् - ४

ॐ भूतेषु तच्छ्रुतेः ॐ ५

नैकस्मिन्नधिकरणम् - ५

ॐ नैकस्मिन् दर्शयतो हि ॐ ६

समनाधिकरणम् - ६

ॐ समना चासृत्युपक्रमादमृतत्वं चानुपोष्य ॐ ७

ॐ तदपीतेः संसारव्यपदेशात् ॐ ८

ॐ सूक्ष्मं प्रमाणतश्च तथोपलब्धेः ॐ ९

ॐ नोपमर्देनातः ॐ १०

ॐ अस्यैव चोपपत्तेरूष्मा ॐ ११

ॐ प्रतिषेधादिति चेन्न शारीरात् ॐ १२

ॐ स्पष्टो ह्येकेषाम् ॐ १३

ॐ स्मर्यते च ॐ १४

परा(लया)धिकरणम् - ७

ॐ तानि परे तथा ह्याह ॐ १५

अविभागाधिकरणम् - ८

ॐ अविभागो वचनात् ॐ १६

हृदयाग्रज्वलना(तदोकोऽ)धिकरणम् - ९

ॐ तदोकोऽग्रज्वलनं तत्प्रकाशितद्वारो
विद्यासामर्थ्यात्तच्छेषगत्यनुस्मृतियोगाच्च
हार्दानुगृहीतः शताधिकया ॐ १७

ॐ रश्म्यनुसारी ॐ १८

ॐ निशि नेति चेन्न सम्बन्धात् ॐ १९

ॐ यावद्देहभावित्वाद्दर्शयति च ॐ २०

ॐ अतश्चायनेऽपि हि दक्षिणे ॐ २१

योग्यधिकरणम् - १०

**ॐ योगिनः प्रति स्मर्येते स्मार्ते चैते ॐ** २२

।। इति चतुर्थाध्यायस्य द्वितीयः पादः ।।

## तृतीयः पादः

अर्चिराद्यधिकरणम् - १

**ॐ अर्चिरादिना तत्प्रथितेः ॐ** १

वायुशब्दाधिकरणम् - २

**ॐ वायुशब्दादविशेषविशेषाभ्याम् ॐ** २

तटिदधिकरणम् - ३

**ॐ तटितोऽधि वरुणस्सम्बन्धात् ॐ** ३

आतिवाहिकाधिकरणम् - ४

**ॐ आतिवाहिकस्तल्लिङ्गात् ॐ** ४

**ॐ उभयव्यामोहात्तत्सिद्धेः ॐ** ५

वैद्युताधिकरणम् - ५

**ॐ वैद्युतेनैव ततस्तच्छ्रुतेः ॐ** ६

कार्याधिकरणम् - ६

**ॐ कार्यं बादरिरस्य गत्युपपत्तेः ॐ** ७

**ॐ विशेषितत्वाच्च ॐ** ८

**ॐ सामीप्यात्तु तद्व्यपदेशः ॐ** ९

**ॐ कार्यात्यये तदध्यक्षेण सहातः परमभिधानात् ॐ** १०

**ॐ स्मृतेश्च ॐ** ११

ॐ परं जैमिनिर्मुख्यत्वात् ॐ १२
ॐ दर्शनाच्च ॐ १३
ॐ न च कार्ये प्रतिपत्त्यभिसन्धिः ॐ १४
ॐ अप्रतीकालम्बनान्नयतीति बादरायण उभयथा च दोषात्तत्क्रतुश्च ॐ १५
ॐ विशेषं च दर्शयति ॐ १६

।। इति चतुर्थाध्यायस्य तृतीयः पादः ।।

## चतुर्थः पादः

सम्पद्याधिकरणम् - १

ॐ सम्पद्याविहाय स्वेन शब्दात् ॐ १

मुक्ताधिकरणम् - २

ॐ मुक्तः प्रतिज्ञानात् ॐ २

आत्माधिकरणम् - ३

ॐ आत्मा प्रकरणात् ॐ ३

अविभागाधिकरणम् - ४

ॐ अविभागेन दृष्टत्वात् ॐ ४

ब्राह्माधिकरणम् - ५

ॐ ब्राह्मेण जैमिनिरुपन्यासादिभ्यः ॐ ५
ॐ चितिमात्रेण तदात्मकत्वादित्यौडुलोमिः ॐ ६
ॐ एवमप्युपन्यासात्पूर्वभावादविरोधं बादरायणः ॐ ७

सङ्कल्पाधिकरणम् - ६

ॐ सङ्कल्पादेव च तच्छ्रुतेः ॐ ८

अनन्याधिपत्यधिकरणम् - ७

ॐ अत एव चानन्याधिपतिः ॐ ९

अभावाधिकरणम् - ८

ॐ अभावं बादरिराह ह्येवम् ॐ १०

ॐ भावं जैमिनिर्विकल्पाम्नानात् ॐ ११

ॐ द्वादशाहवदुभयविधं बादरायणोऽतः ॐ १२

ॐ तन्वभावे सन्ध्यवदुपपत्तेः ॐ १३

ॐ भावे जाग्रद्वत् ॐ १४

ॐ प्रदीपवदावेशस्तथा हि दर्शयति ॐ १५

ॐ स्वाप्ययसम्पत्त्योरन्यतरापेक्षमाविष्कृतं हि ॐ १६

जगद्व्यापाराधिकरणम् - ९

ॐ जगद्व्यापारवर्जम् ॐ १७

ॐ प्रकरणादसन्निहितत्वाच्च ॐ १८

ॐ प्रत्यक्षोपदेशादिति चेन्नाऽऽधिकारिक-
मण्डलस्थोक्तेः ॐ १९

ॐ विकारावर्ति च तथाहि दर्शयति ॐ २०

स्थित्यधिकरणम् - १०

ॐ स्थितिमाह दर्शयतश्चैवं प्रत्यक्षानुमाने ॐ २१

ॐ भोगमात्रसाम्यलिङ्गाच्च ॐ २२

अनावृत्त्यधिकरणम् - ११

ॐ अनावृत्तिश्शब्दादनावृत्तिश्शब्दात् ॐ २३

।। इति चतुर्थाध्यायस्य चतुर्थः पादः ।।

।। चतुर्थाध्यायः समाप्तः ।।

।। श्रीकृष्णार्पणमस्तु ।।

।। श्रीः ।।

श्रीमदानन्दतीर्थभगवत्पादाचार्यप्रणीतसर्वमूलग्रन्थाः

# ब्रह्मसूत्रभाष्यम्

।। श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मक-
श्रीलक्ष्मीहयग्रीवाय नमः ।।

## प्रथमाध्यायस्य प्रथमः पादः

नारायणं गुणैस्सर्वैरुदीर्णं दोषवर्जितम् ।
ज्ञेयं गम्यं गुरूंश्चापि नत्वा सूत्रार्थ उच्यते ।।

द्वापरे सर्वत्र ज्ञान आकुलीभूते तन्निर्णयाय ब्रह्मरुद्रेन्द्रादिभिरर्थितो भगवान् नारायणो व्यासत्वेनाववतार । अथेष्टानिष्टप्राप्तिपरिहारेच्छूनां तद्योगमविजानतां तज्ज्ञापनार्थं वेदमुत्सन्नं व्यञ्जयन् चतुर्धा व्यभजत्, चतुर्विंशतिधा एकशतधा सहस्रधा द्वादशधा च । तदर्थनिर्णयाय ब्रह्मसूत्राणि चकार ।

तच्चोक्तं स्कान्दे—

नारायणाद्विनिष्पन्नं ज्ञानं कृतयुगे स्थितम् ।
किञ्चित्तदन्यथा जातं त्रेतायां द्वापरेऽखिलम् ।।
गौतमस्य ऋषेः शापात् ज्ञाने त्वज्ञानतां गते ।
सङ्कीर्णबुद्धयो देवा ब्रह्मरुद्रपुरस्सराः ।।
शरण्यं शरणं जग्मुर्नारायणमनामयम् ।
तैर्विज्ञापितकार्यस्तु भगवान् पुरुषोत्तमः ।।

अनन्याधिपत्यधिकरणम् - ७

ॐ अत एव चानन्याधिपतिः ॐ ९

अभावाधिकरणम् - ८

ॐ अभावं बादरिराह ह्येवम् ॐ १०

ॐ भावं जैमिनिर्विकल्पाम्नानात् ॐ ११

ॐ द्वादशाहवदुभयविधं बादरायणोऽतः ॐ १२

ॐ तन्वभावे सन्ध्यवदुपपत्तेः ॐ १३

ॐ भावे जाग्रद्वत् ॐ १४

ॐ प्रदीपवदावेशस्तथा हि दर्शयति ॐ १५

ॐ स्वाप्ययसम्पत्त्योरन्यतरापेक्षमाविष्कृतं हि ॐ १६

जगद्व्यापाराधिकरणम् - ९

ॐ जगद्व्यापारवर्जम् ॐ १७

ॐ प्रकरणादसन्निहितत्वाच्च ॐ १८

ॐ प्रत्यक्षोपदेशादिति चेन्नाऽऽधिकारिक-
मण्डलस्थोक्तेः ॐ १९

ॐ विकारावर्ति च तथाहि दर्शयति ॐ २०

स्थित्यधिकरणम् - १०

ॐ स्थितिमाह दर्शयतश्चैवं प्रत्यक्षानुमाने ॐ २१

ॐ भोगमात्रसाम्यलिङ्गाच्च ॐ २२

अनावृत्त्यधिकरणम् - ११

ॐ अनावृत्तिश्शब्दादनावृत्तिश्शब्दात् ॐ २३

।। इति चतुर्थाध्यायस्य चतुर्थः पादः ।।

।। चतुर्थाध्यायः समाप्तः ।।

।। श्रीकृष्णार्पणमस्तु ।।

।। श्रीः ।।

श्रीमदानन्दतीर्थभगवत्पादाचार्यप्रणीतसर्वमूलग्रन्थाः

# ब्रह्मसूत्रभाष्यम्

।। श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मक-
श्रीलक्ष्मीहयग्रीवाय नमः ।।

## प्रथमाध्यायस्य प्रथमः पादः

नारायणं गुणैस्सर्वैरुदीर्णं दोषवर्जितम् ।
ज्ञेयं गम्यं गुरूंश्चापि नत्वा सूत्रार्थ उच्यते ।।

द्वापरे सर्वत्र ज्ञान आकुलीभूते तन्निर्णयाय ब्रह्मरुद्रेन्द्रादिभिरर्थितो भगवान् नारायणो व्यासत्वेनावततार । अथेष्टानिष्टप्राप्तिपरिहारेच्छूनां तद्योगमविजानतां तज्ज्ञापनार्थं वेदमुत्सन्नं व्यञ्जयन् चतुर्धा व्यभजत्, चतुर्विंशतिधा एकशतधा सहस्रधा द्वादशधा च । तदर्थनिर्णयाय ब्रह्मसूत्राणि चकार ।

तच्चोक्तं स्कान्दे—

नारायणाद्विनिष्पन्नं ज्ञानं कृतयुगे स्थितम् ।
किञ्चित्तदन्यथा जातं त्रेतायां द्वापरेऽखिलम् ।।
गौतमस्य ऋषेः शापात् ज्ञाने त्वज्ञानतां गते ।
सङ्कीर्णबुद्धयो देवा ब्रह्मरुद्रपुरस्सराः ।।
शरण्यं शरणं जग्मुर्नारायणमनामयम् ।
तैर्विज्ञापितकार्यस्तु भगवान् पुरुषोत्तमः ।।

अवतीर्णो महायोगी सत्यवत्यां पराशरात् ।
उत्सन्नान् भगवान्वेदानुज्जहार हरिस्स्वयम् ।।
चतुर्धा व्यभजत्तांश्च चतुर्विंशतिधा पुनः ।
शतधा चैकधा चैव तथैव च सहस्रधा ।।
कृष्णो द्वादशधा चैव पुनस्तस्यार्थवित्तये ।
चकार ब्रह्मसूत्राणि येषां सूत्रत्वमञ्जसा ।।
अल्पाक्षरमसन्दिग्धं सारवद्विश्वतोमुखम् ।
अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुः ।।
निर्विशेषितसूत्रत्वं ब्रह्मसूत्रस्य चाप्यतः ।
यथा व्यासत्वमेकस्य कृष्णस्यान्ये विशेषणात् ।।
सविशेषणसूत्राणि ह्यपराणि विदो विदुः ।
मुख्यस्य निर्विशेषेण शब्दोऽन्येषां विशेषतः ।।
इति वेदविदः प्राहुः शब्दतत्त्वार्थवेदिनः ।
सूत्रेषु येषु सर्वेऽपि निर्णयास्समुदीरिताः ।।
शब्दजातस्य सर्वस्य यत्प्रमाणश्च निर्णयः ।
एवं विधानि सूत्राणि कृत्वा व्यासो महायशाः ।।
ब्रह्मरुद्रादिदेवेषु मनुष्यपितृपक्षिषु ।
ज्ञानं संस्थाप्य भगवान् क्रीडते पुरुषोत्तमः ।। इत्यादि ।

## जिज्ञासाधिकरणम् - १

**।। ॐ ॐ अथातो ब्रह्मजिज्ञासा ॐ ।। १ ।।**

'अथ'शब्दो मङ्गलार्थोऽधिकारानन्तर्यार्थश्च । अतश्शब्दो हेत्वर्थः ।

उक्तं च गारुडे—

अथातश्शब्दपूर्वाणि सूत्राणि निखिलान्यपि ।
प्रारभन्ते नियत्यैव तत्किमत्र नियामकम् ।।
कश्चार्थश्च तयोर्विद्वन् कथमुत्तमता तयोः ।
एतदाख्याहि मे ब्रह्मन् यथा ज्ञास्यामि तत्त्वतः ।।
एवमुक्तो नारदेन ब्रह्मा प्रोवाच सत्तमः ।
आनन्तर्येऽधिकारस्य मङ्गलार्थे तथैव च ।।
अथशब्दस्त्वतश्शब्दो हेत्वर्थे समुदीरितः ।
परस्य ब्रह्मणो विष्णोः प्रसादादिति वा भवेत् ।।
स हि सर्वमनोवृत्तिप्रेरकस्समुदाहृतः ।
सिसृक्षोः परमाद्विष्णोः प्रथमं द्वौ विनिस्सृतौ ।।
ओङ्कारश्चाथशब्दश्च तस्मात्प्राथमिकौ क्रमात् ।
तद्धेतुत्वं वदंश्चापि तृतीयोऽत उदाहृतः ।।
अकारस्सर्ववागात्मा परब्रह्माभिधायकः ।
तथौ प्राणात्मकौ प्रोक्तौ व्याप्तिस्थितिविधायकौ ।।
अतश्च पूर्वमुचार्याः सर्व एते सतां मताः ।
अथातश्शब्दयोरेवं वीर्यमाज्ञाय तत्त्वतः ।
सूत्रेषु तु महाप्राज्ञास्तावेवादौ प्रयुञ्जते ।। इति ।

अधिकारश्चोक्तो भागवततन्त्रे—

'मन्दमध्योत्तमत्वेन त्रिविधा ह्यधिकारिणः ।
तत्र मन्दा मनुष्येषु य उत्तमगणा मताः ।।

मध्यमा ऋषिगन्धर्वा देवास्तत्रोत्तमा मताः ।
इति जातिकृतो भेदस्तथाऽन्यो गुणपूर्वकः ।।
भक्तिमान् परमे विष्णौ यस्त्वध्ययनवान्नरः ।
अधमः शमादिसंयुक्तो मध्यमस्समुदाहृतः ।।
आब्रह्मस्तम्बपर्यन्तमसारं चाप्यनित्यकम् ।
विज्ञाय जातवैराग्यो विष्णुपादैकसंश्रयः ।।
स उत्तमोऽधिकारी स्यात्सन्यस्ताखिलकर्मवान्' ।। इति ।

'अध्ययनमात्रवतः' (ब्र.सू.३-४-१२) । 'नाविशेषात्' (ब्र.सू. ३-४-१३) इति चोपरि ।

'शान्तो दान्त उपरतस्तितिक्षुस्समाहितो भूत्वाऽऽत्मन्येवाऽऽत्मानं पश्येत्' (बृ.उ.६-४-२३) 'परीक्ष्य लोकान्कर्मचितान्ब्राह्मणो निर्वेदमायात् । नास्त्यकृतः कृतेन । तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्' । (मुं.उ.१-२-१२)

'यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्' । (क.उ.२-२३)

'यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः' ।।
(श्वे.उ.६-२३) इत्यादि श्रुतिभ्यश्च ।

व्योमसंहितायां च—

'अन्त्यजा अपि ये भक्ता नामज्ञानाधिकारिणः ।
स्त्रीशूद्रब्रह्मबन्धूनां तन्त्रज्ञानेऽधिकारिता ॥
एकदेशे परोक्ते तु न तु ग्रन्थपुरस्सरे ।
त्रैवर्णिकानां वेदोक्ते सम्यग्भक्तिमतां हरौ ॥
आहुरप्युत्तमस्त्रीणामधिकारं तु वैदिके ।
यथोर्वशी यमी चैव शच्याद्याश्च तथाऽपराः' ॥ इति ॥

यतो नारायणप्रसादमृते न मोक्षः, न च ज्ञानं विनाऽत्यर्थ-प्रसादः, अतो ब्रह्मजिज्ञासा कर्तव्या ।

'यत्रानवसरोऽन्यत्र पदं तत्र प्रतिष्ठितम् ।
वाक्यं वेति सतां नीतिः सावकाशे न तद्भवेत्' ॥
इति बृहत्संहितायाम् ।

'तमेवं विद्वानमृत इह भवति । नान्यः पन्था अयनाय विद्यते' ॥ (तै.आ.३-१२)

'प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः' ।
(भ.गी.७-१७)

'यमेवैष वृणुते तेन लभ्यः' । (क.उ.२-२३)

'आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' (बृ.उ.६-५-६) इत्यादिश्रुतिस्मृतिभ्यः ॥

'कर्मणा त्वधमः प्रोक्तः प्रसादः श्रवणादिभिः ।
मध्यमो ज्ञानसम्पत्त्या प्रसादस्तूत्तमो मतः ।।
प्रसादात्त्वधमाद्विष्णोः स्वर्गलोकः प्रकीर्तितः ।
मध्यमाज्जनलोकादिरुत्तमस्त्वेव मुक्तिदः ।।
श्रवणं मननं चैव ध्यानं भक्तिस्तथैव च ।
साधनं ज्ञानसम्पत्तौ प्रधानं नान्यदिष्यते ।।
न चैतानि विना कश्चिज्ज्ञानमाप कुतश्चन' । इति नारदीये ।

'ब्रह्म'शब्दश्च विष्णावेव ।

'यमन्तः समुद्रे कवयोऽवयन्ति तदक्षरे परमे प्रजाः ।
यतः प्रसूता जगतः प्रसूती तोयेन जीवान् व्यससर्ज
भूम्याम्' इत्युक्त्वा

'तदेवर्तं तदु सत्यमाहुस्तदेव ब्रह्म परमं कवीनाम्' इति (म.ना.उ.१-३-६) हि श्रुतिः ।।

'तन्नो विष्णुः' इति (म.ना.उ.१-३-१६) वचनाद्विष्णुरेव हि तत्रोच्यते ।। न च इतरशब्दात् तत्प्राप्तिः ।।

'नामानि विश्वाऽभि न सन्ति लोके यदाविरासीदनृतस्य सर्वम् ।
नामानि सर्वाणि यमाविशन्ति तं वै विष्णुं परममुदाहरन्ति' ।।
इति भाल्लवेयश्रुतिः ।

'यो देवानां नामधा एक एव तं सम्प्रश्नं भुवनायन्त्यन्या' (ऋ.सं, १०-८२-३) इत्येवशब्दात् नान्येषां सर्वनामता ।

'अजस्य नाभावध्येकमर्पितं यस्मिन् विश्वानि भुवनानि तस्थुः' इति (ऋ.सं.१०-८२-६) विष्णोर्हि लिङ्गम् ।

न च प्रसिद्धार्थं विनाऽन्योऽर्थो युज्यते ।

'अजस्य नाभाविति यस्य नाभेरभूत् श्रुतेः पुष्करं लोकसारम् ।
तस्मै नमो व्यस्तसमस्तविश्वविभूतये विष्णवे लोककर्त्रे' ॥
इति स्कान्दे ।

'परो दिवा पर एना पृथिव्या' इति (ऋ.सं.१०-८२-५) इति समाख्याश्रुतौ ॥

'यं कामये तं तमुग्रं कृणोमि तं ब्रह्माणं तमृषिं तं सुमेधाम्'
(ऋ.सं.१०-१२५-५)

इत्युक्त्वा 'मम योनिरप्स्वँतः समुद्रे' (ऋ.सं.१०-१२५-५,७) इत्याह ।

उग्रो रुद्रः । समुद्रेऽन्तर्नारायणः । प्रसिद्धत्वात्सूचितत्वाच्चास्यार्थस्य । न चाविरोधे प्रसिद्धः परित्यज्यते । उक्तन्यायेन च श्रुतय एतमेव वदन्ति ।

'वेदे रामायणे चैव पुराणे भारते तथा ।
आदावन्ते च मध्ये च विष्णुः सर्वत्र गीयते' ॥ इति हरिवंशेषु ।

न चेतरग्रन्थविरोधः ।

'एष मोहं सृजाम्याशु यो जनान् मोहयिष्यति ।
त्वं च रुद्र महाबाहो मोहशास्त्राणि कारय ॥
अतथ्यानि वितथ्यानि दर्शयस्व महाभुज ।
प्रकाशं कुरु चात्मानमप्रकाशं च मां कुरु' ॥ इति वाराहवचनात् ।

शैवे च स्कान्दे—

'श्वपचादपि कष्टत्वं ब्रह्मेशानादयः सुराः ।
तदैवाच्युत यान्त्येव यदैव त्वं पराङ्मुखः' ॥ इति ।

ब्राह्मे च ब्रह्मवैवर्ते—

'नाहं न च शिवोऽन्ये च तच्छक्त्येकांशभागिनः ।
बालः क्रीडनकैर्यद्वत् क्रीडतेऽस्माभिरच्युतः' ॥ इति ।

न च वैष्णवेषु तथा । तच्च 'एष मोहम्' इत्युक्तम् ॥

॥ इति जिज्ञासाधिकरणम् ॥ १ ॥

### जन्माधिकरणम् - २

ब्रह्मणो लक्षणमाह—

**॥ ॐ जन्माद्यस्य यतः ॐ ॥ २ ॥**

सृष्टि-स्थिति-संहार-नियमन-ज्ञान-अज्ञान-बन्ध-मोक्षाः यतः ।

'उत्पत्तिस्थितिसंहारा नियतिर्ज्ञानमावृतिः ।
बन्धमोक्षौ च पुरुषाद्यस्मात्स हरिरेकराट्' ॥ इति स्कान्दे ।

'यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति ।

यत् प्रयन्त्यभिसंविशन्ति । तद्विजिज्ञासस्व । तद्ब्रह्मेति' ।
(तै.उ.३-१)

य उ त्रिधातु पृथिवीमुत द्यामेको दाधार भुवनानि विश्वा ।
(ऋ.सं.१-१५४-४)

चतुर्भिस्साकं नवतिं च नामभिश्चक्रं न वृत्तं व्यतीँरवीविपत् ।
(ऋ.सं.१-१५५-६)

'परो मात्रया तन्वा वृधान न ते महित्वमन्वश्नुवन्ति ।
न ते विष्णो जायमानो न जातो देव महिम्नः परमन्तमाप' ।।
(ऋ.सं.७-९९-१-२)

'यो नः पिता जनिता यो विधाता धामानि वेद भुवनानि विश्वा' (ऋ.सं.१०-८२-३) इत्यादि च ।। २ ।।

।। इति जन्माधिकरणम् ।। २ ।।

**शास्त्रयोनित्वाधिकरणम् - ३**

अनुमानतोऽन्ये न कल्पनीयाः ।।

**।। ॐ शास्त्रयोनित्वात् ॐ ।। ३ ।।**

'नावेदविन्मनुते तं बृहन्तं सर्वानुभुमात्मानं साम्पराये' ।।
(तै.ब्रा.३-१२-९)

'औपनिषदः पुरुषः' इत्यादिश्रुतिभ्यश्च ।।

न चानुमानस्य नियतप्रामाण्यम् ।।

'श्रुतिसाहाय्यरहितमनुमानं न कुत्रचित् ।
निश्चयात् साधयेदर्थं प्रमाणान्तरमेव च ।।
श्रुतिस्मृतिसहायं यत् प्रमाणान्तरमुत्तमम् ।
प्रमाणपदवीं गच्छेन्नात्र कार्या विचारणा ।।
पूर्वोत्तराविरोधेन कोऽत्रार्थोऽभिमतो भवेत् ।
इत्याद्यमूहनं तर्कः शुष्कतर्कं तु वर्जयेत्' ।। इत्यादि कौर्मे ।

शक्यत्वाच्चानुमानानां सर्वत्र ।

'सर्वत्र शक्यते कर्तुमागमं हि विनाऽनुमा ।
तस्मान्न सा शक्तिमती विनागममुदीक्षितुम्' ।।
इति वाराहे ।

'रेतो धातुर्वटकणिका घृतधूमाधिवासनम् ।
जातिस्मृतिरयस्कान्तः सूर्यकान्तोऽम्बुभक्षणम् ।।
प्रेत्य भूताप्ययश्चैव देवताभ्युपयाचनम् ।
मृते कर्मनिवृत्तिश्च प्रमाणमिति निश्चयः' ।।

इति मोक्षधर्मवचनान्न नास्तिक्यवादो युज्यते ।

दर्शनाच्च तपआदिफलस्य ।।

'ऋग्यजुःसामाथर्वाश्च भारतं पञ्चरात्रकम् ।
मूलरामायणं चैव शास्त्रमित्यभिधीयते ।।

यच्चानुकूलमेतस्य तच्च शास्त्रं प्रकीर्तितम् ।
अतोऽन्यो ग्रन्थविस्तारो नैव शास्त्रं कुवर्त्म तत्' ।।
इति स्कान्दे ।

'साङ्ख्यं योगः पाशुपतं वेदारण्यकमेव च' ।

इत्यारभ्य, वेदपञ्चरात्रयोरैक्याभिप्रायेण पञ्चरात्रस्यैव प्रामाण्यमुक्तम् इतरेषां भिन्नमतत्वं प्रदर्श्य मोक्षधर्मेष्वपि ।

शास्त्रं योनिः प्रमाणमस्येति शास्त्रयोनि ।। ३ ।।

।। इति शास्त्रयोनित्वाधिकरणम् ।। ३ ।।

### समन्वयाधिकरणम् - ४

अज्ञानां प्रतीयमानमपि नेतरेषां शास्त्रयोनित्वम्, कुतः ? ।

## ।। ॐ तत्तु समन्वयात् ॐ ।। ४ ।।

अन्वय उपपत्त्यादिलिङ्गम् ।

उक्तं च बृहत्संहितायाम् —

'उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् ।
अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये' ।। इति ।।

उपक्रमादितात्पर्यलिङ्गैः सम्यङ्निरूप्यमाणे तदेव शास्त्रगम्यम् ।

'मां विधत्तेऽभिधत्ते मां विकल्प्योऽपोह्य इत्यहम् ।
इत्यस्या हृदयं साक्षान्नान्यो मद्वेद कश्चन' ।।

इति भागवते (भा.११-२१-४३) ।। ४ ।।

।। इति समन्वयाधिकरणम् ।। ४ ।।

**ईक्षत्यधिकरणम् - ५**

ननु–

'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह' ।।
(तै.उ.२-४-१)

'अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यत्' ।।
(क.उ.१-३-१५)

'अवचनेनैव प्रोवाच' ।। (बाष्कलश्रुतिः)

'यद्वाचाऽनभ्युदितम् । येन वागभ्युद्यते......
यच्छ्रोत्रेण न शृणोति येन श्रोत्रमिदꣳश्रुतम्' ।। (के.उ.१)

इत्यादिभिः श्रुतिभिः न तच्छब्दगोचरम् ।

नेत्याह–

**।। ॐ ईक्षतेर्नाशब्दम् ॐ ।। ५ ।।**

'स एतस्माज्जीवघनात् परात्परं पुरिशयं पुरुषमीक्षते' ।।
(प्र.उ.५-५)

'आत्मन्येवात्मानं पश्येत् ।। (बृ.उ.६-४-२३) विज्ञाय प्रज्ञां कुर्वीत' (६-४-२१) इत्यादिवचनैरीक्षणीयत्वाद्वाच्यमेव ।

औपनिषदत्वान्नावचनेनेक्षणम् ।

'सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति' । (क.उ.१-२-१५)

'वेदैश्च सर्वैरहमेव वेद्यो वेदान्तकृद्वेदविदेव चाहम्' (भ.गी.१५-१५)

इत्यादिश्रुतिस्मृतिभ्यश्च ।। अवाच्यत्वादिकं तु अप्रसिद्धत्वात् ।

'न तदीदृगिति ज्ञेयं न वाच्यं न च तर्क्यते ।
पश्यन्तोऽपि न पश्यन्ति मेरो रूपं विपश्चितः' ।। इतिवत् ।

'अप्रसिद्धेरवाच्यं तद्वाच्यं सर्वागमोक्तितः ।
अतर्क्यं तर्क्यमज्ञेयं ज्ञेयमेवं परं स्मृतम्' ।। इति गारुडे ।
न चाशब्दत्वमितरसिद्धम् ।। ५ ।।

**।। ॐ गौणश्चेन्नात्मशब्दात् ॐ ।। ६ ।।**

न च गौण आत्मा दृश्यो वाच्यश्च न निर्गुण इति युक्तम् । आत्मशब्दात् ।

'यो गुणैः सर्वतो हीनो यश्च दोषविवर्जितः ।
हेयोपादेयरहितः स आत्मेत्यभिधीयते ।।
एतदन्यस्वभावो यः सोऽनात्मेति सतां मतम् ।।
अनात्मन्यात्मशब्दस्तु सोपचारः प्रयुज्यते' ।। इति वामने ।

'द्वे वाव ब्रह्मणो रूपे आत्मा चैवानात्मा च ।
तत्र यः स आत्मा स नित्यः शुद्धः केवलो निर्गुणश्च ।
अथ ह योऽनीदृशः सोऽनात्मा' इति तलवकारब्राह्मणम् ।

न च मुख्ये सति अयमुख्यं युज्यते ।। ६ ।।

**।। ॐ तन्निष्ठस्य मोक्षोपदेशात् ॐ ।। ७ ।।**

न हि गौणात्मनिष्ठस्य मोक्षः ।

'यस्यानुवित्तः प्रतिबुद्ध आत्माऽस्मिन् सन्दोहे गहने प्रविष्टः ।
स विश्वकृत् स हि सर्वस्य कर्ता तस्य लोकः स उ लोक एव'

(बृ.उ.६-४-१३) इत्यात्मनिष्ठस्य मोक्ष उपदिश्यते ।

'अयमात्मा ब्रह्म' (मां.उ.१-२, बृ.उ.४-५-१९) ।।

'ब्रह्मेति परमात्मेति भगवानिति शब्यते' ।
(भागवते १-२-११)

'दत्तं दूर्वाससं सोममात्मेशब्रह्मसम्भवान्' ।। (भा.४-१-१५)

'चेतनस्तु द्विधा प्रोक्तो जीव आत्मेति च प्रभो ।
जीवा ब्रह्मादयः प्रोक्ता आत्मैकस्तु जनार्दनः ।।
इतरेष्वात्मशब्दस्तु सोपचारः प्रयुज्यते ।
तस्यात्मनो निर्गुणस्य ज्ञानान्मोक्ष उदाहृतः ।।
सगुणास्त्वपरे प्रोक्तास्तज्ज्ञानान्नैव मुच्यते ।

परो हि पुरुषो विष्णुस्तस्मान्मोक्षस्ततः स्मृतः' ॥
इति पाद्मे ॥ ७ ॥

**॥ ॐ हेयत्वावचनाच्च ॐ ॥ ८ ॥**

'तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथ । अमृतस्यैष सेतुः' (मु.उ.२-२-५)

इत्यन्येषां हेयत्ववचनात् अस्य अहेयत्ववचनात् न गौण आत्मा ॥ ८ ॥

**॥ ॐ स्वाप्ययात् ॐ ॥ ९ ॥**

'पूर्णमदः पूर्णमिदं पूर्णात् पूर्णमुदच्यते ।
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते' ॥ (बृ.उ.७-१-१)

'स आत्मन आत्मानमुद्धृत्यात्मन्येव विलापयत्यथात्मैव भवति'।

स देवो बहुधा भूत्वा निर्गुणः पुरुषोत्तमः ।
एकीभूय पुनः शेते निर्दोषो हरिरादिकृत् ॥
इति स्वस्यैव स्वस्मिन्नप्ययवचनात् ।
न हि गौणात्मनि निर्दोषस्य लयः ॥ ९ ॥

न च कासुचित् शाखासु अन्यथा उच्यते ।

**॥ ॐ गतिसामान्यात् ॐ ॥ १० ॥**

'सर्वे वेदा युक्तयः सुप्रमाणा ब्राह्मं ज्ञानं परमं त्वेकमेव ।
प्रकाशयन्ते न विरोधः कुतश्चिद्वेदेषु सर्वेषु तथेतिहासे' ।।

इति पैङ्गिश्रुतेर्गतेर्ज्ञानस्य साम्यमेव ।। १० ।।

।। ॐ श्रुतत्वाच्च ॐ ।। ११ ।।

'एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा ।
कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च' ।।
(श्वे.उ.६-११) इति ।

न ह्यशब्दः श्रूयते । न चाप्रसिद्धं कल्प्यम् । सर्वशब्दावाच्यस्य लक्षणाऽयुक्तेः ।। ११ ।।

।। इति ईक्षत्यधिकरणम् ।। ५ ।।

**आनन्दमयाधिकरणम् - ६**

तमेव समन्वयं प्रकटयति आनन्दमयोऽभ्यासात् इत्यादिना समस्तेनाध्यायेन प्रायेण ।

प्रायेणान्यत्रप्रसिद्धानां शब्दानां परमात्मनि समन्वयः प्रदर्श्यतेऽस्मिन् पादे । नान्यथा तददृष्टेः ।

ब्रह्मजिज्ञासा कर्तव्येत्युक्तम् । तच्च ब्रह्म 'ब्रह्म पुच्छं प्रतिष्ठा' (तै.उ.२-५-२) इत्यानन्दमयावयवरूपं प्रतीयते । न ह्यवयविनं विना अवयवमात्रस्य ज्ञेयता इत्यत आह ।

**ॐ आनन्दमयोऽभ्यासात् ॐ ।। १२ ।।**

आनन्दमयो ब्रह्मादिः प्रकृतिर्विष्णुर्वा । ब्रह्मशब्दात् हिरण्यगर्भस्य प्राप्तिः शतानन्दनाम्ना च । अष्टमूर्तित्वात्सूर्ये प्रोक्तत्वाच्च रुद्रस्य । एवमन्येषामपि ।

'मम योनिर्महद्ब्रह्म' (भ.गी.१४-३) इति ब्रह्मशब्दात्, बहुभावाच्च प्रकृतेः ।

'बृह जाति-जीव-कमलासन-शब्दराशिषु' इति ब्रह्मशब्दादेव सर्वजीवानाम् । अन्नमयत्वादेश्च ।

तथाऽपि न त आनन्दमयशब्देन उच्यन्ते । किन्तु विष्णुरेव । 'तदेव ब्रह्म परमं कवीनाम्' (म.ना.उ.१-६) 'एतमेव ब्रह्मेत्याचक्षते' (ऐ.आ.३-२, ३-१२) ।

'ब्रह्मशब्दः परे विष्णौ नान्यत्र क्वचिदिष्यते ।
असम्पूर्णाः परे यस्मादुपचारेण वा भवेत्' ।।

'ब्रह्मेति परमात्मेति भगवानिति शब्द्यते' । (भागवतम्)
'वासुदेवात्मकं ब्रह्म मूलमन्त्रेण वा यतिः' ।। (व्यासस्मृतिः)

इत्यादिषु तस्मिन्नेव प्रसिद्धब्रह्मशब्दाभ्यासात् ।। १२ ।।

**।। ॐ विकारशब्दान्नेति चेन्न प्राचुर्यात् ॐ ।। १३ ।।**

विकारात्मकत्वात् तदभिमानित्वाच्च युज्यते प्रकृत्यादीनां मयट्-

शब्दः न तु परमात्मन इति मा भूत् । प्रचुरानन्दत्वात् हि आनन्दमयः । न तु तद्विकारत्वात् । अन्नादीनां च प्राचुर्यमेव । 'अद्यतेऽत्ति च' (तै.उ.२-२) इति व्याख्यानात्तत्प्राचुर्यं च युज्यते ।

उपजीव्यत्वमेवाद्यत्वम् ॥ 'स वा एषः' (तै.उ.२-२) इत्यन्यप्रारम्भात् ॥ 'येऽन्नं ब्रह्मोपासते' (तै.उ.२-२) इत्यादिब्रह्मशब्दात् बहुरूपत्वाच्च न विकारित्वमविरोधश्च । न च पृथक्कल्पना युक्ता । स्वरूपे च युज्यते प्रचुरप्रकाशो रविरितिवत् ॥ १३ ॥

**॥ ॐ तद्धेतुव्यपदेशाच्च ॐ ॥ १४ ॥**

'को ह्येवान्यात्कः प्राण्याद्यदेष आकाश आनन्दो न स्यात्' (तै.उ.२-७) इति ॥ १४ ॥

**॥ ॐ मान्त्रवर्णिकमेव च गीयते ॐ ॥ १५ ॥**

'ब्रह्मविदाप्नोति परम्' इति सूचयित्वा 'सत्यं ज्ञानमनन्तं ब्रह्म' (तै.उ.२-१) इति मन्त्रवर्णलक्षितं परमेव ब्रह्मशब्दानुसन्धानात् गीयते । न चावयवत्वविरोधः ।

'स शिरः स दक्षिणः पक्षः स उत्तरः पक्षः स आत्मा स पुच्छम्' इति तस्यैवावयवत्वोक्तेश्चतुर्वेदशिखायाम् ।

'शिरो नारायणः पक्षो दक्षिणः सव्य एव च ।
प्रद्युम्नश्चानिरुद्धश्च सन्दोहो वासुदेवकः ॥
नारायणोऽथ सन्दोहो वासुदेवः शिरोऽपि वा ।
पुच्छं सङ्कर्षणः प्रोक्त एक एव तु पञ्चधा ॥

अङ्गाङ्गित्वेन भगवान् क्रीडते पुरुषोत्तमः ॥
ऐश्वर्यान्न विरोधश्च चिन्त्यस्तस्मिन् जनार्दने ।
अतर्क्ये हि कुतस्तर्कस्त्वप्रमेये कुतः प्रमा' ॥
इति बृहत्संहितायाम् ॥

रसशब्देन विशेषणात् तत्तत्सारभूतं चिन्मात्रमेवोच्यते । इदमिति च दृश्यमानसन्निहितत्वात् ।

'अनन्योऽप्यन्यशब्देन तथैको बहुरूपवान् ।
प्रोच्यते भगवान् विष्णुरैश्वर्यात्पुरुषोत्तमः ॥' इति ब्रह्माण्डे ।

न चोक्तप्राप्त्या विरिञ्चादिरुच्यते ॥ १५ ॥

**॥ ॐ नेतरोऽनुपपत्तेः ॐ ॥ १६ ॥**

न ह्यन्यज्ज्ञानात् मोक्ष उपपद्यते ।

'तमेवं विद्वानमृत इह भवति नान्यः पन्था अयनाय विद्यते' (तै.आ.३-१२-७) इति ह्युक्तम् ॥ १६ ॥

**॥ ॐ भेदव्यपदेशाच्च ॐ ॥ १७ ॥**

'ते ये शतं प्रजापतेरानन्दाः' (तै.उ.२-८)

'अदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते' ।

'अथ सोऽभयं गतो भवति' (तै.उ.२-७)

'स यश्चायं पुरुषे' (तै.उ.२-८) इत्यादिभेदव्यपदेशात् ।

न च 'तत्त्वमसि' (छां.उ.६-८), अहं ब्रह्मास्मि' (बृ.उ.३-४-१०) इत्यादिश्रुतिविरोधः ।

'नामानि सर्वाणि यमाविशन्ति' (भाल्लवेयश्रुतिः) इति तत्तच्छब्दवाच्यत्वोक्तेः ।।

'इदं हि विश्वं भगवानिवेतरो यतो जगत्स्थाननिरोधसम्भवः' ।।
(भा.१-५-२०)

'असर्वः सर्व इत्यपि' तुरश्रुतिः ।। 'विद्याऽऽत्मनि भिदाबोधः' ।।
(भा.११-१९-४०)

'भेददृष्ट्याऽभिमानेन निस्सङ्गेनापि कर्मणा' (भा.३-३२-१३) ।

'जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः' ।
(मुं.उ.३-१-२)

'असर्वः सर्व इवात्मैव सन्ननात्मेव प्रत्यङ् पराङिव एक ईयते बहुधेयते' 'स पुरुषः' 'स ईश्वरः स ब्रह्म' ।

'सर्वान्तर्यामिको विष्णुः सर्वनाम्नाऽभिधीयते ।
एषोऽहं त्वमसौ चेति न तु सर्वस्वरूपतः' ।।

'नैतदिच्छन्ति पुरुषमेकं कुरुकुलोद्वह' इत्यादेश्च ।

उक्ता च प्राप्तिः । 'ब्रह्मैव सन्' (बृ.उ.६-४) इत्यपि जीव एव ब्रह्मशब्दः । उपपद्यते च विरोधे । प्रमादात्मकत्वाद्बन्धस्य विमुक्तत्वं च युज्यते ।

'मुक्तिर्हित्वाऽन्यथारूपं स्वरूपेण व्यवस्थितिः' (भा.२-१०-६) इति हि भागवते ।। १७ ।।

न च तत्तदनुमानविरोधः ।

**।। ॐ कामाच्च नानुमानापेक्षा ॐ ।। १८ ।।**

यथाकामं ह्यनुमातुं शक्यते । अतो न तत्त्वे पृथगनुमानमपेक्ष्यते ।

उक्तं च स्कान्दे—

'यथाकामाऽनुमा यस्मात्तस्मात्साऽनपगा श्रुतेः ।
पूर्वापराविरोधाय चेष्यते नान्यथा क्वचित्' ।। इति ।।

'नैषा तर्केण मतिरापनेया' (कठ.उ.२-९) इति च ।। १८ ।।

**।। ॐ अस्मिन्नस्य च तद्योगं शास्ति ॐ ।। १९ ।।**

अस्य जीवस्य । युक्तिसमुच्चये चशब्दः ।

'सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चिता' । (तै.उ.२-१)

'अनिलयनेऽभयं प्रतिष्ठां विन्दते' । (तै.उ.२-७)

'एतमानन्दमयमात्मानमुपसङ्क्रामति' । (तै.उ.२-८) इत्यादि ।। १९ ।।

।। इत्यानन्दमयाधिकरणम् ।। ६ ।।

### अन्तःस्थत्वाधिकरणम् - ७

'अदृश्येऽनात्म्ये' इत्युक्तम् । तच्चादृश्यत्वं

'अन्तःप्रविष्टं कर्तारमेतं अन्तश्चन्द्रमसि मनसा चरन्तम् । सहैव सन्तं न विजानन्ति देवाः' । (तै.आ.३-११)

इत्यन्तःस्थस्य कस्यचिदुच्यते ।

स च 'इन्द्रो राजा' (तै.आ.३-११-६) 'सप्त युञ्जन्ति' (तै.आ.३-११-८) इत्यादिभिरन्यः प्रतीयते ।

तस्मात्स एवानन्दमय इति न मन्तव्यम् ।

**।। ॐ अन्तस्तद्धर्मोपदेशात् ॐ ।। २० ।।**

अन्तः श्रूयमाणो विष्णुरेव ।

'अन्तस्समुद्रे मनसा चरन्तम् । ब्रह्मान्वविन्दद्दशहोतारमर्णे' । (तै.उ.३-११-१)

'समुद्रेऽन्तः कवयो विचक्षते मरीचीनां पदमिच्छन्ति वेधसः'। (तै.आ.३-११-११)

'यस्याण्डकोशं शुष्ममाहुः' (तै.आ.३.११.४) इत्यादि तद्धर्मोपदेशात् ।

स हि क्षीरसमुद्रशायी । तस्य च वीर्यमण्डकोशः ।

'सोऽभिध्याय शरीरात्स्वात्सिसृक्षुर्विविधाः प्रजाः ।
अप एव ससर्जादौ तासु वीर्यमवासृजत् ॥
तदण्डमभवद्धैमं सहस्रांशुसमप्रभम् ।
यस्मिन् जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः ॥
आपो नारा इति प्रोक्ता आपो वै नरसूनवः ।
अयनं तस्य ताः पूर्वं तेन नारायणः स्मृतः' ॥
इति व्यासस्मृतेः ।

'अहं तत्तेजो रश्मीन्नारायणं पुरुषं जातमग्रतः ।
पुरुषात्प्रकृतिर्जगदण्डम्' इति चतुर्वेदशिखायाम् ॥ २० ॥

**॥ ॐ भेदव्यपदेशाच्चान्यः ॐ ॥ २१ ॥**

'इन्द्रस्यात्मा निहितः पञ्चहोता' 'वायोरात्मानं कवयो निचिक्युः' 'अन्तरादित्ये मनसा चरन्तम्, देवानाꣳहृदयं ब्रह्मान्वविन्दत्' । (तै.आ.३-११) इत्यादिभेदव्यपदेशात् ॥२१॥

॥ इति अन्तःस्थत्वाधिकरणम् ॥ ७ ॥

**आकाशाधिकरणम् - ८**

'को ह्येवान्यात्कः प्राण्याद्यदेष आकाश आनन्दो न स्यात्' इति (तै.उ.२-७) इत्याकाशस्यानन्दमयत्वे हेतुरुक्तः, न तु विष्णोरिति न मन्तव्यम् ।

यतः—

**॥ ॐ आकाशस्तल्लिङ्गात् ॐ ॥ २२ ॥**

'अस्य लोकस्य का गतिरित्याकाश इति होवाच' ।
(छां.उ.१-९)

इत्यत्र भूताकाशस्य प्राप्तिः । न चासौ युज्यते, किन्तु विष्णुरेव ।

'स एष परोवरीयानुद्गीथः स एषोऽनन्तः' । (छां.उ.१-९) इत्यादि तल्लिङ्गात् ।

'विष्णोर्नु कं वीर्याणि प्रवोचं यः पार्थिवानि विममे रजांसि ।
(ऋ.सं.१-१५४-१)

'परो मात्रया तन्वा वृधान' (ऋ.सं.७-९९-१) इत्यादिना तस्यैव हि तल्लिङ्गम् ।

'अनन्तो भगवान् ब्रह्म आनन्देत्यादिभिः पदैः ।
प्रोच्यते विष्णुरेवैकः परेषामुपचारतः' ।। इति ब्राह्मे ।

'नामानि सर्वाणि यमाविशन्ति' इति चोक्तम् ।। २२ ।।
(भाल्लवेयश्रुतौ)

।। इत्याकाशाधिकरणम् ।। ८ ।।

**प्राणाधिकरणम् - ९**

**।। ॐ अत एव प्राणः ॐ ।। २३ ।।**

'तद्वै त्वं प्राणो अभवः महान् भोगः प्रजापतेः ।
भुजः करिष्यमाणः यद्देवान् प्राणयो नवा ।।' (तै.आ.३-१४)

इति महाभोगशब्देन परमानन्दत्वं प्राणस्योक्तम् ।

स च प्राणः प्रसिद्धेर्वायुरित्यापतति । न चैवं यतो विष्णुरेव प्राणः ।

अत एव 'श्रीश्च ते लक्ष्मीश्च पत्न्यौ अहोरात्रे पार्श्वे' । (तै.आ.३-१३) इत्यादि तल्लिङ्गादेव ।। २३ ।।

।। इति प्राणाधिकरणम् ।। ९ ।।

**ज्योतिरधिकरणम् - १०**

'यो वेद निहितं गुहायाम्' (तै.उ.२-१) इत्युक्तम् । तच्च गुहानिहितम्,

'वि मे कर्णा पतयतो विचक्षुर्वीदं ज्योतिर्हृदय आहितं यत् ।
वि मे मनश्चरति दूर आधीः किंस्विद्वक्ष्यामि किमु नू मनिष्ये'।। (ऋ.सं.६-९-६) इति ज्योतिरुक्तम् ।

तच्च ज्योतिरग्निसूक्तत्वात् प्रसिद्धेश्चाग्निरेवेति प्राप्तम् ।

अत आह—

**।। ॐ ज्योतिश्चरणाभिधानात् ॐ ।। २४ ।।**

विष्णुरेव ज्योतिः । कर्णादीनां विचरणाभिधानात् । स हि 'परो मात्रया तन्वा वृधान' । (ऋ.७-९९-१) इत्यादिना कर्णादिविदूरः ।। २४ ।।

।। इति ज्योतिरधिकरणम् ।। १० ।।

गायत्र्यधिकरणम् - ११

**।। ॐ छन्दोऽभिधानान्नेति चेन्न तथा चेतोऽर्पणनिगदात्तथा हि दर्शनम् ॐ ।। २५ ।।**

'अथ यदतः परो दिवो ज्योतिर्दीप्यते' । (छां.३-१३-७) इत्युक्तस्य ज्योतिषो 'गायत्री वा इदꣳ सर्वम्' (छां.३-१२-१) इति गायत्र्या समारम्भः कृतः । तस्मान्न विष्णुरिति चेन्न । तथा चेतोऽर्पणार्थं हि निगद्यते ।

अग्निगायत्र्यादिशब्दार्थरूपोऽसाविति चेतोऽर्पणार्थं हि निगद्यते

तथाहि दर्शनं 'गायति त्रायति च' । (छां.उ.३-१२-१) इत्यादि ।

'सर्वच्छन्दोऽभिधो ह्येषः सर्वदेवाभिधो ह्यसौ ।
सर्वलोकाभिधो ह्येषः तेषां तदुपचारतः' ।। इति वामने ।।२५।।

**।। ॐ भूतादिपादव्यपदेशोपपत्तेश्चैवम् ॐ ।। २६ ।।**

'तावानस्य महिमा ततो ज्यायांश्च पुरुषः ।
पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि' ।। इति ।
(छा.उ.३-१२-६)

'सुवर्णं कोशं रजसा परीवृतम् देवानां वसुधानीं विराजम् ।

'अमृतस्य पूर्णां तामु कलां विचक्षते पादं षड्ढोतुर्न किला विवित्से' । (तै.आ.३-११) इति श्रुतेः । पाद इति एकदेश-परिमितं चतुर्भागबल इतिवद्भिन्नं च ।

स हि पुरुषसूक्ताभिधेयः 'यज्ञेन यज्ञमयजन्त' (तै.आ.३-१२) इति यज्ञशब्दात् ।

'यज्ञो विष्णुर्देवता' इति हि श्रुतिः ।

'तस्मिन् काले महाराज राम एवाभिधीयते ।
यथा हि पौरुषे सुक्ते विष्णुरेवाभिधीयते ।'
इति च स्कान्दे ।। २६ ।।

**।। ॐ उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात् ॐ ।। २७ ।।**

'त्रिपादस्यामृतं दिवि' (छां.उ.३-१२-६) इति पूर्वोपदेशः ।

'परो दिवः' (छां.उ.३-१३-७) इति पञ्चम्यन्तः पश्चिमः ।

तस्मान्नैकं वस्त्वत्रोच्यत इति चेन्न ।
त्रिसप्तलोकापेक्षयोभयस्मिन्नप्यविरोधात् ।। २७ ।।

।। इति गायत्र्यधिकरणम् ।। ११ ।।

**पादान्त्यप्राणाधिकरणम् - १२**

'प्राणो विष्णुरित्युक्तम् । तत्र–

'ता वा एताः शीर्षन् श्रियः श्रिताश्चक्षुःश्रोत्रं मनो वाक्प्राणः' (ऐ.आ.२-१-४) ।

इत्यत्र प्राणस्य विष्णुत्वं न विद्यते ।

इन्द्रियैः सहाभिधानादिति ।

अत आह—

**।। ॐ प्राणस्तथाऽनुगमात् ॐ ।। २८ ।।**

'तं देवाः प्राणयन्त' (ऐ.आ.२-१-५) 'स एषोऽसुः स एष प्राणः' (ऐ.आ.२-१-८)

'प्राण ऋच इत्येव विद्यात्' (ऐ.आ.२-२-२), 'तदयं प्राणोऽधितिष्ठति' (ऐ.आ.२-३-८)

इत्याद्यनुगमात्, अत्रापि प्राणो विष्णुरेव ।

'विष्णुमेवानयन् देवा विष्णुं भूतिमुपासते ।
स एव सर्ववेदोक्तस्तद्रथो देह उच्यते' ।। इति स्कान्दे ।

ब्रह्मशब्दानुगमाच्च ।। २८ ।।

**।। ॐ न वक्तुरात्मोपदेशादिति चेदध्यात्मसम्बन्धभूमा ह्यस्मिन् ॐ ।। २९ ।।**

'प्राणो वा अहमस्म्यृषे' (ऐ.आ.२-२-३) इति वक्तुरात्मोपदेशादिन्द्र एवेति चेन्न,

'प्राणस्त्वं प्राणः सर्वाणि भूतानि' इति (ऐ.आ.२-२-३) बह्वध्यात्मसम्बन्धो ह्यत्र विद्यते ।। २९ ।।

**।। ॐ शास्त्रदृष्ट्या तूपदेशो वामदेववत् ॐ ।। ३० ।।**

शास्त्रं अन्तर्यामी । 'संविच्छास्त्रं परं पदम्' इति हि भागवते । (१.६.१७)

'तत्तन्नाम्नोच्यते विष्णुः सर्वशास्तृत्वहेतुतः ।
न क्वापि किञ्चिन्नामास्ति तमृते पुरुषोत्तमम्' ।। इति पाद्मे ।

अहं मनुरभवं सूर्यश्च (ऋ.सं.४-२६-१) इत्यादिवत् ।। ३० ।।

**।। ॐ जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात् ॐ ।। ३१ ।।**

'तावन्ति शतसंवत्सरस्याह्नां सहस्राणि भवन्ति' । (ऐ.आ.२-२-४) इति जीवलिङ्गम् ।

प्राणसंवादादि मुख्यप्राणलिङ्गम् । तस्मान्नेति चेन्न ।

अन्तर्बहिः सर्वगतत्वेनेत्युपासात्रैविध्यादिहाश्रितत्वाच्च ।

'स एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यत' । (ऐ.आ.२-४-३)

'स एतमेव पुरुषं ब्रह्म ततममपश्यत्' । (ऐ.आ.२-४-३)

'एतद्ध स्म वै तद्विद्वानाह महिदास ऐतरेयः' । (ऐ.आ.२-१-८)

इत्यादिना ।

'महिदासाभिधो जज्ञे इतरायास्तपोबलात् ।
साक्षात् स भगवान् विष्णुर्यस्तन्त्रं वैष्णवं व्यधात्' ।।
इति ब्रह्माण्डे ।

तत्तदुपासनायोग्यतया च पुरुषाणाम् ।

'केषाञ्चित्सर्वगत्वेन केषाञ्चिद्धृदये हरिः ।
केषाञ्चिद्बहिरेवासावुपास्यः पुरुषोत्तमः' ।। इति ब्राह्मे ।।

'अग्नौ क्रियावतां विष्णुर्योगिनां हृदये हरिः ।
प्रतिमास्वप्रबुद्धानां सर्वत्र विदितात्मनाम्' ।। इति च ।।३१।।

।। इति पादान्त्यप्राणाधिकरणम् ।। १२ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्ब्रह्मसूत्रभाष्ये प्रथमाध्यायस्य प्रथमः पादः ।।

## प्रथमाध्यायस्य द्वितीयः पादः

### सर्वगतत्वाधिकरणम् - १

लिङ्गात्मकानां शब्दानां विष्णौ प्रवृत्तिं दर्शयति अस्मिन्पादे प्राधान्येन । 'ब्रह्म ततमम्' इति सर्वगतत्वमुक्तं विष्णोः ।

तच्च 'तस्यैतस्यासावादित्यो रसः' (ऐ.आ.३-२-३) इत्यादिनाऽऽदित्यस्य प्रतीयत इत्यतोऽब्रवीत् ।

**।। ॐ सर्वत्र प्रसिद्धोपदेशात् ॐ ।। १ ।।**

'स यश्चायमशरीरः प्रज्ञात्मा' । (ऐ.आ.३-२-४) इत्यादिना सर्वत्रोच्यमानो नारायण एव ।

'तदेव ब्रह्म परमं कवीनाम्' । (म.ना.उ.१-६)

'परमं यो महद्ब्रह्म' ।

'वासुदेवात् परः को नु ब्रह्मशब्दोदितो भवेत् ।
स हि सर्वगुणैः पूर्णस्तदन्ये तूपचारतः' ।। इति ।

तस्मिन्नेव प्रसिद्धब्रह्मशब्दोपदेशात् ।। १ ।।

**।। ॐ विवक्षितगुणोपपत्तेश्च ॐ ।। २ ।।**

'स योऽतोऽश्रुतः' (ऐ.आ.३-२-४) इत्यादि ।

स हि 'न ते विष्णो जायमानः' (ऋ.सं.७-९९-२) इत्यादिनाऽश्रुतत्वादिगुणकः ।

'स सविता स वायुः स इन्द्रः, सोऽश्रुतः सोऽदृष्टो यो हरिः यः परमो यो विष्णुर्योऽनन्तः' । इत्यादि चतुर्वेदशिखायाम् ।।२।।

न चादित्यशब्दाच्चक्षुर्मयत्वादेश्च जीव इति वाच्यम् ।

**।। ॐ अनुपपत्तेस्तु न शारीरः ॐ ।। ३ ।।**

एकस्य सर्वशरीरस्थत्वानुपपत्तेरेव ।। ३ ।।

**।। ॐ कर्मकर्तृव्यपदेशाच्च ॐ ।। ४ ।।**

'आत्मानं परस्मै शंसति' (ऐ.आ.३.२.३) इत्यादि ।। ४ ।।

**।। ॐ शब्दविशेषात् ॐ ।। ५ ।।**

'एतमेव ब्रह्मेत्याचक्षते' (ऐ.आ.३-२-३) इति । न हि जीवमेव ब्रह्मेत्याचक्षते ।

'एष उ एव ब्रह्मैष उ एवात्मैष उ एव सवितैष उ एवेन्द्र एष उ एव हरिर्हरति परः परानन्दः' इति चेन्द्रद्युम्नशाखायाम् ।। ५ ।।

**।। ॐ स्मृतेश्च ॐ ।। ६ ।।**

'अहमात्मा गुडाकेश सर्वभूताशयस्थितः' । (भ.गी.१०-२०)

'गामाविश्य च भूतानि धारयाम्यहमोजसा' । (भ.गी.१५-१३) इत्यादि ।

न चाप्रामाणिकं कल्प्यम् ।। ६ ।।

**।। ॐ अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च ॐ ।। ७ ।।**

सर्वेषु भूतेष्वित्यल्पौकस्त्वाच्चक्षुर्मयत्वादिना जीवव्यपदेशाच्च नेति चेन्न ।

अर्भकौकस्त्वेन चक्षुर्मयत्वादिरूपेण च तस्यैव विष्णोर्निचाय्यत्वात् ।

सर्वगतत्वेऽप्यल्पौकस्त्वं च युज्यते व्योमवत् ।

'सर्वेन्द्रियमयो विष्णुः सर्वप्राणिषु च स्थितः ।
सर्वनामाभिधेयश्च सर्ववेदोदितश्च सः' ।। इति स्कान्दे ।। ७ ।।

**।। ॐ सम्भोगप्राप्तिरिति चेन्न वैशेष्यात् ॐ ।। ८ ।।**

जीवपरयोरेकशरीरस्थत्वे समानभोगप्राप्तिरिति चेन्न । सामर्थ्य-वैशेष्यात् ।

उक्तं च गारुडे—

'सर्वज्ञाल्पज्ञताभेदात् सर्वशक्त्यल्पशक्तितः ।
स्वातन्त्र्यपारतन्त्र्याभ्यां सम्भोगो नेशजीवयोः'
इति च ।। ८ ।।

।। इति सर्वगतत्वाधिकरणम् ।। १ ।।

**अत्तृत्वाधिकरणम् - २**

'जन्माद्यस्य यतः' (१-१-२ ब्र.सू.) इत्युक्तम् । तत्रात्तृत्वं,

'स यद्यदेवासृजत तत्तदत्तुमध्रियत । सर्वं वा अत्तीति तददितेर-दितित्वम्' । (बृ.उ.३-२-५) इत्यदितेः प्रतीयते ।

'स यद्यदेवासृजत' इति पुल्लिंङ्गं च 'कूटस्थोऽक्षर उच्यते' (भ.गी.१५-१६) इत्यादिवत् ।

अत्रोच्यते—

**।। ॐ अत्ता चराचरग्रहणात् ॐ ।। ९ ।।**

न हि चराचरस्य सर्वस्यात्तृत्वमदितेः ।

'स्रष्टा पाता तथैवात्ता निखिलस्यैक एव तु ।
वासुदेवः परः पुंसामितरेऽल्पस्य वा न वा' ।। इति स्कान्दे ।

'एकः पुरस्ताद्य इदं बभूव यतो बभूव भुवनस्य गोपाः ।
यमप्येति भुवनं साम्पराये स नो हरिर्घृतमिहायुषेऽत्तु देवः' ।।

इति (घृत.सू.) श्रुतिः ।। ९ ।।

।। ॐ प्रकरणाच्च ॐ ।। १० ।।

अप्संवत्सरसृष्ट्यादिना तत्प्रकरणाच्च ।

'नेहाऽऽसीत्किञ्चनाप्यादौ मृत्युरासीद्धरिस्तदा ।
सोत्मनो मनसाऽस्राक्षीदप एव जनार्दनः ।।
शयानस्तासु भगवान्निर्ममेऽण्डं महत्तरम् ।
तत्र संवत्सरं नाम ब्रह्माणमसृजत्प्रभुः ।।
तमत्तुं व्याददादास्यं तदाऽसौ विरुराव ह ।।
अथ तं कृपया विष्णुः सृष्टिकर्मण्ययोजयत् ।
सोऽसृजद् भुवनं सर्वमद्यार्थं हरये विभुः ।।
इति ब्रह्मवैवर्ते ।। १० ।।

।। इति अत्तृत्वाधिकरणम् ।। २ ।।

## गुहाधिकरणम् - ३

सर्वात्ता एकः पर उक्तः ।

'ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्धे ।
छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिनाचिकेताः'
(क.उ.१-३-१) ।

इति पिबन्तौ प्रतीयेते । तौ कौ इति । उच्यते ।

**।। ॐ गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ॐ ।। ११ ।।**

गुहां प्रविष्टौ पिबन्तौ विष्णुरूपे एव ।

'घर्मा समन्ता त्रिवृतं व्यापतुस्तयोर्जुष्टिं मातरिश्वा जगाम' ।

(ऋ.सं.१०-११४-१) इत्यादिना तद्दर्शनात् ।

'आत्माऽन्तरात्मेति हरिरेक एव द्विधा स्थितः ।
निविष्टो हृदये नित्यं रसं पिबति कर्मजम्' ।।
इति बृहत्संहितायाम् ।

'शुभं पिबत्यसौ नित्यं नाशुभं स हरिः पिबेत् ।
पूर्णानन्दमयस्यास्य चेष्टा न ज्ञायते क्वचित्' ।। इति पाद्मे ।।

'यो वेद निहितं गुहायाम्' (तै.उ.२-१)

इत्यादिना प्रसिद्धं हिशब्देन दर्शयति ।। ११ ।।

**।। ॐ विशेषणाच्च ॐ ।। १२ ।।**

'यः सेतुरीजानानामक्षरं ब्रह्म तत्परम्' । (कठ.उ.१-३-२) इति ।

'पृथग्वक्तुं गुणास्तस्य न शक्यन्तेऽमितत्वतः ।
यतोऽतो ब्रह्मशब्देन सर्वेषां ग्रहणं भवेत् ।।
एतस्माद्ब्रह्मशब्दोऽयं विष्णोरेव विशेषणम् ।
अमिता हि गुणा यस्मात् नान्येषां तमृते विभुम् ।।' इति ब्राह्मे ।

न च जीवे समन्वयोऽभिधीयते ।

'सत्य आत्मा सत्यो जीवः सत्यं भिदा सत्यं भिदा सत्यं भिदा मैवारुवण्यो मैवारुवण्यो मैवारुवण्यः' इति पैङ्गिश्रुतिः ।

'आत्मा हि परमस्स्वतन्त्रोऽधिगुणो, जीवोऽल्पशक्तिरस्वतन्त्रोऽवर' इति च भाल्लवेयश्रुतिः ।

'यथेश्वरस्य जीवस्य भेदस्सत्यो विनिश्चयात् ।
एवमेव हि मे वाचं सत्यां कर्तुमिहार्हसि' ।। इति पाद्मे ।

'यथेश्वरश्च जीवश्च सत्यभेदौ परस्परम् ।
तेन सत्येन मां देवास्त्रायन्तु सहकेशवाः ।।' इति स्कान्दे ।

इत्यादेर्नासत्यो भेदः ।। १२ ।।

।। इति गुहाधिकरणम् ।। ३ ।।

**अन्तराधिकरणम् - ४**

आदित्ये विष्णुरित्युक्तम् ।

'य एष आदित्ये पुरुषः सोऽहमस्मि स एवाहमस्मि' ।
(छां.उ.४-११)

इत्यादौ अवग्नीनामेव आदित्यादिस्थत्वमुच्यते । अतोऽक्ष्यादित्ययोरैक्यात्

'य एषोऽन्तरक्षिणि पुरुषो दृश्यते' (छां.उ.४-१५) इत्यत्राप्यग्निरेवोच्यते । अतः

'तद्यथा पुष्करपलाश आपो न श्लिष्यन्त
एवमेवंविदि पापं कर्म न श्लिष्यते' (छां.उ.४-१४)

इत्यग्निज्ञानादेव सर्वपापाश्लेषात् मोक्षोपपत्तिरिति । अतो ब्रवीति ।

॥ ॐ अन्तर उपपत्तेः ॐ ॥ १३ ॥

चक्षुरन्तस्थो विष्णुरेव । 'त्रिपादस्यामृतं दिवि' (ऋ.सं.१०-९०-३) इत्यादिना तस्यैवामृतत्वाद्युपपत्तेः । ब्रह्मशब्दाद्युपपत्तेश्च ।

'सोऽहमस्मि' इत्यादि तु अन्तर्याम्यपेक्षया ।

'अन्तर्यामिणमीशेशमपेक्ष्याहं त्वमित्यपि ।
सर्वे शब्दाः प्रयुज्यन्ते सति भेदेऽपि वस्तुषु' ॥
इति महाकौर्मे ॥ १३ ॥

॥ ॐ स्थानादिव्यपदेशाच्च ॐ ॥ १४ ॥

'तद्यदस्मिन् सर्पिर्वा उदकं वा सिञ्चति वर्त्मनी एव गच्छति' । (छां.उ.४-१५) इत्यादिस्थानशक्तिः वामनिर्भामनिरित्याद्यात्मशक्तिश्चोच्यते । तस्य ह्येतल्लिङ्गम् । 'स ईशः सोऽसपत्नः स हरिः स परः स परोवरीयान् यदिदं चक्षुषि सर्पिर्वोदकं वा सिञ्चति

वर्त्मनी एव गच्छति स वामनः स भामनः स आनन्दः सोऽच्युतः' इति चतुर्वेदशिखायाम् ।

'यत्स्थानत्वादिदं चक्षुरसङ्गं सर्ववस्तुभिः ।
स वामनः परोऽस्माकं गतिरित्येव चिन्तयेत्'
इति वामने ।। १४ ।।

**।। ॐ सुखविशिष्टाभिधानादेव च ॐ ।। १५ ।।**

'प्राणो ब्रह्म कं ब्रह्म खं ब्रह्म' इति, (छां.उ.४-१०)

'विज्ञानमानन्दं ब्रह्म' (बृ.उ.५-९-२८)

'आनन्दो ब्रह्मेति व्यजानात्' (तै.उ.३-६)

इत्यादेस्तस्यैव हि तल्लक्षणम् ।

'लक्षणं परमानन्दो विष्णोरेव न संशयः ।
अव्यक्तादितृणान्तास्तु विप्लुडानन्दभागिनः' ।।
इति ब्रह्मवैवर्ते ।।

न च मुख्ये सति अमुख्यं युज्यते ।। १५ ।।

**।। ॐ श्रुतोपनिषत्कगत्यभिधानाच्च ॐ ।। १६ ।।**

'स एनान् ब्रह्म गमयति' (छा.उ.४-१५) इति ।

न ह्यन्यविद्यया अन्यगतिर्युक्ता ।। १६ ।।

**।। ॐ अनवस्थितेरसम्भवाच्च नेतरः ॐ ।। १७ ।।**

जीवस्य जीवान्तरनियामकत्वेऽनवस्थितेः, साम्यादसम्भवाच्च न जीवः । नियमप्रमाणाभावात् । अनीश्वरापेक्षत्वाच्च ।।१७।।

।। इत्यन्तराधिकरणम् ।। ४ ।।

**अन्तर्याम्यधिकरणम् - ५**

'यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः' । (बृ.उ.४-७-३) इत्याद्यन्तर्याम्युच्यते ।

तत्र च 'एतदमृतम्' (छा.उ.४-१५-१) इत्युक्तममृतत्वमुच्यते । स च 'यस्य पृथिवी शरीरम्' इत्यादिना सर्वात्मकत्वात्प्रकृतिस्तत्तज्जीवो वा युक्तः ।

न हि विष्णोः पृथिव्यादिशरीरत्वमङ्गीक्रियत इत्यत आह—

**।। ॐ अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात् ॐ ।।१८।।**

'यं पृथिवी न वेद' 'यः पृथिव्या अन्तरः' । (बृ.उ.५-७-३) इत्यादिना अधिदैवादिषु तद्धर्मव्यपदेशाद्विष्णुरेवान्तर्यामी ।

स हि, 'न ते विष्णो जायमानो न जातः' (ऋ.सं.७-९९-२)

'स योऽतोऽश्रुतोऽगतोऽमतोऽनतोऽदृष्टोऽविज्ञातोऽनादिष्टः सर्वेषां भूतानामन्तरपुरुषः' । (ऐ.आ.३-२-४) इत्यादिनाऽविदितोऽन्तरश्च ।। १८ ।।

**।। ॐ न च स्मार्तमतद्धर्माभिलापात् ॐ ।। १९ ।।**

त्रिगुणत्वादिप्रधानधर्मानुक्तेर्न स्मृत्युक्तं प्रधानमन्तर्यामि ।। १९ ।।

**।। ॐ शारीरश्चोभयेऽपि हि भेदेनैनमधीयते ॐ ।। २० ।।**

'य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः' । (बृ.माध्यन्दिनपाठः)

'यो विज्ञाने तिष्ठन् विज्ञानादन्तरो
यं विज्ञानं न वेद यस्य विज्ञानं शरीरम्' । (बृ ५-७-२२)

इत्युभयेऽपि हि शाखिनो भेदेनैन(जीव)मधीयते ।

'शीर्यते नित्यमेवास्मात् विष्णोस्तु जगदीदृशम् ।
रमते च परो 'ह्यस्मिन् शरीरं तस्य तज्जगत्' ।।

इति वचनान्न शरीरत्वविरोधः ।। २० ।।

।। इत्यन्तर्याम्यधिकरणम् ।। ५ ।।

**अदृश्यत्वाधिकरणम् - ६**

अदृश्यत्वादिगुणाः विष्णोरुक्ताः । तत्र

'यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादम् ।
नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः ।।' (मुं.उ.१-१-६) इत्युक्त्वा,

यथोर्णनाभिस्सृजते गृह्णते च
यथा पृथिव्यामोषधयः सम्भवन्ति ।
यथा सतः पुरुषात्केशलोमानि
तथाऽक्षरात्सम्भवतीह विश्वम् ।। (मुं.उ.१-१-७)

इत्युक्त्वा तस्माच्च–

'अक्षरात्परतः परः' (मुं.उ.२-१-२) इति परः प्रतीयत इत्यतोऽब्रवीत्

**।। ॐ अदृश्यत्वादिगुणको धर्मोक्तेः ॐ ।। २१ ।।**

पृथिव्यादिदृष्टान्तमुक्त्वा 'अक्षरात्ससम्भवतीह विश्वम्' (मुं.उ. १-१-७) इत्यतः परं तत्परतः पराभिधानात्,

'कूटस्थोऽक्षर उच्यते' (भ.गी.१५-१६) इति स्मृतेश्च प्रकृतेः प्राप्तिः ।

ब्रह्मशब्दात्तत्परतः पराभिध्यानादेव च हिरण्यगर्भस्य ।

'तमेवं विद्वानमृत इह भवति' (तै.आ.३-१२-७) ।

'तत्कर्म हरितोषं यत्सा विद्या तन्मतिर्यया'

'अथ द्वे वाव विद्ये वेदितव्ये परा चैवापरा च ।
तत्र ये वेदा यान्यङ्गानि यान्युपाङ्गानि यानि प्रत्यङ्गानि साऽपरा ।
अथ परा यया स हरिर्वेदितव्यो योऽसावदृश्यो निर्गुणः परः परमात्मा' ।।

इत्यादिना तद्धर्मत्वेनावगतपरविद्याविषयत्वोक्तेर्विष्णुरेवादृश्य-त्वादिगुणकः ।। २१ ।।

**।। ॐ विशेषणभेदव्यपदेशाभ्यां च नेतरौ ॐ ।। २२ ।।**

'यः सर्वज्ञः सर्ववित् यस्य ज्ञानमयं तपः' (मुं.उ.१-१-९) इति विशेषणान्न प्रकृतिः ।

'तस्मादेतद्ब्रह्म नाम रूपमन्नं च जायते' (मुं.उ.१-१-९) इति भेदव्यपदेशान्न विरिञ्चः ।

'अपरं त्वक्षरं या सा प्रकृतिर्जडरूपिका ।
श्रीः परा प्रकृतिः प्रोक्ता चेतना विष्णुसंश्रया ।।
तामक्षरं परं प्राहुः परतः परमक्षरम् ।
हरिमेवाखिलगुणमक्षरत्रयमीरितम्' ।। इति स्कान्दे ।

त्र्यक्षराभिधानात् 'अक्षरात्परतः परः' इत्यपि विशेषणमेव ।

'जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः' (मुं.उ.३-१-२) इति भेदव्यपदेशादीश पदप्राप्तोऽपि न रुद्रः ।। २२ ।।

**।। ॐ रूपोपन्यासाच्च ॐ ।। २३ ।।**

'यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम्' । (मु.उ.३-१-३) इति ।

एको नारायण आसीन्न ब्रह्मा न च शङ्करः । स मुनिर्भूत्वा समचिन्तयत् । तत एते व्यजायन्त विश्वो हिरण्यगर्भोऽग्निर्यमो वरुणरुद्रेन्द्रा इति । तस्य हैतस्य परमस्य नारायणस्य चत्वारि रूपाणि शुक्लं रक्तं रौक्मं कृष्णमिति । स एतान्येतेभ्योऽभ्यचीक्लृपत् । विमिश्राणि व्यमिश्रयत् । अत एतादृगेतद्रूपमिति तस्यैव हि रूपाण्यभिधीयन्ते ।। २३ ।।

।। इति अदृश्यत्वाधिकरणम् ।। ६ ।।

**वैश्वानराधिकरणम् - ७**

अदृश्यत्वादिगुणेषु सर्वगतत्वं

'यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते' । (छां.उ.५-१८-१)

इति वैश्वानरस्योक्तमित्यत आह—

**।। ॐ वैश्वानरः साधारणशब्दविशेषात् ॐ ।। २४ ।।**

अग्नाविष्णवोः साधारणस्य वैश्वानरशब्दस्य विष्णावेव प्रसिद्धात्मशब्देन विशेषणाद्वैश्वानरो विष्णुरेव ।। २४ ।।

**।। ॐ स्मर्यमाणमनुमानं स्यादिति ॐ ।। २५ ।।**

'अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः' । (भ.गी.१५-१४)

इति स्मर्यमाणमत्रापि स एवोच्यत इत्यस्यानुमापकम् । समाख्यानात् । इति शब्दः समाख्याप्रदर्शकः ।। २५ ।।

**।। ॐ शब्दादिभ्योऽन्तःप्रतिष्ठानान्नेति चेन्न तथा दृष्ट्युपदेशादसम्भवात्पुरुषविधमपि चैनमधीयते ॐ ।। २६ ।।**

'अयमग्निर्वैश्वानरः' । (बृ.उ.७-९-१)

'वैश्वानरमृत आजातमग्निम्' । (ऋ.सं.६-७-१) इत्यादिशब्दः ।

'वैश्वानरे तद्धुतं भवति' । (छां.उ.५-२४-४)

'हृदयं गार्हपत्यो मनोऽन्वाहार्यपचन आस्यमाहवनीयः' । (छां.उ. ५-१८-२) इत्याद्यग्निलिङ्गमादिशब्दोक्तम् ।

'येनेदमन्नं पच्यते' (बृ.उ.७-९-१)

'तद्यद्भक्तं प्रथममागच्छेत्तद्धोमीयम्' (छां.उ.५-१९-१)

इत्यादिना पाचकत्वेनान्तःप्रतिष्ठानं च प्रतीयते । तस्मान्न विष्णुरिति चेन्न ।

'अथ ह इममात्मानमणोरणीयांसं परतः परं विश्वं हरिमुपासीतेति । सर्वनामा सर्वकर्मा सर्वलिङ्गः सर्वगुणः सर्वकामः सर्वधर्मः सर्वरूपः' इति ।

'स य एतमेवमात्मानं विश्वं हरिमारादरमुपास्ते तस्य सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेषु देवेषु सर्वेषु वेदेषु कामचारो भवति' ।

इति तत्तन्नामलिङ्गादिना तस्यैव दृष्ट्युपदेशान्महोपनिषदि ।।

'अनात्तत्वादनात्मान ऊनत्वाद् गुणराशितः ।
अब्रह्माणः परे सर्वे ब्रह्मात्मा विष्णुरेव हि' ।।

इत्यादिना 'को न आत्मा किं ब्रह्म' । (छां.उ.५-११-१) इत्यारम्भाच्च अन्येषामसम्भवाद्विष्णुरेव वैश्वानरः ।

'चन्द्रमा मनसो जातः चक्षोस्सूर्यो अजायत' । (तै.आ.३-१२)

इत्यादिना यः पुरुषाख्यो विष्णुरभिहितस्तद्विधमेवात्र

'मूर्धैव सुतेजाश्चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्मा' ।
(छां.उ.५-१८-२)

इत्यादिनैनं वैश्वानरमधीयते । चशब्देन सकलवेदतन्त्रपुराणादिषु विष्णुपरत्वं पुरुषसूक्तस्य दर्शयति । तथा च ब्राह्मे—

'यथैव पौरुषं सूक्तं नित्यं विष्णुपरायणम् ।
तथैव मे मनो नित्यं भूयाद्विष्णुपरायणम्' इति ।।

चतुर्वेदशिखायां च—

'सहस्रशीर्षा पुरुषस्सहस्राक्षस्सहस्रपात् इति । एष ह्येवाचिन्त्यः परः परमो हरिरादिरनादिरनन्तोऽनन्तशीर्षोऽनन्ताक्षोऽनन्तबाहुरनन्तगुणोऽनन्तरूपः ।' इति ।

बृहत्संहितायां च—

'यथा हि पौरुषं सूक्तं विष्णोरेवाभिधायकम् ।
न तथा सर्ववेदाश्च वेदाङ्गानि च नारद' ।। इत्यादि ।

'यस्मात् यज्जायते चाङ्गात् लोकवेदादिकं हरेः ।
तन्नामवाच्यमङ्गं तद्यथा ब्रह्मादिकं मुखम्' ।।

इति नारदीयवचनात् नाभेदोक्तिविरोधः ।। २६ ।।

**।। ॐ अत एव न देवता भूतं च ॐ ।। २७ ।।**

अग्निवैश्वानरादिशब्दस्तेजसि भूते अग्निदेवतायां च प्रसिद्धोऽप्यतः पूर्वोक्तहेतुत एवात्र न सा तच्चाभिधीयते ।। २७ ।।

**।। ॐ साक्षादप्यविरोधं जैमिनिः ॐ ।। २८ ।।**

नाम्न्यादयः शब्दा अग्न्यादिवाचकास्तथापि साक्षादेवानन्ययोगेन ब्रह्मवाचकैश्शब्दैः व्यवहारार्थमनभिज्ञानाच्चान्यत्र व्यवहरन्तीत्यभ्युपगमेऽविरोधं जैमिनिर्वक्ति ।

'व्यासचित्तस्थिताकाशात् अवच्छिन्नानि कानिचित् ।
अन्ये व्यवहरन्त्येतान्यूरीकृत्य गृहादिवत् ।।'

इति स्कान्दवचनात् न मतानां परस्परविरोधः ।। २८ ।।

**।। ॐ अभिव्यक्तेरित्याश्मरथ्यः ॐ ।। २९ ।।**

तत्र तत्र प्रसिद्धावप्यग्न्यादिषु ब्रह्मणोऽभिव्यक्तेरग्न्यादिसूक्तनियम इत्याश्मरथ्यः ।। २९ ।।

**।। ॐ अनुस्मृतेर्बादरिः ॐ ।। ३० ।।**

तत्र तत्रोक्तस्य विष्णोरग्न्यादिष्वनुस्मर्यमाणत्वात्तन्नियम इति बादरिः ।। ३० ।।

**।। ॐ सम्पत्तेरिति जैमिनिस्तथा हि दर्शयति ॐ ।।३१।।**

साक्षादप्यविरोधं वदन् जैमिनिः सूक्तादिनियममग्न्यादिसम्प्राप्त्या मन्यते ।

'तं यथा यथोपासते तदेव भवति' इति दर्शयति ।। ३१ ।।

न ह्यन्योपासकोऽन्यं प्राप्नुत इति युज्यत इत्यत आह—

**।। ॐ आमनन्ति चैनमस्मिन् ॐ ।। ३२ ।।**

एनं विष्णुमस्मिन्नग्न्यादावामनन्ति ।

'योऽग्नौ तिष्ठन्' । (बृ.उ.५-७-५) 'य एष एतस्मिन्नग्नौ तेजोमयोऽमृतमयः पुरुषः' । (बृ.उ.४-५-३) इत्यादिना ।। ३२ ।।

।। इति वैश्वानराधिकरणम् ।। ७ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्ब्रह्मसूत्रभाष्ये प्रथमाध्यायस्य द्वितीयः पादः ।। १,२ ।।

* * *

## प्रथमाध्यायस्य तृतीयः पादः

### द्युभ्वाधिकरणम् - १

तत्र चान्यत्र च प्रसिद्धानां शब्दानां विष्णौ समन्वयं प्रायेणास्मिन्पादे दर्शयति ।

विष्णोः परविद्याविषयत्वमुक्तम् । तत्र

'यस्मिन् द्यौः पृथिवी चान्तरिक्षमोतं मनः सह प्राणैश्च सर्वैस्तमेवैकं जानथ आत्मानम्' (मुं.उ.२-२-५) इत्यत्र

'प्राणानां ग्रन्थिरसि रुद्रो माऽऽविशान्तकः' (म.ना.उ.३-५)

'प्राणेश्वरः कृत्तिवासाः पिनाकी' (घृतसूक्तम्)

इत्यादिना रुद्रस्य प्राणाधारत्वप्रतीतेः ।

'स एषोऽन्तश्चरते बहुधा जायमानः' । (मुं.उ.२-२-६)

इति जीवलिङ्गाच्च तयोः प्राप्तिरित्यत उच्यते

**।। ॐ द्युभ्वाद्यायतनं स्वशब्दात् ॐ ।। १ ।।**

'तमेवैकं जानथ आत्मानम्' (मुं.उ.२-२-५) इत्यात्मशब्दात् द्युभ्वाद्याश्रयो विष्णुरेव ।

'आत्मब्रह्मादयः शब्दास्तमृते विष्णुमव्ययम् ।
न सम्भवन्ति यस्मात्तैर्नैवाप्ता गुणपूर्णता' इति ब्रह्मवैवर्ते ।।१।।

**।। ॐ मुक्तोपसृप्यव्यपदेशात् ॐ ।। २ ।।**

'अमृतस्यैष सेतुः' (मुं.उ.२-२-५) इति 'ब्रह्मविदाप्नोति परम्', (तै.उ.२-१) 'नारायणं महाज्ञेयं विश्वात्मानं परायणम्' (म.ना. उ.११), 'मुक्तानां परमा गतिः' (विष्णुसहस्रनामस्तोम्) 'एतमानन्दमयमात्मानमुपसङ्क्रामति' (तै.उ.२-८) इत्यादिना तस्यैव मुक्तप्राप्यत्वव्यपदेशात् ।

'बहुनाऽत्र किमुक्तेन यावच्छ्वेतं न गच्छति ।
योगी तावन्न मुक्तस्स्यादेष शास्त्रस्य निर्णयः' ।।
इत्यादित्यपुराणे ।। २ ।।

**।। ॐ नानुमानमतच्छब्दात् ॐ ।। ३ ।।**

नानुमानात्मकागमपरिकल्पितरुद्रोऽत्र वाच्यः । भस्मधरोग्रत्वादितच्छब्दाभावात् ।

'सोऽन्तकः स रुद्रः स प्राणभृत् स प्राणनायकः
स ईशो यो हरिर्योऽनन्तो यो विष्णुर्यः परः परोवरीयान्' ।

इत्यादिना प्राणग्रन्थिरुद्रत्वादेर्विष्णोरेवोक्तत्वात् ।

ब्रह्माण्डे च—

'रुजं द्रावयते यस्मात् रुद्रस्तस्माज्जनार्दनः ।
ईशनादेव चेशानो महादेवो महत्त्वतः ।।

पिबन्ति ये नरा नाकं मुक्तास्संसारसागरात् ।
तदाधारो यतो विष्णुः पिनाकीति ततः स्मृतः ।।
शिवः सुखात्मकत्वेन शर्वः शंरोधनात् हरिः ।
कृत्यात्मकमिदं देहं यतो वस्ते प्रवर्तयन् ।।
कृत्तिवासास्ततो देवो विरिञ्चश्च विरेचनात् ।
बृंहणाद्ब्रह्मनामाऽसौ ऐश्वर्यादिन्द्र उच्यते ।।
एवं नानाविधैश्शब्दैरेक एव त्रिविक्रमः ।
वेदेषु सपुराणेषु गीयते पुरुषोत्तमः' ।। इति ।

वामने च—

'न तु नारायणादीनां नाम्नामन्यत्र सम्भवः ।
अन्यनाम्नां गतिर्विष्णुरेक एव प्रकीर्तितः' ।। इति ।

स्कान्दे च—

'ऋते नारायणादीनि नामानि पुरुषोत्तमः ।
प्रादादन्यत्र भगवान् राजेवर्ते स्वकं पुरम्' ।। इति ।

'चतुर्मुखश्शतानन्दो ब्रह्मणः पद्मभूरिति ।
उग्रो भस्मधरो नग्नः कपालीति शिवस्य च ।
विशेषनामानि ददौ स्वकीयान्यपि केशवः' ।

इति च ब्राह्मे ।। ३ ।।

।। ॐ प्राणभृच्च ॐ ।। ४ ।।

एतैरेव हेतुभिर्न जीवो वायुश्च ।

'अजायमानो बहुधा विजायते' (तै.आ.३-१३-१) इति तस्यैव बहुधा जन्मोक्तेः ।। ४ ।।

**।। ॐ भेदव्यपदेशात् ॐ ।। ५ ।।**

न चैक्यं वाच्यम् ।

'जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानम्' (मुं.उ.३-१-२) इति भेदव्यपदेशात् ।। ५ ।।

**।। ॐ प्रकरणात् ॐ ।। ६ ।।**

'द्वे विद्ये वेदितव्ये' (मुं.उ.१-१-४) इति तस्य ह्येतत् प्रकरणम् ।। ६ ।।

**।। ॐ स्थित्यदनाभ्यां च ॐ ।। ७ ।।**

'द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ।
तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति' ।
(मुं.उ.३-१-१)

इति ईशजीवयोः स्थित्यदनोक्तेः ।। ७ ।।

।। इति द्युभ्वाधिकरणम् ।। १ ।।

**भूमाधिकरणम् - २**

'प्राणो वा आशाया भूयान्' इत्युक्त्वा 'यो वै भूमा तत्सुखम्' (छां.उ.७-२३) इत्युक्तेस्तस्यैव भूमत्वप्राप्तिः ।

'उत्क्रान्तप्राणान्' (छां.उ.७-१५-३) इत्यादिलिङ्गात्प्राणशब्दश्च वायुवाचीत्यतो वक्ति–

**।। ॐ भूमा सम्प्रसादादध्युपदेशात् ॐ ।। ८ ।।**

'सम्प्रसादात्' पूर्णसुखरूपत्वात् । 'अध्युपदेशात्' सर्वेषामुपर्युपदेशाच्च विष्णुरेव भूमा ।

'सहस्रशीर्षऽदेवं विश्वाक्षं विश्वशम्भुवम् ।
विश्वं नारायणं देवमक्षरं परमं पदम् ।।
विश्वतः परमां नित्यम्' । (म.ना.उ.११) इति हि श्रुतिः ।

'तमुत्क्रामन्तं प्राणोऽनूत्क्रामति' (बृ.उ.६-४-२)

इत्यादिना नोत्क्रमणादिलिङ्गविरोधोऽपि ।। ८ ।।

**।। ॐ धर्मोपपत्तेश्च ॐ ।। ९ ।।**

सर्वगतत्वादिधर्मोपपत्तेश्च ।। ९ ।।

इति भूमाधिकरणम् ।। २ ।।

**अक्षराधिकरणम् - ३**

अदृश्यत्वादिगुणा विष्णोरुक्ताः 'अदृष्टं द्रष्टृ अश्रुतं श्रोतृ' (बृ.उ.५-८-११) इत्यादिना ।

'अहं सोममाहनसं बिभर्मि' (ऋ.सं.१०-१२५-२) इत्यादेस्तस्यापि सम्भवात् मध्यमाक्षरस्योक्ता इत्यतो ब्रूते–

**।। ॐ अक्षरमम्बरान्तधृतेः ॐ ।। १० ।।**

'एतस्मिन् खल्वक्षरे गार्गि आकाश ओतश्च प्रोतश्च'
(बृ.उ.५-८-११)

इत्यम्बरान्तस्य सर्वस्य धृतेर्ब्रह्मैवाक्षरम् ।

'य उ त्रिधातु पृथिवीमुत द्यामेको दाधार भुवनानि विश्वा' ।
(ऋ.सं.१-१५४-४)

'भर्ता सन् भ्रियमाणो बिभर्ति । एको देवो बहुधा निविष्टः ।
यदा भारं तन्द्रयते स भर्तुम् । पराऽस्य भारं पुनरस्तमेति' ।।
(तै.आ.३-१४)

'यस्मिन्निदं सं च वि चैधि सर्वं यस्मिन्देवा अधि विश्वे निषेदुः' । (म.ना.उ.१-२)

इत्यादिश्रुतेः ।

'पृथिव्यादिप्रकृत्यन्तं भूतं भव्यं भवच्च यत् ।
विष्णुरेको बिभर्तीदं नान्यस्तस्मात्क्षमो धृतौ' ।।

इति च स्कान्दे ।। १० ।।

**।। ॐ सा च प्रशासनात् ॐ ।। ११ ।।**

सा च धृतिः प्रशासनादुच्यते । 'एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः' (बृ.उ.५-८-९) इत्यादिना ।

तच्च प्रशासनं विष्णोरेव ।

'सप्तार्धगर्भा भुवनस्य रेतो विष्णोस्तिष्ठन्ति प्रदिशा विधर्मणि' ।
(ऋ.सं.१-१६४-३६)

'चतुर्भिः साकं नवतिं च नामभिश्चक्रं न वृत्तं व्यतीं रवीविपत्' । (ऋ.सं.१-१५५-६) इत्यादिश्रुतेः ।

'एकः शास्ता न द्वितीयोऽस्ति शास्ता' । (भारते)

'यो हृच्छयस्तमहमिह ब्रवीमि' ।

'न केवलं मे भवतश्च राजन् स वै बलं बलिनां चापरेषाम्' ॥
(भागवते)

इत्यादेश्च ॥ ११ ॥

**॥ ॐ अन्यभावव्यावृत्तेश्च ॐ ॥ १२ ॥**

'अस्थूलमनणु' (बृ.उ.५-८-८) इत्यादिना स्थूलाण्वादीनामन्यवस्तुस्वभावानां व्यावृत्तेश्च ।

'अस्थूलोऽनणुरमध्यमो मध्यमोऽव्यापको व्यापको
योऽसौ हरिरादिरनादिरविश्वो विश्वः सगुणो निर्गुणः'

इत्यादेर्विष्णोरेव ते धर्माः ।

'अस्थूलोऽनणुरूपोऽसौ अविश्वो विश्व एव च ।
विरुद्धधर्मरूपोऽसौ ऐश्वर्यात् पुरुषोत्तमः' ।
इति च ब्राह्मे ॥ १२ ॥

॥ इति अक्षराधिकरणम् ॥ ३ ॥

### सदधिकरणम् - ४

'सदेव सोम्य इदमग्र आसीत्' (छां.उ.६-२-१) इत्यादिना सतः स्रष्टृत्वमुच्यते । तच्च सत् 'बहु स्यां प्रजायेय' (छां.उ.६-२-३) इति परिणामप्रतीतेर्न विष्णुः । स हि–

'अविकारस्सदा शुद्धो नित्य आत्मा सदा हरिः'

इत्यादिनाऽविकारः प्रसिद्ध इत्यतो ब्रवीति—

**।। ॐ ईक्षतिकर्मव्यपदेशात्सः ॐ ।। १३ ।।**

'तदैक्षत' इतीक्षतिकर्मव्यपदेशात्स एव विष्णुरत्रोच्यते ।

'नान्योऽतोऽस्ति द्रष्टा' (बृ.उ.५-७-२३),

'नान्यदतोऽस्ति द्रष्टृ' (बृ.उ.५-८-११)

इत्यादिना तस्यैव हि तल्लक्षणम् ।

बहुत्वं चाविकारेणैवोक्तं 'अजायमानो बहुधा विजायत' (तै.आ.३-१३-१) इति ।। १३ ।।

।। इति सदधिकरणम् ।। ४ ।।

### दहराधिकरणम् - ५

चन्द्रादित्याद्याधारत्वं विष्णोरुक्तम् । तच्च 'अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तर आकाशः' ...'किं तदत्र विद्यते...' (छां.उ.८-१-२)

'उभे अस्मिन् द्यावा पृथिवी अन्तरेव समाहिते ।
उभावग्निश्च वायुश्च सूर्याचन्द्रमसावुभौ ।।
विद्युन्नक्षत्राणि' (छां.उ.८-१-३)

इत्यादिना आकाशस्य प्रतीयते ।

स चाकाशो न विष्णुः ।

'तस्यान्ते सुषिरꣳ सूक्ष्मं तस्मिन् सर्वं प्रतिष्ठितम्' ।
(म.ना.उ.११)

इति श्रुतेः इत्यत आह—

।। ॐ दहर उत्तरेभ्यः ॐ ।। १४ ।।

'य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोकोऽविजिघत्सोऽपिपासः सत्यकामस्सत्यसङ्कल्पः सोऽन्वेष्टव्यः स विजिज्ञासितव्यः' । (छा.८-७-३) इत्यादिभ्य उत्तरेभ्यो गुणेभ्यो दहरे विष्णुरेव ।

'योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येति' ।
(बृ.उ.५-५)

'स एष सर्वेभ्यः पाप्मभ्य उदितः' (छां.उ.१-६-७)

इत्यादिना विष्णोरेव हि ते गुणाः ।

'नित्यतीर्णाशनायादिरेक एव हरिः स्वतः ।
अशनायादिकानन्ये तत्प्रसादात्तरन्ति हि' ।। इति पाद्मे ।

सापेक्ष-निरपेक्षयोश्च निरपेक्षं स्वीकर्तव्यम् ।

'सत्यकामोऽपरो नास्ति तमृते विष्णुमव्ययम् ।
सत्यकामत्वमन्येषां भवेत्तत्काम्यकामिता' ।।
इति च स्कान्दे ।। २४ ।।

**।। ॐ गतिशब्दाभ्यां तथा हि दृष्टं लिङ्गं च ॐ ।। १५ ।।**

'अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्ति' ।
(छां.उ.८-३-२)

इति सुप्तस्य तद्गतिर्ब्रह्मशब्दश्चोच्यते ।

'सता सोम्य तदा सम्पन्नो भवति' (छां.उ.६-८-१) इति श्रुतेस्तं हि सुप्तो गच्छति ।

'अरश्च ह वै ण्यश्च अर्णवौ ब्रह्मलोके' । (छां.उ.८-५-३) इति लिङ्गं च तथा दृष्टम् ।

'अरश्च वै ण्यश्च सुधासमुद्रौ तत्रैव सर्वाभिमतप्रदौ द्वौ' ।

इत्यादिना तस्यैव हि तल्लक्षणत्वेनोच्यते ।। १५ ।।

**।। ॐ धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः ॐ ।। १६ ।।**

'एष सेतुर्विधृतिः' (छां.उ.८-४-१) इति धृतेः 'एष भूताधिपतिरेष भूतपालः' (बृ.उ.६-४-२१) इत्याद्यस्य महिम्नोऽस्मिन्नुपलब्धेः ।

'एतस्मिन्नु खल्वक्षरे गार्गि आकाश ओतश्च प्रोतश्च'
(बृ.उ.५-८-११)

'एतस्य वा अक्षरस्य प्रशासने गार्गि' (बृ.उ.५-८-९)

'स हि सर्वाधिपतिः स हि सर्वपालः स ईशः स विष्णुः' ।

'पतिं विश्वस्यात्मेश्वरम्' (म.ना.उ.११)

इत्यादि श्रुतिभ्यस्तस्य ह्येष महिमा ।

'सर्वे शो(भ्यो) विष्णुरेवैको नान्योऽस्ति जगतः पतिः' ।
इति स्कान्दे ॥ १६ ॥

॥ ॐ प्रसिद्धेश्च ॐ ॥ १७ ॥

'तत्रापि दहं गगनं विशोकस्तस्मिन् यदन्तस्तदुपासितव्यम्' । (म.ना.उ.१०-७) इति प्रसिद्धेश्च । तदन्तःस्थत्वापेक्षत्वान्न सुषिरश्रुतिविरोधः ॥ १७ ॥

॥ ॐ इतरपरामर्शात्स इति चेन्नासम्भवात् ॐ ॥ १८ ॥

'परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते' ।
(छां.उ.८-१२-३)

'एष आत्मेति होवाच' इति (छां.उ.४-१५-१) जीवपरामर्शात्स इति चेन्न ।

तस्य स्वतोऽपहतपाप्मत्वाद्यसम्भवात् ॥ १८ ॥

।। ॐ उत्तराच्चेदाविर्भूतस्वरूपस्तु ॐ ।। १९ ।।

'स तत्र पर्येति जक्षन् क्रीडन् रममाणः' (छां.उ.८-१२-३) इत्याद्युत्तरवचनाज्जीव एवेति चेन्न । तत्र हि परमेश्वरप्रसादादाविर्भूतस्वरूपो मुक्त उच्यते । यत्प्रसादात् स मुक्तो भवति स भगवान् पूर्वोक्तः ।। १९ ।।

।। ॐ अन्यार्थश्च परामर्शः ॐ ।। २० ।।

यं प्राप्य स्वेन रूपेण जीवोऽभिनिष्पद्यते स एष आत्मा' इति परमात्मार्थश्च परामर्शः ।। २० ।।

।। ॐ अल्पश्रुतेरिति चेत्तदुक्तम् ॐ ।। २१ ।।

'दहर' (छां.उ.८-१-१) इत्यल्पश्रुतेर्नेति चेन्न । निचाय्यत्वादेवं व्योमवच्च' इत्युक्तत्वात् ।

'एष म आत्माऽन्तर्हृदये ज्यायान्' (छां.उ.३-१४-३) इति श्रुत्युक्तत्वाच्च ।। २१ ।।

।। इति दहराधिकरणम् ।। ५ ।।

अनुकृत्यधिकरणम् - ६

अदृश्यत्वादयः परमेश्वरगुणा उक्ताः ।

'तेषां सुखं शाश्वतं नेतरेषाम्' ।

'तदेतदिति मन्यन्तेऽनिर्देश्यं परमं सुखम्' ।

(क.उ.५-१२,१४) इत्यादिना ज्ञानिसुखस्याप्यनिर्देश्यत्वमज्ञेयत्वं चोच्यत इत्यतो वक्ति—

**।। ॐ अनुकृतेस्तस्य च ॐ ।। २२ ।।**

'तमेव भान्तमनुभाति सर्वम्' (क.उ.५-१५) इत्यनुकृतेः,

'तस्य भासा सर्वमिदं विभाति'

(क.उ.५-१५) इति वचनाच्च परमात्मैवानिर्देश्यसुखरूपः ।

न हि ज्ञानिसुखमनुभाति सर्वम् । न च तद्भासा ।

'अहं तत्तेजो रश्मीत्' इति नारायणभासा हि सर्वं भाति ।। २२ ।।

**।। ॐ अपि स्मर्यते ॐ ।। २३ ।।**

'यदादित्यगतं तेजो जगद्भासयतेऽखिलम् ।
यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम्' ।।
(भ.गी.१५-१२) इति ।

'न तद्भासयते सूर्यो न शशाङ्को न पावकः ।
यद्गत्वा न निवर्तन्ते तद्धाम परमं मम' ।। (भ.गी.१५-६)

इति च ।। २३ ।।

।। इति अनुकृत्यधिकरणम् ।। ६ ।।

## वामनाधिकरणम् - ७

विष्णुरेव जिज्ञास्य इत्युक्तम् । तत्र–

'ऊर्ध्वं प्राणमुन्नयत्यपानं प्रत्यगस्यति ।
मध्ये वामनमासीनं विश्वे देवा उपासते' (क.उ.५-३)

इति सर्वदेवोपास्यः कश्चित् प्रतीयते । स च

'एवमेवैष प्राण इतरान्प्राणान्पृथक्पृथगेव सन्निधत्ते' (प्र.उ.३-४)

'योऽयं मध्यमः प्राणः' (बृ.उ.३-६-२१)

'कुविदङ्ग.......' (ऋ.सं.७-९१-१)

इत्यादिना प्राणव्यवस्थापकत्वान्मध्यमत्वात्सर्वदेवोपास्यत्वाच्च वायुरेवेति प्रतीयते । अतोऽब्रवीत् ।।

**।। ॐ शब्दादेव प्रमितः ॐ ।। २४ ।।**

वामनशब्दादेव विष्णुरिति प्रमितः । न हि श्रुतेर्लिङ्गं बलवत् ।

'श्रुतिर्लिङ्गं समाख्या च वाक्यं प्रकरणं तथा ।
पूर्वं पूर्वं बलीयः स्यादेवमागमनिर्णयः' ।। इति स्कान्दे ।

तच्च लिङ्गं विष्णोरेव । तस्यैव प्राणत्वोक्तेः 'तद्वै त्वं प्राणो अभवः' इति ।। २४ ।।

**।। ॐ हृद्यपेक्षया तु मनुष्याधिकारत्वात् ॐ ।। २५ ।।**

सर्वगतस्यापि तस्याङ्गुष्ठमात्रत्वं हृद्यवकाशापेक्षया युज्यते । इतरप्राणिनामङ्गुष्ठाभावेऽपि मनुष्याधिकारत्वान्न विरोधः ।।२५।।

।। इति वामनाधिकरणम् ।। ७ ।।

देवताधिकरणम् - ८

मनुष्याणामेव वेदविद्यायामधिकार इत्युक्तम् ।

तिर्यगाद्यपेक्षयैव मनुष्यत्वविशेषणमुक्तं, न तु देवाद्यपेक्षये-त्याह—

**।। ॐ तदुपर्यपि बादरायणः सम्भवात् ॐ ।। २६ ।।**

तदुपरि मनुष्याणां सतां देवादित्वप्राप्त्युपरि । सम्भवति हि तेषां विशिष्टबुद्ध्यादिभावात् । तिर्यगादीनां तदभावादभावः । तेषामपि यत्र विशिष्टबुद्ध्यादिभावस्तत्राविरोधः । निषेधाभावात् । दृश्यन्ते हि जरितार्यादयः ।। २६ ।।

**।। ॐ विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात् ॐ ।। २७ ।।**

मानुष्या एव देवादयो भवन्तीति तदुपरीत्युक्तम् । तत्र यदि मनुष्याः सन्तो देवादयो भवन्ति तत्पूर्वं देवताभावाद्देवतोद्दिष्ट-कर्मणि विरोध इति चेन्न ।

अनेकेषां देवतापदप्राप्तेर्दर्शनात् ।

'ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः' । (तै.आ.३-१२) इति ।। २७ ।।

**।। ॐ शब्द इति चेन्नातः प्रभवात्प्रत्यक्षानुमानाभ्याम् ॐ ।। २८ ।।**

'वाचा विरूप नित्यया' (ऋ.सं.८-६४-६) इत्यादिश्रुतेराम्य-निश्चयान्नित्यत्वापेक्षत्वाच्च मूलप्रमाणस्य । स्वतःप्रामाण्यप्रसिद्धेश्च नित्यत्वाद्वेदस्य तदुदितानां देवानामनित्यत्वात् । पुनरन्यभाव-नियमाभावाच्च शब्दे विरोध इति चेन्न ।

'सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्' (महा.ना.उ.५.७)

'यथैव नियमः काले सुरादिनियमस्तथा ।
तस्मान्नानीदृशं क्वापि विश्वमेतद्भविष्यति' ।। इत्यादेः ।

अत एव शब्दात्तेषां प्रभवनियमात्, महतां प्रत्यक्षात् । 'यथेदानीं तथोपर्यपि देवा भविष्यन्ति' इति इतरेषामनुमानाच्च ।। २८ ।।

**।। ॐ अत एव च नित्यत्वम् ॐ ।। २९ ।।**

अत एव शब्दस्य नित्यत्वादेव च देवप्रवाहनित्यत्वं युक्तम् ।। २९ ।।

**।। ॐ समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात्स्मृतेश्च ॐ ।। ३० ।।**

अतीतानागतानां देवानां समाननामरूपत्वात्प्राप्तपदानां मुक्त्याऽऽवृत्तावप्यविरोधः ।

'यथापूर्वम्' इति (म.ना.उ.५-७) दर्शनात् ।

'अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा ।
ऋषीणां नामधेयानि याश्च वेदेषु दृष्टयः ।
वेदशब्देभ्य एवादौ निर्ममे स महेश्वरः' ।। इति स्मृतेश्च ।।३०।।

**।। ॐ मध्वादिष्वसम्भवादनधिकारं जैमिनिः ॐ ।। ३१ ।।**

'वसूनामेवैको भूत्वा' (छां.उ.३-६-२) इत्यादिना प्राप्यफलत्वात् प्राप्तपदानां देवानां मध्वादिविद्यास्वनधिकारं जैमिनिर्मन्यते ।। ३१ ।।

**।। ॐ ज्योतिषि भावाच्च ॐ ।। ३२ ।।**

ज्योतिषि सर्वज्ञत्वे भावाच्च । आदित्यप्रकाशेऽन्तर्भाववत्तज्ज्ञाने सर्ववस्तूनामन्तर्भावात् । नित्यसिद्धत्वाच्च विद्यानाम् ।।३२।

**।। ॐ भावं तु बादरायणोऽस्ति हि ॐ ।। ३३ ।।**

फलविशेषभावात्प्राप्तपदानामपि देवानां मध्वादिष्वप्यधिकारं बादरायणो मन्यते । अस्ति हि प्रकाशविशेषः ।

'यावत्सेवा परे तत्त्वे तावत्सुखविशेषता ।
सम्भवाच्च प्रकाशस्य परमेकमृते हरिम् ।।

तेषां सामर्थ्ययोगाच्च देवानामप्युपासनम् ।
सर्वं विधीयते नित्यं सर्वयज्ञादिकर्म च' ।। इति स्कान्दे ।

उक्तफलानधिकारमात्रं जैमिनिमतम् । अतो न मतविरोधः ।

'सर्वज्ञस्यैव कृष्णस्य त्वेकदेशविचिन्तितम् ।
स्वीकृत्य मुनयो ब्रूयुस्तन्मतं न विरुध्यते' ।।
इति ब्राह्मे ।। ३३ ।।

।। इति देवताधिकरणम् ।। ८ ।।

**अपशूद्राधिकरणम् - ९**

मनुष्याधिकारत्वादित्युक्तेऽविशेषाच्छूद्रस्यापि 'अह हारेत्वा शूद्र' इति (छां.उ.४-२-३) पौत्रायणोक्तेरधिकार इत्यत आह—

**।। ॐ शुगस्य तदनादरश्रवणात्**
**तदाऽऽद्रवणात्सूच्यते हि ॐ ।। ३४ ।।**

नासौ पौत्रायणश्शूद्रः, शुचाऽऽद्रवणमेव शूद्रत्वम् ।

'कम्वर एनमेतत्सन्तम्' (छां.उ.४-१-३) इत्यनादरश्रवणात् ।

'स ह सञ्जिहान एव क्षत्तारमुवाच' । (छां.उ.४-१-५) इति सूच्यते हि ।। ३४ ।।

**।। ॐ क्षत्रियत्वावगतेश्चोत्तरत्र**
**चैत्ररथेन लिङ्गात् ॐ ।। ३५ ।।**

अयमश्वतरीरथ इति चित्ररथसम्बन्धित्वेन लिङ्गेन पौत्रायणस्य क्षत्रियत्वावगतेश्च ।

'रथस्त्वश्वतरीयुक्तश्चित्र इत्यभिधीयते' । इति ब्राह्मे ।

'यत्र वेदो रथस्तत्र न वेदो यत्र नो रथः' इति ब्रह्मवैवर्ते ।। ३५ ।।

**।। ॐ संस्कारपरामर्शात्तदभावाभिलापाच्च ॐ ।। ३६ ।।**

'अष्टवर्षं ब्राह्मणमुपनयीत, तमध्यापयीत' ।

इत्यध्ययनार्थं संस्कारपरामर्शात् ।

'नाग्निर्न यज्ञो न क्रिया न संस्कारो न व्रतानि शूद्रस्य' ।

इति पैङ्गिश्रुतौ संस्काराभावाभिलापाच्च ।

उत्तमस्त्रीणां तु न शूद्रवत् ।

'सपत्नीं मे पराधम' इत्यादिष्वधिकारदर्शनात् ।

संस्काराभावेनाभावस्तु सामान्येन । अस्ति च तासां संस्कारः ।

'स्त्रीणां प्रदानकर्मैव यथोपनयनं तथा' । इति स्मृतेः ।।३६।।

**।। ॐ तदभावनिर्धारणे च प्रवृत्तेः ॐ ।। ३७ ।।**

'नाहमेतद्वेद भो यद्गोत्रोऽहमस्मि' (छां.उ.४-४) इति सत्य-वचनेन सत्यकामस्य शूद्रत्वाभावनिर्धारणे हारिद्रुमतस्य 'नैतद-

ब्राह्मणो विवक्तुमर्हति' (छां.उ.४-५) इति तत्संस्कारे प्रवृत्तेश्च ।। ३७ ।।

**।। ॐ श्रवणाध्ययनार्थप्रतिषेधात्स्मृतेश्च ॐ ।। ३८ ।।**

'श्रवणे त्रपुजतुभ्यां श्रोत्रपरिपूरणम् । अध्ययने जिह्वाच्छेदः । अर्थावधारणे हृदयविदारणम्' । (गौतमधर्मसूत्रं.१२-४-...७) इति प्रतिषेधात् ।

'नाग्निर्न यज्ञश्शूद्रस्य तथैवाध्ययनं कुतः ।
केवलैव तु शुश्रूषा त्रिवर्णानां विधीयते' ।। इति स्मृतेश्च ।

विदुरादीनां तूत्पन्नज्ञानत्वात्कश्चिद्विशेषः ।। ३८ ।।

।। इति अपशूद्राधिकरणम् ।। ९ ।।

**कम्पनाधिकरणम् - १०**

'यदिदं किञ्च जगत्सर्वं प्राण एजति निःसृतम् ।
महद्भयं वज्रमुद्यतं य एतद्विदुरमृतास्ते भवन्ति' (क.उ.२-३-२)

इत्युद्यतवज्रज्ञानान्मोक्षः श्रूयत इत्यतोऽब्रवीत् ।

**।। ॐ कम्पनात् ॐ ।। ३९ ।।**

एजतीति कम्पनवचनादुद्यतवज्रो भगवानेव ।

'को ह्येवान्यात् कः प्राण्याद्यदेष आकाश आनन्दो न स्यात् ।' (तै.उ.२-७-९) इति हि श्रुतिः ।

अयमश्वतरीरथ इति चित्ररथसम्बन्धित्वेन लिङ्गेन पौत्रायणस्य क्षत्रियत्वावगतेश्च ।

'रथस्त्वश्वतरीयुक्तश्चित्र इत्यभिधीयते' । इति ब्राह्मे ।

'यत्र वेदो रथस्तत्र न वेदो यत्र नो रथः' इति ब्रह्मवैवर्ते ।। ३५ ।।

।। ॐ **संस्कारपरामर्शात्तदभावाभिलापाच्च** ॐ ।। ३६ ।।

'अष्टवर्षं ब्राह्मणमुपनयीत, तमध्यापयीत' ।

इत्यध्ययनार्थं संस्कारपरामर्शात् ।

'नाग्निर्न यज्ञो न क्रिया न संस्कारो न व्रतानि शूद्रस्य' ।

इति पैङ्गिश्रुतौ संस्काराभावाभिलापाच्च ।

उत्तमस्त्रीणां तु न शूद्रवत् ।

'सपत्नीं मे पराधम' इत्यादिष्वधिकारदर्शनात् ।

संस्काराभावेनाभावस्तु सामान्येन । अस्ति च तासां संस्कारः ।

'स्त्रीणां प्रदानकर्मैव यथोपनयनं तथा' । इति स्मृतेः ।।३६।।

।। ॐ **तदभावनिर्धारणे च प्रवृत्तेः** ॐ ।। ३७ ।।

'नाहमेतद्वेद भो यद्गोत्रोऽहमस्मि' (छां.उ.४-४) इति सत्यवचनेन सत्यकामस्य शूद्रत्वाभावनिर्धारणे हारिद्रुमतस्य 'नैतद-

ब्राह्मणो विवक्तुमर्हति' (छां.उ.४-५) इति तत्संस्कारे प्रवृत्तेश्च ।। ३७ ।।

**।। ॐ श्रवणाध्ययनार्थप्रतिषेधात्स्मृतेश्च ॐ ।। ३८ ।।**

'श्रवणे त्रपुजतुभ्यां श्रोत्रपरिपूरणम् । अध्ययने जिह्वाच्छेदः । अर्थावधारणे हृदयविदारणम्' । (गौतमधर्मसूत्रं.१२-४-...७) इति प्रतिषेधात् ।

'नाग्निर्न यज्ञश्शूद्रस्य तथैवाध्ययनं कुतः ।
केवलैव तु शुश्रूषा त्रिवर्णानां विधीयते' ।। इति स्मृतेश्च ।

विदुरादीनां तूत्पन्नज्ञानत्वात्कश्चिद्विशेषः ।। ३८ ।।

।। इति अपशूद्राधिकरणम् ।। ९ ।।

**कम्पनाधिकरणम् - १०**

'यदिदं किञ्च जगत्सर्वं प्राण एजति निःसृतम् ।
महद्भयं वज्रमुद्यतं य एतद्विदुरमृतास्ते भवन्ति' (क.उ.२-३-२)

इत्युद्यतवज्रज्ञानान्मोक्षः श्रूयत इत्यतोऽब्रवीत् ।

**।। ॐ कम्पनात् ॐ ।। ३९ ।।**

एजतीति कम्पनवचनादुद्यतवज्रो भगवानेव ।

'को ह्येवान्यात् कः प्राण्याद्यदेष आकाश आनन्दो न स्यात् ।' (तै.उ.२-७-९) इति हि श्रुतिः ।

'प्राणस्य प्राणमुत चक्षुषश्चक्षुः' (बृ.उ.६-४-१८) इति च ।

'नभस्वतोऽपि सर्वाः स्युश्चेष्टा भगवतो हरेः ।
किमुतान्यस्य जगतो यस्य चेष्टा नभस्वतः' ।। इति स्कान्दे ।

'चक्रं चङ्क्रमणादेष वर्जनाद्वज्रमुच्यते ।
खण्डनात्खड्ग एवैष हेतिनामा स्वयं हरिः' ।।
इति ब्रह्मवैवर्ते ।। ३९ ।।

।। इति कम्पनाधिकरणम् ।। १० ।।

## ज्योतिरधिकरणम् - ११

हृदय आहितं ज्योतिः परमात्मेत्युक्तम् । तत्र 'योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः' (बृ.उ.६-३-७) इत्यत्र 'उभौ लोकावनुसञ्चरति' (बृ.उ.६-३-७) इति वचनाज्जीव इति प्रतीयत इत्यत उच्यते—

### ।। ॐ ज्योतिर्दर्शनात् ॐ ।। ४० ।।

'विष्णुरेव ज्योतिर्विष्णुरेव ब्रह्म विष्णुरेवात्मा विष्णुरेव बलं विष्णुरेव यशो विष्णुरेवानन्दः' । इति दर्शनाच्चतुर्वेदशिखायां ज्योतिर्विष्णुरेव । 'प्राज्ञेनात्मनाऽन्वारूढ उत्सर्जद्याति' (बृ.उ.६-३-३५) इति वचनात्तस्यापि लोकसञ्चरणमस्त्येव ।। ४० ।।

।। इति ज्योतिरधिकरणम् ।। ११ ।।

### आकाशाधिकरणम् - १२

सर्वाधारत्वं विष्णोरुक्तम् । तच्च 'आकाशो वै नाम नामरूपयोर्निर्वहिता' (छां.उ.८-१४-१) इत्यत्राकाशस्य प्रतीयते । 'वै नाम' इति प्रसिद्धोपदेशात् । प्रसिद्धाकाशश्चाङ्गीकर्तव्य इत्यत उच्यते—

**।। ॐ आकाशोऽर्थान्तरत्वादिव्यपदेशात् ॐ ।। ४१ ।।**

'ते यदन्तरा तद् ब्रह्म' (छां.उ.८-१४-१) इत्यर्थान्तरत्वादिव्यपदेशादाकाशो हरिरेव । 'अवर्णं' 'यतो वाचो निवर्तन्ते' (तै.उ.२-९) इत्यादिश्रुतेस्तस्यैव हि तल्लक्षणम् ।

'अनामा सोऽप्रसिद्धत्वादरूपो भूतवर्जनात्' । इति ब्राह्मे ।। ४१ ।।

।। इति आकाशाधिकरणम् ।। १२ ।।

### सुषुप्त्यधिकरणम् - १३

असङ्गत्वं परमात्मन उक्तम् । तच्च–

'स यत्तत्र किञ्चित्पश्यत्यनन्वागतस्तेन भवत्यसङ्गो ह्ययं पुरुषः' । (बृ.उ.६-३-१५) इति स्वप्नादिद्रष्टुः प्रतीयते । स च जीवः प्रसिद्धेरित्यतो वक्ति—

**।। ॐ सुषुप्त्युत्क्रान्त्योर्भेदेन ॐ ।। ४२ ।।**

'प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम्' । (बृ.उ.६-३-२१)

'प्राज्ञेनात्मनाऽन्वारूढ उत्सर्जद्याति' (बृ.उ.६-३-३५)

इति भेदव्यपदेशान्न जीवः, पर एवासङ्गः । स्वप्नादिद्रष्टृत्वं च सर्वज्ञत्वात्तस्यैव युज्यते ।। ४२ ।।

।। इति सुषुप्त्यधिकरणम् ।। १३ ।।

**ब्राह्मणाधिकरणम् - १४**

'एष नित्यो महिमा ब्राह्मणस्य' (बृ.उ.६-४-२२) इति ब्राह्मणस्यापि नित्यमहिमा प्रतीयते । स च ब्राह्मणः 'स वा एष महानज आत्मा' (बृ.उ.६-४-२४) इत्यजशब्दाद्विरिञ्च इति प्राप्तम् । देवानां च विद्याकर्मणोः पदप्राप्तिः सूचिता तदुपर्यपीति । अतो ब्रवीति—

**।। ॐ पत्यादिशब्देभ्यः ॐ ।। ४३ ।।**

'सर्वस्याधिपतिः सर्वस्येशानः...स वा एष नेति नेति (बृ.उ.६-४-२१) इत्यादिशब्देभ्यो नित्यमहिमा विष्णुरेव ।

'उतामृतत्वस्येशानः । यदन्नेनातिरोहति' । (तै.आ.३-१२)

'सप्तार्धगर्भा भुवनस्य रेतो विष्णोस्तिष्ठन्ति प्रदिशा विधर्मणि' । (ऋ.सं.१-१६४-३६)

'स योऽतोऽश्रुतः' (ऐ.आ.३-२-४)

इत्यादिश्रुतिभ्यस्तस्यैव हि ते शब्दाः ।। ४३ ।।

।। इति ब्राह्मणाधिकरणम् ।। १४ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्ब्रह्मसूत्रभाष्ये प्रथमाध्यायस्य तृतीयः पादः ।। १ ।। ३ ।।

# प्रथमाध्यायस्य चतुर्थः पादः

## आनुमानिकाधिकरणम् - १

श्रुतिलिङ्गादिभिरन्यत्रैव प्रसिद्धानामपि शब्दानां सामस्त्येन विशेषहेतुभिर्विष्णावेव प्रवृत्तिं दर्शयत्यस्मिन्पादे ।

**।। ॐ आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च ॐ ।। १ ।।**

'तत्तु समन्वयात्' (ब्र.सू.१-१-४) इति सर्वशब्दानां परमेश्वरे समन्वय उक्तः । तन्न युज्यते । यतो 'अव्यक्तात्पुरुषः परः' (क.उ.१-३-११) इति साङ्ख्यानुमानपरिकल्पितं प्रधानमप्येकेषां शाखिनामुच्यत इति चेन्न, तस्यैव पारतन्त्र्याच्छरीररूपकेऽव्यक्ते विन्यस्तस्य परमात्मन एवाव्यक्तशब्देन गृहीतेः । कप्रत्ययः कुत्सने । परमात्मन एवाव्यक्तशब्दः । तत्तन्त्रत्वेन तच्छरीर-रूपत्वादितरस्याप्यव्यक्तशब्दः ।

'तुच्छेनाभ्वपिहितं यदासीत्' (ऋ.सं.१०-१२९-३) इति दर्शयति च ।

'अव्यक्तमचलं शान्तं निष्कलं निष्क्रियं परम् ।
यो वेद हरिमात्मानं स भयादनुमुच्यते' ।।

इति पिप्पलादशाखायाम् ।

'अक्षरं ब्रह्म परमम्' इत्युक्त्वा 'अव्यक्तोऽक्षर इत्युक्तः' (भ.गी.८-३,२१) इति वचनाच्च ।। १ ।।

**।। ॐ सूक्ष्मं तु तदर्हत्वात् ॐ ।। २ ।।**

सूक्ष्ममेवाव्यक्तशब्देनोच्यते । तत् हि अव्यक्ततामर्हति । सूक्ष्मत्वं च मुख्यं तस्यैव ।

'यत्तत्सूक्ष्मं परमं वेदितव्यं नित्यं पदं वैष्णवं ह्यामनन्ति ।
यत्तल्लोका न विदुर्लोकसारं विन्दन्त्येतत्कवयो योगनिष्ठाः ।।'
इति च पिप्पलादशाखायाम् ।

मुख्ये च विद्यमाने नामुख्यं युक्तम् ।। २ ।।

**।। ॐ तदधीनत्वादर्थवत् ॐ ।। ३ ।।**

तदधीनत्वाच्चाव्यक्तत्वादीनां तस्यैवाव्यक्तत्वपरावरत्वादिकमर्थवत् ।

'यदधीनो गुणो यस्य तद्गुणी सोऽभिधीयते ।
यथा जीवः परात्मेति यथा राजा जयीत्यपि' ।।
इति च स्कान्दे ।। ३ ।।

**।। ॐ ज्ञेयत्वावचनाच्च ॐ ।। ४ ।।**

अन्यस्य न वाच्यत्वं युज्यते ।। ४ ।।

**।। ॐ वदतीति चेन्न प्राज्ञो हि ॐ ।। ५ ।।**

'महतः परं ध्रुवं निचाय्य तं मृत्युमुखात्प्रमुच्यते' ।
(क.उ.१-३-१५)

इति ज्ञेयत्वं वदतीति चेन्न । प्राज्ञः परमात्मा हि तत्रोच्यते ।

'अणोरणीयान्महतो महीयान्' (क.उ.१-२-२०) इति तस्यैव हि महतो महत्वम् । सर्वस्मात्परस्य महतोऽपि परत्वं युज्यते ॥ ५ ॥

॥ ॐ प्रकरणात् ॐ ॥ ६ ॥

'सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्' । (क.उ.१-३-९) इति तस्य हि एतत्प्रकरणम् ॥ ६ ॥

॥ ॐ त्रयाणामेव चैवमुपन्यासः प्रश्नश्च ॐ ॥ ७ ॥

त्रयाणामेव पितृसौमनस्यस्वर्ग्याग्निपरमात्मनां प्रश्न उपन्यासश्च ।

'अविज्ञातप्रार्थनं च प्रश्न इत्यभिधीयते' ।

इति वचनान्न विरोधः ॥ ७ ॥

॥ ॐ महद्वच्च ॐ ॥ ८ ॥

यथा महच्छब्दो महत्तत्वे प्रसिद्धोऽपि परममहत्त्वात्परमात्मन एव मुख्य एवमितरेऽपि ॥ ८ ॥

॥ ॐ चमसवदविशेषात् ॐ ॥ ९ ॥

यथा चमसशब्दोऽन्यत्र प्रसिद्धोऽपि 'इदं तच्छिर एष हि अर्वाग्बिलश्चमस ऊर्ध्वबुध्नः' । (बृ.उ.४-२-३) इति श्रुतेः शिरोवाचकः, एवमव्यक्तादिशब्दाः सर्वेऽन्यत्र प्रसिद्धा अपि,

'नामानि सर्वाणि यमाविशन्ति तं वै विष्णुं परममुदाहरन्ति' ।
इत्यादिश्रुतेः परमात्माभिधायका एव । अविशेषात् श्रुतेः ॥ ९ ॥

॥ इति आनुमानिकाधिकरणम् ॥ १ ॥

**ज्योतिरुपक्रमाधिकरणम् - २**

'वसन्ते वसन्ते ज्योतिषा यजेत' इत्यादिकर्माभिधायकस्य कर्मक्रमादिविरोधान्न युज्यत इत्यत आह—

**॥ ॐ ज्योतिरुपक्रमात्तु तथा ह्यधीयत एके ॐ ॥ १० ॥**

ज्योतिरादिकर्मवाचकत्वेन प्रसिद्धाभिधेयोऽपि स एव । 'एष इमं लोकमभ्यार्चत्' इत्युपक्रम्य 'ता वा एताः सर्वा ऋचः सर्वे वेदाः सर्वे घोषाः एकैव व्याहृतिः प्राण एव प्राण ऋच इत्येव विद्यात्' । (ऐ.आ.२-२-२) इति ह्यधीयत एके ॥ १० ॥

**॥ ॐ कल्पनोपदेशाच्च मध्वादिवदविरोधः ॐ ॥ ११ ॥**

मधुविद्यादिवत्सर्वशब्दार्थत्वेन परस्य कल्पनोपदेशाच्च न कर्मक्रमादिविरोधः ॥ ११ ॥

॥ इति ज्योतिरुपक्रमाधिकरणम् ॥ २ ॥

**नसङ्ख्योपसङ्ग्रहाधिकरणम् - ३**

**॥ ॐ न सङ्ख्योपसङ्ग्रहादपि नानाभावादतिरेकाच्च ॐ ॥ १२ ॥**

'यस्मिन् पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः' (बृ.उ.६-४-१७) इत्यादिषु बहुसङ्ख्योपसङ्ग्रहेऽपि न विरोधः ।

तस्यैवाकाशादिषु नानाभावात्तदतिरिक्तस्वरूपत्वाच्च ।। १२ ।।

पञ्चजनानाह—

**।। ॐ प्राणादयो वाक्यशेषात् ॐ ।। १३ ।।**

'प्राणस्य प्राणमुत चक्षुषश्चक्षुः श्रोत्रस्य श्रोत्रमन्नस्यान्नं मनसो मनः' ।

इति वाक्यशेषात् ।। १३ ।।

**।। ॐ ज्योतिषैकेषामसत्यन्ने ॐ ।। १४ ।।**

'तद्देवा ज्योतिषां ज्योतिः' इत्यनेन काण्वानां पञ्चकम् ।।१४।।

।। इति नसङ्ख्योपसङ्ग्रहाधिकरणम् ।। ३ ।।

**आकाशाधिकरणम् - ४**

अवान्तरकारणत्वेनापि स एवोच्यत इति वक्ति—

**।। ॐ कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः ॐ ।। १५ ।।**

आकाशादिषु अवान्तरकारणत्वेन स एव स्थितः । यथा व्यपदिष्टस्यैव परस्य 'य आकाशे तिष्ठन्' (बृ.५-७-१२) इत्यादिना आकाशादिषूक्तेः ।। १५ ।।

।। इति आकाशाधिकरणम् ।। ४ ।।

### समाकर्षाधिकरणम् - ५

सर्वशब्दानां परमात्मवाचकत्वे कथमन्यत्र व्यवहार इत्यतो ब्रवीति—

**।। ॐ समाकर्षात् ॐ ।। १६ ।।**

परमात्मवाचिनः शब्दा अन्यत्र समाकृष्य व्यवह्रियन्ते ।

'परस्य वाचकाश्शब्दा समाकृष्येतरेष्वपि ।
व्यवह्रियन्ते सततं लोकवेदानुसारतः' । इति पाद्मे ।। १६ ।।

तर्हि कथं तेषां शब्दानां जगति प्रसिद्धिः?

**।। ॐ जगद्वाचित्वात् ॐ ।। १७ ।।**

जगति व्यवहारो लोकस्य । न तु परमात्मनि तथा । अतो जगति प्रसिद्धिः शब्दानाम् ।। १७ ।।

**।। ॐ जीवमुख्यप्राणलिङ्गादिति चेत् तद्व्याख्यातम् ॐ ।। १८ ।।**

तदधीनत्वात्तच्छब्दवाच्यत्वमित्युक्तम् । तज्जीवमुख्यप्राणयोर्लिङ्गम् ।

'अस्य यदैकां शाखां जीवो जहात्यथ सा शुष्यति' ।
(छा.६-११-२)

'वायुना हि सर्वे लोका नेनीयन्त' ।

इत्यादिश्रुतिभ्य इति चेन्न । उपासात्रैविध्यादिति व्याख्यातत्वात् ॥ १८ ॥

**॥ ॐ अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके ॐ ॥ १९ ॥**

परमात्मज्ञानार्थं कर्मादिकमपि वदतीति जैमिनिः ।

'कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवतीति ।
तस्मै स होवाच द्वे विद्ये वेदितव्ये' (मुं.उ.१-१३-४)

'कथं नु भगवः स आदेशो भवतीति ।
यथा सौम्यैकेन मृत्पिण्डेन' (छां.उ.६-१-३-४)

इत्यादिप्रश्नव्याख्यानाभ्याम् ।

एवमपि चैके पठन्ति 'यस्तन्न वेद विमृचा करिष्यति' (ऋ.सं.१-१६४-३९) इति ॥ १९ ॥

**॥ ॐ वाक्यान्वयात् ॐ ॥ २० ॥**

वाक्यस्याप्येवमन्वयो युज्यते पृथक्पृथक्स्थितस्यापि परमात्मना ॥ २० ॥

**॥ ॐ प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः ॐ ॥ २१ ॥**

'नान्यः पन्था अयनाय विद्यते' (तै.आ.३-१२-७) इति प्रतिज्ञासिद्धेर्लिङ्गत्वेन कर्मादिकमुच्यत इत्याश्मरथ्यः । यस्मादेवमनित्यफलमन्यत्तस्मान्नान्यः पन्था इति ॥ २१ ॥

**।। ॐ उत्क्रमिष्यत एवं भावादित्यौडुलोमिः ॐ ।। २२ ।।**

उत्क्रमिष्यतो मुमुक्षोः कर्मादिना भाव्यं साधनसाधनत्वेन । अतस्तद्वक्तीत्यौडुलोमिर्मन्यते ।। २२ ।।

**।। ॐ अवस्थितेरिति काशकृत्स्नः ॐ ।। २३ ।।**

सर्वं परमात्मनि अवस्थितमिति वक्तुं तद्वचनमिति काशकृत्स्नः ।

'कृष्णद्वैपायनमतादेकदेशविदः परे ।
वदन्ति ते यथाप्रज्ञं न विरोधः कथञ्चन' ।। इति पाद्मे ।।२३।।

।। इति समाकर्षाधिकरणम् ।। ५ ।।

**प्रकृत्यधिकरणम् - ६**

स्त्रीशब्दा अपि तस्मिन्नेवेत्याह—

**।। ॐ प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ॐ ।। २४ ।।**

'हन्तैतमेव पुरुषं सर्वाणि नामान्यभिवदन्ति यथा नद्यस्स्यन्दमानाः समुद्रायणाः समुद्रमभिविशन्त्येवमेवैतानि नामानि सर्वाणि पुरुषमभिविशन्ति' इति प्रतिज्ञादृष्टान्तानुपरोधात् प्रकृतिशब्दवाच्योऽपि स एव ।। २४ ।।

**।। ॐ अभिध्योपदेशाच्च ॐ ।। २५ ।।**

'मायां तु प्रकृतिं विद्यात् मायिनं तु महेश्वरम्' ।
(श्वे.उ.४-१०)

'महामायेत्यविद्येति नियतिर्मोहिनीति च ।
प्रकृतिर्वासनेत्येवं तवेच्छाऽनन्त कथ्यते' ।।

इति वचनात्तदभिध्यैव प्रकृतिशब्देनोच्यते ।

'सोऽभिध्या स जूतिः स प्रज्ञा स आनन्दः' ।

इति श्रुतेरभिध्या च स्वरूपमेव ।

'ध्यायति ध्यानरूपोऽसौ सुखी सुखमतीव च ।
परमैश्वर्ययोगेन विरुद्धार्थतयेष्यते' ।। इति ब्रह्माण्डे ।। २५ ।।

**।। ॐ साक्षाच्चोभयाम्नानात् ॐ ।। २६ ।।**

'एष स्त्री एष पुरुष एष प्रकृतिरेष आत्मैष ब्रह्मैष लोक एष आलोको योऽसौ हरिरादिरनादिरनन्तोऽन्तः परमः पराद्विश्वरूपः' ।

इति पैङ्गिश्रुतौ साक्षादेव प्रकृतिपुरुषत्वाम्नानात् ।। २६ ।।

**।। ॐ आत्मकृतेः परिणामात् ॐ ।। २७ ।।**

प्रकर्षेण करोतीति प्रकृतिरिति योगाच्च । प्रकृतावनुप्रविश्य तां परिणाम्य तत्परिणामनियामकतया तत्र स्थित्वाऽऽत्मनो बहुधाकरणात् ।

'अथ हैष आत्मा प्रकृतिमनुप्रविश्यात्मानं बहुधा चकार । तस्मात् प्रकृतिस्तस्मात्प्रकृतिरित्याचक्षते' इति भाल्लवेयश्रुतिः ।

'अविकारोऽपि परमः प्रकृतिं तु विकारिणीम् ।
अनुप्रविश्य गोविन्दः प्रकृतिश्चाभिधीयते' इति नारदीये ।

न चान्यत्कल्प्यम्, अप्रामाणिकत्वात् ।। २७ ।।

**।। ॐ योनिश्च हि गीयते ॐ ।। २८ ।।**

अव्यवधानेनोत्पत्तिद्वारत्वं प्रकृतित्वम् । तच्चास्यैव गीयते 'यद्भूतयोनिं परिपश्यन्ति धीराः' (मुं.उ.१-१-६) इति ।

'व्यवधानेन सूतिस्तु पुंस्त्वं विद्वद्भिरुच्यते ।
सूतिरव्यवधानेन प्रकृतित्वमिति स्थितिः ।।
उभयात्मकसूतित्वाद्वासुदेवः परः पुमान् ।
प्रकृतिः पुरुषश्चेति शब्दैरेकोऽभिधीयते' ।। इति ब्रह्माण्डे ।।२८।।

।। इति प्रकृत्यधिकरणम् ।। ६ ।।

**एतेन सर्वे व्याख्याताधिकरणम् - ७**

**।। ॐ एतेन सर्वे व्याख्याता व्याख्याताः ॐ ।। २९ ।।**

एतेन सर्वे शून्यादिशब्दा अपि व्याख्याताः ।

'एष ह्येव शून्य एष ह्येव तुच्छ एष ह्येवाभाव एष ह्येवाव्यक्तोऽदृश्योऽचिन्त्यो निर्गुणश्च' । इति महोपनिषदि ।

'शमूनं कुरुते विष्णुरदृश्यः सन् परः स्वयम् ।
तस्मात् शून्यमिति प्रोक्तस्तोदनात्तुच्छ उच्यते ।।

नैष भावयितुं योग्यः केनचित्पुरुषोत्तमः ।
अतोऽभावं वदन्त्येनं नाश्यत्वान्नाश इत्यपि ।।

सर्वस्य तदधीनत्वात्तत्तच्छब्दाभिधेयता ।
अन्येषां व्यवहारार्थमिष्यते व्यवहर्तृभिः' ।।

इति महाकौर्मे ।

एतेन तदधीनत्वाद्युक्तयुक्तिसमुदायेन ।

'अवधारणार्थं सर्वस्याप्युक्तस्याध्यायमूलतः ।
द्विरुक्तिं कुर्वते प्राज्ञा अध्यायान्ते विनिर्णये' ।।

इति वाराहसंहितायाम् ।। २९ ।।

।। इति एतेन सर्वे व्याख्याताधिकरणम् ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्ब्रह्मसूत्रभाष्ये प्रथमाध्यायस्य चतुर्थः पादः ।।

।। इति श्रीमद्ब्रह्मसूत्रभाष्ये प्रथमाध्यायः (समन्वयाध्यायः) ।।

*****

## द्वितीयाध्यायस्य प्रथमः पादः

### स्मृत्यधिकरणम् - १

उक्तेऽर्थेऽविरोधं दर्शयत्यनेनाध्यायेन ।

प्रथमपादे युक्त्यविरोधम् ।

प्रथमतः स्मृत्यविरोधं दर्शयति—

**।। ॐ स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात् ॐ ।। १ ।।**

सर्वज्ञा हि रुद्रादयः । अतस्तेषां वचनविरोधेऽप्रामाण्यमेव स्यादिति चेन्न । अन्यस्मृतीनां विष्ण्वादिभिर्नितरां सर्वज्ञैरेव कृतत्वात् श्रुतेराधिक्यं सिद्ध्यति ।। १ ।।

**।। ॐ इतरेषां चानुपलब्धेः ॐ ।। २ ।।**

इतरेषां तासु स्मृतिषूक्तानां फलादीनां प्रत्यक्षतोऽनुपलब्धेरप्रामाण्यं तासां युक्तम् । चशब्देन भागोपलब्धिरङ्गीकृता ।।२।।

**।। ॐ एतेन योगः प्रत्युक्तः ॐ ।। ३ ।।**

योगफलं प्रत्यक्षोपलभ्यमिति न मन्तव्यम् । उक्ताभ्यासे तत्काल एव फलादृष्टेः ।। ३ ।।

।। इति स्मृत्यधिकरणम् ।। १ ।।

## नविलक्षणत्वाधिकरणम् - २

**।। ॐ न विलक्षणत्वादस्य तथात्वं च शब्दात् ॐ ।। ४ ।।**

नैवं श्रुतेस्तदनुसारिस्मृतेश्च तदुक्तानुपलब्धेरप्रामाणं वाच्यम् । विलक्षणत्वात् । नित्यत्वात्तदनुसारित्वाच्च । न हि नित्ये दोषाः कल्प्याः । स्वतश्च प्रामाण्यम् । अन्यथाऽनवस्थितेः ।

'न चक्षुर्न श्रोत्रं न तर्को न स्मृतिर्वेदा ह्येवैनं वेदयन्ति'
इति भाल्लवेयश्रुतेश्च ।

नित्यत्वं च शब्दादेव प्रतीयते 'वाचा विरूप नित्यया । (ऋ.सं.८-६४-६) इत्यादेः ।

'अनादिनिधना नित्या' इति च स्मृतिः ।। ४ ।।

**।। ॐ दृश्यते तु ॐ ।। ५ ।।**

अधिकारिणां फलम् । भविष्यत्पुराणे च—

'ऋग्यजुःसामाथर्वाख्या मूलरामायणं तथा ।
भारतं पञ्चरात्रं च वेदा इत्येव शब्दिताः ।।
पुराणानि च यानीह वैष्णवानि विदो विदुः ।
स्वतःप्रामाण्यमेतेषां नात्र किञ्चिद्विचार्यते ।।
यत्तेषूक्तं न दृश्येत पूर्वकर्मात्र कारणम् ।
नाप्रामाण्यं भवेत्तेषां दृश्यते ह्यधिकारतः ।।
इतः प्रामाण्यमन्येषां न स्वतस्तु कथञ्चन ।
अदृश्योक्तौ ततस्तेषामप्रामाण्यं न संशयः' इति ।। ५ ।।

।। इति नविलक्षणत्वाधिकरणम् ।। २ ।।

### अभिमान्यधिकरणम् - ३

'मृदब्रवीत्' (श.ब्रा.६-१-३) 'आपोऽब्रुवन्' (श.ब्रा.६-१-३) इत्यादिवचनाद् युक्तिविरुद्धो वेद इत्यतोऽब्रवीत्—

**।। ॐ अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम् ॐ ।।६।।**

मृदाद्यभिमानिदेवता तत्र व्यपदिश्यते । तासां चेतरेभ्यो विशिष्टं सामर्थ्यमनुगतिश्च सर्वत्र । अतस्तासां सर्वमुक्तं युज्यते ।। ६ ।।

**।। ॐ दृश्यते च ॐ ।। ७ ।।**

तासां सामर्थ्यं महद्भिः । भविष्यत्पुराणे च—

'पृथिव्याद्यभिमानिन्यो देवताः प्रथितौजसः ।
अचिन्त्याः शक्तयस्तासां दृश्यन्ते मुनिभिश्च ताः ।
ताश्च सर्वगता नित्यं वासुदेवैकसंश्रयाः' इति ।। ७ ।।

।। इति अभिमान्यधिकरणम् ।। ३ ।।

### असदधिकरणम् - ४

'असदेवेदमग्र आसीत्' (छां.उ.६-२-१)

'असतः सदजायत' (ऋ.सं.१०-७२-३)

इत्यादिनाऽसतः कारणत्वोक्तेर्विरोध इत्यतो वक्ति—

**।। ॐ असदिति चेन्न प्रतिषेधमात्रत्वात् ॐ ।। ८ ।।**

प्रतिषेधमात्रत्वान्नासतः कारणत्वं युक्तम् । असतः कारणत्वाद्युक्तिविरुद्धं वेदवाक्यमित्येतदत्र निषिध्यते । सर्वशब्दानां

ब्रह्मणि समन्वयेऽपि 'तदधीनत्वादर्थवत्' (ब्र.सू.१-४-३) इत्यादिनाऽमुख्यत्वेनान्यस्यापि वाच्यत्वेनाङ्गीकारादसतः प्राप्तिः। तथा श्रुतिप्राप्तमेवासन्मतमत्र निषिध्यते । समयस्योपरि निषेधात् । अर्थायुक्तिविरोधोऽपि निराक्रियते ।। ८ ।।

**।। ॐ अपीतौ तद्वत्प्रसङ्गादसमञ्जसम् ॐ ।। ९ ।।**

असत उत्पत्तौ प्रलयेऽपि सर्वासत्त्वमेव स्यात् ।। ९ ।।

**।। ॐ न तु दृष्टान्तभावात् ॐ ।। १० ।।**

प्रलये सर्वासत्त्वं भावे दृष्टान्तभावादेव न युज्यते । सत उत्पत्तिः, सशेषविनाशश्च हि लोके दृष्टः ।। १० ।।

**।। ॐ स्वपक्षदोषाच्च ॐ ।। ११ ।।**

दृष्टान्ताभावादेव ।। ११ ।।

**।। ॐ तर्काप्रतिष्ठानादप्यन्यथाऽनुमेयमिति चेदेवमप्यनिर्मोक्षप्रसङ्गः ॐ ।। १२ ।।**

एतावानेव तर्क इति प्रतिष्ठापकप्रमाणाभावादुक्तादन्यथाऽप्यनुमेयमिति चेन्न, एवं सति प्रमाणसिद्धेऽपि मोक्षेऽन्यथाऽनुमेयत्वादनिर्मोक्षप्रसङ्गः । अतो यावत् प्रमाणसिद्धं तावदेवाङ्गीकर्तव्यम् । नातोऽन्यच्छङ्क्यम् ।

'यावदेव प्रमाणेन सिद्धं तावदह्यपयन् ।
स्वीकुर्यान्नैव चान्यत्र शङ्क्यं मानमृते क्वचित्' ।। इति वामने
।। १२ ।।

**।। ॐ एतेन शिष्टा अपरिग्रहा अपि व्याख्याताः ॐ
।। १३ ।।**

एतेन दृष्टान्तभावेनाभावेन चावशिष्टा अप्यपरिग्रहा विरुद्ध-सिद्धान्ता अकर्तृकत्वाचेतनकर्तृकत्वजीवकर्तृकत्वादयोऽपि ।

'अकस्माद्धीदमाविरासीदकस्मात् तिष्ठत्यकस्माल्लयमभ्युपैति'

'प्रधानादिदमुत्पन्नं प्रधानमधितिष्ठति ।
प्रधाने लयमभ्येति न ह्यन्यत्कारणं मतम्' ।।

'जीवाद् भवन्ति भूतानि जीवे तिष्ठन्त्यचञ्चलाः ।
जीवे तु लयमृच्छन्ति न जीवात्कारणं परम्'

इत्यादिश्रुतिप्राप्ता निराकृताः । यथा दुःखादिषु जीवस्या-स्वातन्त्र्यमेवमन्येष्वपीति दृष्टान्तः । श्रुतिगतिस्तु ब्रह्मवाचक-त्वेन प्रदर्शिता । यत्रान्यवाचकत्वेऽप्यविरोधस्तत्रान्यदप्यमुख्य-तयोच्यते, यत्र विरोधस्तत्र ब्रह्मैवोच्यत इति नियमः ।। १३ ।।

।। इति असदधिकरणम् ।। ४ ।।

## भोक्त्रधिकरणम् - ५

**।। ॐ भोक्त्रापत्तेरविभागश्चेत् स्याल्लोकवत् ॐ ।। १४ ।।**

'कर्माणि विज्ञानमयश्च आत्मा परेऽव्यये सर्व एकीभवन्ति'

इति (मुं.उ.३-२-७) मुक्तजीवस्य परापत्तिरुच्यते । अतस्तयोरविभागः । अतः पूर्वमपि स एव । न ह्यन्यस्यान्यत्वं युज्यत इति चेन्न । स्याल्लोकवत् । यथा लोके उदके उदकान्तरस्यैकीभावव्यवहारेऽप्यन्तर्भेदोऽस्त्येव, एवं स्यादत्रापि । तथा च श्रुतिः–

'यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति' (कठ.उ.२-१-१५) इति ।

स्कान्दे च—

'उदकं तूदके सिक्तं मिश्रमेव यथा भवेत् ।
न चैतदेव भवति यतो वृद्धिः प्रदृश्यते ।।

एवमेव हि जीवोऽपि तादात्म्यं परमात्मना ।
प्राप्तोऽपि नासौ भवति स्वातन्त्र्यादिविशेषणात्' ।। इति ।

'ब्रह्मेशानादिभिर्देवैर्यत् प्राप्तुं नैव शक्यते ।
तद्यत्स्वभावः कैवल्यं स भवान् केवलो हरे' ।। इति च ।

'न ते महित्वमन्वश्नुवन्ति' (ऋ.सं.७-९९-१)

'न ते विष्णो जायमानो न जातः' (ऋ.सं.७-९९-२) इत्यादि च ।

फलत्वेऽपि युक्तिविरोधेऽन्तर्भावादत्रोक्तम् ।। १४ ।।

।। इति भोक्त्रधिकरणम् ।। ५ ।।

**आरम्भणाधिकरणम् - ६**

**।। ॐ तदनन्यत्वमारम्भणशब्दादिभ्यः ॐ ।। १५ ।।**

स्वतन्त्रबहुसाधना सृष्टिर्लोके दृष्टा । नैवं ब्रह्मणः । स्वरूपसामर्थ्यादेव तस्य सृष्टिः ।

'किं स्विदासीदधिष्ठानमारम्भणं कतमस्वित् कथाऽऽसीत्' ।
(ऋ.सं.१०-८१-२)

इति ह्याक्षेपः । अधिष्ठानाद्यनुक्तेः । आदिशब्दाद्युक्तिभिश्च ।

'परतन्त्रो ह्यपेक्षेत स्वतन्त्रः किमपेक्षते ।
साधनानां साधनत्वं यतः किं तस्य साधनैः' ।
इत्यादिभिः ।। १५ ।।

**।। ॐ भावे चोपलब्धेः ॐ ।। १६ ।।**

स्वतन्त्रसाधनभावे प्रमाणैरुपलभ्येत ।

'अनुक्तं पञ्चभिर्वेदैर्न वस्त्वस्ति कुतश्चन ।
अतो वेदत्वमेतेषां यतस्ते सर्ववेदकाः' इति स्कान्दे ।। १६ ।।

'अद्भ्यः सम्भूतः पृथिव्यै रसाच्च' (तै.आ.३-१३) इत्यादिना साधनान्तरप्रतीतेः कथमनुपलब्धिरित्यत आह—

**।। ॐ सत्वाच्चावरस्य ॐ ।। १७ ।।**

अवरस्य तदधीनस्य साधनस्य सत्त्वात् ।

'काल आसीत् पुरुष आसीत् परम आसीत् तद्यदासीत् तदावृतमासीत् तदधीनमासीदथ ह्येक एव परम आसीद् यस्यैतदासीन्न ह्येतदासीत्' ।। इति हि काषायणश्रुतिः ।। १७ ।।

**।। ॐ असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषात् ॐ ।। १८ ।।**

'नासदासीन्नो सदासीत्' (ऋ.सं.१०-१२९-१) इति सर्वस्यासत्त्वव्यपदेशान्नेति चेन्न । अव्यक्तत्वपारतन्त्र्यादिधर्मान्तरेण हि तदुच्यते । 'तम आसीत्' (ऋ.सं.१०-१२९-३) इति वाक्यशेषात् । न चान्यत्र प्रमाणमस्ति ।

'अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः' । (म.ना.उ.१०.५)

'अनाद्यनन्तं जगदेतदीदृक् प्रवर्तत नात्र विचार्यमस्ति ।
न चान्यथा काऽपि च कस्य चेदमभूत्पुरा नापि तथाऽभविष्यत्' ।।

'असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम्' । (भ.गी.१६-८)

'असत्यमाहुर्जगदेतदज्ञाः शक्तिं हरेर्ये न विदुः परां हि' ।

'यः सत्यरूपं जगदेतदीदृक् सृष्ट्वात्वभूत् सत्यकर्मा महात्मा' ।

'अथैनमाहुस्सत्यकर्मेति, सत्यं ह्येवेदं विश्वमसौ सृजते ।
अथैनमाहुर्नित्यकर्मेति नित्यं ह्येवासौ कुरुते' ।।

'यच्चिकेत सत्यमित्तन्न मोघम्' । (ऋ.सं.१०-५५-६) इत्यादि श्रुतिस्मृतिभ्यः ।

'परस्परविरोधे तु वाक्यानां यत्र युक्तता ।
तथैवार्थः परिज्ञेयो नावाक्या युक्तिरिष्यते' ।।

इति बृहत्संहितायाम् ।

'विरुद्धवत् प्रतीयन्ते आगमा यत्र वै मिथः ।
तत्र दृष्टानुसारेण तेषामर्थोऽन्ववेक्ष्यते' ।। इति च ।

'ईशोऽनीशो जगन्मिथ्या न पूज्यो गुरुरित्यपि ।
इत्यादिवद्विरुद्धानि वचनान्यथ युक्तयः ।
प्रमाणैर्बहुभिर्ज्ञेया आभासा इति वैदिकैः ।।
वेदवेदानुसारेषु विरोधेऽन्यार्थकल्पना ।
अन्येषां तु विरुद्धानां विप्रलम्भोऽथवा भ्रमः' ।।

इति च भागवततन्त्रे ।

'शास्त्रार्थयुक्तोऽनुभवः प्रमाणं तूत्तमं मतम् ।
मध्यमं त्वागमो ज्ञेयः प्रत्यक्षमधमं स्मृतम् ।।
प्रत्यक्षयोरागमयोर्विरोधे निश्चयाय तु ।
अनुमाद्या न स्वतन्त्राः प्रमाणपदवीं ययुः' ।।

इति पुरुषोत्तमतन्त्रे ।। १८ ।।

**।। ॐ युक्तेः शब्दान्तराच्च ॐ ।। १९ ।।**

'साधनानां साधनत्वं यदाऽऽत्माधीनमिष्यते ।
तदा साधनसम्पत्तिरैश्वर्यद्योतिका भवेत्' ।।

इत्यादेः साधनान्तरेण सृष्टिर्युक्ता ।

'अद्भ्यः सम्भूतो हिरण्यगर्भ इत्यष्टौ' (म.ना.उ.१-१२)

इत्यादिशब्दान्तराच्च ।। १९ ।।

**।। ॐ पटवच्च ॐ ।। २० ।।**

साधनान्तरेण हि पटादिसृष्टिर्दृष्टा ।। २० ।।

**।। ॐ यथा प्राणादिः ॐ ।। २१ ।।**

तच्च साधनजातं तेनानुप्रविष्टमेव यथा शरीरेन्द्रियादिः ।

'प्रकृतिं पुरुषं चैव प्रविश्य पुरुषोत्तमः ।
क्षोभयामास भगवान् सृष्ट्यर्थं जगतो विभुः'।।

इति कौर्मे ।। २१ ।।

।। इति आरम्भणाधिकरणम् ।। ६ ।।

**इतरव्यपदेशाधिकरणम् - ७**

जीवकर्तृत्वपक्षः श्रुतिप्राप्तो विस्तरान्निराक्रियते ।

**।। ॐ इतरव्यपदेशात् हिताकरणादिदोषप्रसक्तिः ॐ ।। २२ ।।**

जीवकर्तृत्वपक्षे हिताकरणमहितकरणं च न स्यात् ।। २२ ।।

**।। ॐ अधिकं तु भेदनिर्देशात् ॐ ।। २३ ।।**

न च ब्रह्मणः श्रमचिन्तादिदोषप्राप्तिः । अधिकशक्तित्वात् ।

'श्रोता मन्ता द्रष्टाऽऽदेष्टा घोष्टा विज्ञाता प्रज्ञाता सर्वेषां भूतानामन्तरपुरुषः' । (ऐ.आ.३-२-४)

'एष त आत्मा सर्वान्तरः' (बृ.उ.५-५-१)

'योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येति' । (बृ.उ.५-५-१) इत्यादिविशेषनिर्देशात् ।। २३ ।।

**।। ॐ अश्मादिवच्च तदनुपपत्तिः ॐ ।। २४ ।।**

चेतनत्वेऽप्यश्मादिवदस्वतन्त्रत्वात् स्वतः कर्तृत्वानुपपत्तिर्जीवस्य ।

'यथा दारुमयीं योषां नरः स्थिरसमाहितः ।
इङ्गयत्यङ्गमङ्गानि तथा राजन्निमाः प्रजाः' ।।

इति भारते ।। २४ ।।

**।। ॐ उपसंहारदर्शनान्नेति चेन्न क्षीरवत् हि ॐ ।। २५ ।।**

जीवेन कार्योपसंहारदर्शनात् तस्य कर्तृत्वमिति चेन्न । यथा गोषु क्षीरं दृश्यमानमपि प्राणादेव जायते,

'अन्नं रसादिरूपेण प्राणः परिणयत्यसौ' ।। इति वचनात् ।

एवं जीवे दृश्यमानोऽपि कार्योपसंहारोऽस्वातन्त्र्यात् परकृत एव ।

'य आत्मानमन्तरो यमयति' ।

'नाहं कर्ता न कर्ता त्वं कर्ता यस्तु सदा प्रभुः' इत्यादेः ।। २५ ।।

**।। ॐ देवादिवदपि लोके ॐ ।। २६ ।।**

न च कर्तुरीश्वरस्यादृष्टिविरोधः । देवादिवददृश्यत्वशक्तियोगात् । लोकेऽपि पिशाचादीनां तादृशी शक्तिर्दृष्टा, किमु ईवीश्वरस्य ।

'न युक्तियोगाद् वाक्यानि निराकार्याण्यपि क्वचित् ।
विरोध एव वाक्यानां युक्तयो न तु युक्तयः' ।।
इति बृहत्संहितायाम् ।। २६ ।।

**।। ॐ कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा ॐ ।।२७।।**

अयं च दोषो जीवकर्तृत्वपक्षे । एकेनाङ्गुलिमात्रेण प्रवर्तमानोऽपि पूर्णप्रवृत्तिस्स्यात् । न च तद् युज्यते, सामर्थ्यैकदेशदर्शनात् । न चैकदेशेन, निरवयवत्वात् ।

'अथ यः स जीवः स नित्यो निरवयवो ज्ञाताऽज्ञाता सुखी दुःखी शरीरेन्द्रियस्थ' इति भाल्लवेयश्रुतिः ।

न चोपाधिकृतोंऽशः स एवांश उपहित इति, द्वित्वापेक्षत्वात् न चान्यत्कल्प्यम् ।

अनुक्तानां प्रमाणानां स्वीकारश्च कृतो भवेत् ।
विनिन्द्य चेतरान् मार्गान् सम्पूर्णफलता तथा ।। इति ।।२३।।

।। इति मांसा(द्य)धिकरणम् ।। १३ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीब्रह्मसूत्रभाष्ये द्वितीयाध्यायस्य चतुर्थः पादः ।।

।। इति द्वितीयाध्यायः (अविरोधाध्यायः) ।।

* * *

## तृतीयाध्यायस्य प्रथमः पादः

### १. तदन्तराधिकरणम्

### साधनविचारोऽयमध्यायः

वैराग्यार्थे गत्यादिनिरूपणा प्रथमपादे । भूतबन्धो हि बन्धः । 'भूतबन्धस्तु संसारो मुक्तिस्तेभ्यो विमोचनम्' । इति च वाराहे । तच्च मरणे भवति ।

'भूतानां विनिवृत्तिस्तु मरणं समुदाहृतम् ।
भूतानां सम्प्रयोगश्च जनिरित्येव पण्डितैः' ।। इति च भारते ।।

अतः किं साधनैः ? इत्यत आह —

**।। ॐ तदन्तरप्रतिपत्तौ रंहति सम्परिष्वक्तः प्रश्ननिरूपणाभ्याम् ॐ ।। १ ।।**

शरीरान्तरप्रतिपत्तौ भूतसम्परिष्वक्त एव गच्छति ।

'वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति' ।

'इति तु पञ्चम्याम् आहुतावापः पुरुषवचसो भवन्ति' । (छा.उ.५.३.९) इति प्रश्नपरिहाराभ्याम् ।। १ ।।

।। इति तदन्तराधिकरणम् ।। १ ।।

### त्र्यात्मकत्वाधिकरणम् - २

**।। ॐ त्र्यात्मकत्वात्तु भूयस्त्वात् ॐ ।। २ ।।**

अपृशब्दस्तु त्र्यात्मकत्वाद्युज्यते । भूयस्त्वाच्चापाम् । 'तापापनोदो भूयस्त्वमम्भसो वृत्तयस्त्विमाः' इति च भागवते ।।२।।

।। इति त्र्यात्मकत्वाधिकरणम् ।। २ ।।

**प्राणगत्यधिकरणम् - ३**

**।। ॐ प्राणगतेश्च ॐ ।। ३ ।।**

'यत्र वाव भूतानि तत्र करणानि नित्यानि ह वा एतानि भूतानि करणानि च । नैतानि कदाचिद्वियुज्यन्ते न च विलीयन्ते' ।

इति भाल्लवेयश्रुतेः 'प्राणगतेर्भूतान्यपि सह गच्छन्ति' इति सिद्धम् ।। ३ ।।

।। इति प्राणगत्यधिकरणम् ।। ३ ।।

**अग्न्याद्यधिकरणम् - ४**

**।। ॐ अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात् ॐ ।।४।।**

'यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति वातं प्राणः' । (बृ.उ. ५-२-१३) इत्यादिश्रुतेर्न प्राणानां जीवेन सह गतिरिति चेन्न । भागतोऽग्न्यादिप्राप्तेः ।

'पुरुषस्य मृतौ ब्रह्मन् प्राणा भागत एव तु ।
अधिदैवं प्राप्नुवन्ति भागतोऽनुव्रजन्ति तम् ।
पुनः शरीरसम्प्राप्तौ तमेवानुविशन्ति च' ।। इति ब्राह्मे ।

ब्रह्माण्डे च—

'मृतिकाले जहत्येनं प्राणा भूतानि पञ्च च ।
भागतो भागतस्त्वेनमनुगच्छन्ति सर्वशः' ।। इति ।।४।।

।। इति अग्न्याद्यधिकरणम् ।। ४ ।।

प्रथमाधिकरणम् (प्रथमेऽश्रवणाधिकरणम्) - ५

**।। ॐ प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्तेः ॐ ।। ५ ।।**

'तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति' (छां.उ.५-४-२) इति प्रथमाऽग्नौ श्रूयते न भूतानि जुह्वतीति । अतो नेति चेन्न । ता एव प्रस्तुता आपः श्रद्धारूपेण हूयन्ते । 'इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति' । (छां.उ.५-९-१) इत्युपसंहारोपपत्तेः ।। ५ ।।

।। इति प्रथमाधिकरणम् (प्रथमेऽश्रवणाधिकरणम्) ।। ५ ।।

अश्रुतत्वाधिकरणम् - ६

**।। ॐ अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः ॐ ।।६।।**

अग्न्यादिगतिः प्रत्यक्षतः श्रूयते । अतः प्रत्यक्षाश्रवणान्न युक्तमिति चेन्न । 'अथैनं यजमानं किं न जहाति? भूतान्येव । भूतैरेव गच्छति भूतैर्भुङ्क्ते भूतैरुत्पद्यते भूतैश्चरति भूतैर्विचरति' । इति कौण्ठरव्य(कौण्डिन्य)श्रुतौ प्रतीतेः ।। ६ ।।

।। इति अश्रुतत्वाधिकरणम् ।। ६ ।।

## भाक्ताधिकरणम् - ७

'अपाम सोमममृता अभूम' (ऋ.सं.८-४८-३) इत्यादिश्रुतिविरोध इत्यतो वक्ति–

**।। ॐ भाक्तं वाऽनात्मवित्त्वात्तथा हि दर्शयति ॐ ।।७।।**

भागतस्तदमृतत्वम् । 'नान्यः पन्था अयनाय विद्यते' (तै.आ. ३-१३) इति श्रुतेरात्मविद एव हि मुख्यम् । वाशब्दात् पारम्पर्येणाऽऽत्मविदपेक्षया वा ।

तथा हि श्रुतिः— 'स एनमविदितो न भुनक्ति यथा वेदो वाऽननूक्तोऽन्यद् वा कर्माकृतं यदि ह वा अप्यनेवंविन्महत्पुण्यं कर्म करोति तद्धास्यान्ततः क्षीयत एवाऽऽत्मानमेव लोकमुपासीत स य आत्मानमेव लोकमुपास्ते न हास्य कर्म क्षीयतेऽस्माद्ध्येवाऽऽत्मनो यद्यत्कामयते तत्तत्सृजते' (बृ.उ.३-४-१५) 'अमृतो वाव सोमपो भवति यावदिन्द्रो यावन्मनुर्यावदादित्यः' । 'कर्मणा ज्ञानमातनोति ज्ञानेनामृतीभवति अथामृतानि कर्माणि यत एनममृतं (एनममृतत्वं) नयन्ति' इति च ।। ७ ।।

।। इति भाक्ताधिकरणम् ।। ७ ।।

## कृतात्ययाधिकरणम् - ८

कृतस्य कर्मणो भोगेन क्षयान्मुक्तिरित्यत आह–

**।। ॐ कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्याम् ॐ ।। ८ ।।**

'ततः शेषेणेमं लोकमायाति पुनः कर्म कुरुते पुनर्गच्छति पुनरागच्छति' । इति श्रुतेः ।

'भुक्तशेषानुशयवानिमां प्राप्य भुवं पुनः ।
कर्म कृत्वा पुनर्गच्छेत्पुनरायाति नित्यशः ॥
आचतुर्दशमाद्वर्षात् कर्माणि नियमेन तु ।
दशावराणां देहानां कारणानि करोत्ययम् ॥
अतः कर्मक्षयान्मुक्तिः कुत एव भविष्यति' ।

इत्यादिस्मृतेश्च शेषवानेवाऽऽयाति ॥ ८ ॥

॥ इति कृतात्ययाधिकरणम् ॥ ८ ॥

**यथेताधिकरणम् - ९**

'यथेतमेव गच्छति यथेतमागच्छति स भुङ्क्ते स कर्म कुरुते स परिवर्तते' इति गतिप्रकारेणाऽऽगतिः प्रतीयते ।

अतो ब्रूते —

**॥ ॐ यथेतमनेवं च ॐ ॥ ९ ॥**

'धूमादभ्रमभ्रादाकाशमाकाशाच्चन्द्रलोकं यथेतमाकाशमाकाशाद् वायुं वायुर्भूत्वा धूमो भवति धूमो भूत्वाऽभ्रं भवत्यभ्रं भूत्वा मेघो भवति मेघो भूत्वा प्रवर्षति' । इति काषायणश्रुतेर्यथागतमन्यथा च ॥ ९ ॥

॥ इति यथेताधिकरणम् ॥ ९ ॥

## चरणाधिकरणम् - १०

**।। ॐ चरणादिति चेन्न तदुपलक्षणार्थेति कार्ष्णाजिनिः ॐ ।। १० ।।**

'तद् य इह रमणीयचरणा रमणीयां योनिमापद्यन्ते कपूयचरणाः कपूयाम्' । (छां.उ.५-१०-७) इति श्रुतेश्चरणफलमेव गमनागमने (गमनागमनम्) न यज्ञादिकृतः ।

'आचार इति सम्प्रोक्तः कर्माङ्गत्वेन शुद्धिदः ।
अशुद्धिदस्त्वनाचारश्चरणं तूभयं मतम्' ।।

इति स्मृतेरिति चेन्न । यज्ञाद्युपलक्षणार्था चरणादिश्रुतिरिति कार्ष्णाजिनिर्मन्यते ।। १० ।।

**।। ॐ आनर्थक्यमिति चेन्न तदपेक्षत्वात् ॐ ।। ११ ।।**

तर्हि रमणीयाः कपूया इत्येव स्यात् । चरणशब्दस्यानर्थक्यमिति चेन्न । चरणापेक्षत्वाद्रमणीयत्वादेः तज्ज्ञापनार्थत्वेनोपपत्तेः ।। ११ ।।

**।। ॐ सुकृतदुष्कृते एवेति तु बादरिः ॐ ।। १२ ।।**

'धर्मं चरत माऽधर्मम्' इत्यादिप्रयोगात् सुकृतदुष्कृते एव चरणशब्दोक्ते इति बादरिर्मन्यते । तुशब्दात् स्वसिद्धान्तोऽपि स एवेति सूचयति । 'तुशब्दस्तु विशेषे स्यात्स्वसिद्धान्तेऽवधारणे' इति च नाममहोदधौ ।। १२ ।।

।। इति चरणाधिकरणम् ।। १० ।।

अनिष्टादिकार्याधिकरणम् - ११

पुण्यकृतामेव गमनागमने नेतरेषामित्यत आह —

**।। ॐ अनिष्टादिकारिणामपि च श्रुतम् ॐ ।। १३ ।।**

'तद् य इह शुभाकृतो ये वाऽशुभकृतस्तेऽशुभमनुभूयाऽऽवर्तन्ते पुनः कर्म कुर्वन्ति पुनर्गच्छन्ति पुनरागच्छन्ति' । इति भाल्लवेयश्रुतौ ।। १३ ।।

**।। ॐ संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात् ॐ ।। १४ ।।**

संयमनमनुभूय केषाञ्चिदारोहः केषाञ्चिदवरोहः । तुशब्दोऽवधारणे । 'सर्वे वा एतेऽशुभकृतः संयमने प्रपतन्ति तत्र ये परद्विषो गुरुद्विषः श्रुतिद्विषस्तदवमन्तारः शठा मूर्खा इति ते वै ततोऽवरुह्य तमसि प्रपतन्ति नैवैत उत्तिष्ठन्तेऽपि कर्हिचिद् वव्रं वा एतदित्याहुरथ येऽन्ये ब्रह्मद्विषः स्तेनाः सुरापा इति ते वै तदनुभूयेमं लोकमनुव्रजन्ति' । इति कौण्ठरव्यश्रुतेः ।। १४ ।।

**।। ॐ स्मरन्ति च ॐ ।। १५ ।।**

'गच्छन्ति पापिनः सर्वे नरकं नात्र संशयः ।
तत्र भुक्त्वा पतन्त्येव ये द्विषन्ति जनार्दनम् ।।
महातमसि मग्नानां न तेषामुत्थितिः क्वचित् ।
इतरेषां तु पापानां व्युत्थानं विद्यतेऽपि च ।।
सुखस्यानन्तरं दुःखं दुःखस्यानन्तरं सुखम् ।

इति सर्वत्र नियमः पश्चकष्टे तु तत्सदा' ।। इत्यादि ।।१५।।

।। इति अनिष्टादिकार्याधिकरणम् ।। ११ ।।

**अपिसप्ताधिकरणम् - १२**

**।। ॐ अपि सप्त ॐ ।। १६ ।।**

'रौरवोऽथ महांश्चैव वह्निर्वैतरणी तथा ।
कुम्भीपाक इति प्रोक्तान्यनित्यनरकाणि तु (च) ।।
तामिस्रश्चान्धतामिस्रौ द्वौ नित्यौ सम्प्रकीर्तितौ ।
इति सप्त प्रधानानि बलीयस्तूत्तरोत्तरम् ।
एतानि क्रमशो गत्वैवाऽऽरोहोऽथावरोहणम्' ।।
इति च भारते ।। १६ ।।

।। इति अपिसप्ताधिकरणम् ।। १२ ।।

**तत्राप्यधिकरणम् - १३**

ईश्वरस्य नरकायुक्तेः 'सर्वं विसृजति (सृजति) सर्वं विलापयति सर्वं रमयति सर्वं न रमयति सर्वं प्रवर्तयत्यन्तरस्मिन्निविष्टः' । इति कौषारवश्रुतिविरोध इत्यतो वक्ति—

**।। ॐ तत्रापि च तद्व्यापारादविरोधः ॐ ।। १७ ।।**

चशब्दाददुःखानुभवेन ।

'स स्वर्गे स भूमौ स नरके सोऽन्धे तमसि प्रवृत्तिकृदेक एवानुविष्टो नासौ दुःखभुगीश्वरः प्रभुत्वात् सर्वं पश्यति सर्वं कारयति नासौ दुःखभुग्य एवं वेद' ।। इति पौत्रायणश्रुतेरविरोधः ।

'नरकेऽपि वसन्नीशो नासौ दुःखभुगुच्यते ।
नीचोच्चतैव दुःखादेर्भोग इत्यभिधीयते ।।
नासौ नीचोच्चतां याति पश्यत्येव प्रभुत्वतः' ।
इति भागवततन्त्रे ।। १७ ।।

।। इति तत्राप्यधिकरणम् ।। १३ ।।

### विद्याकर्माधिकरणम् - १४

'अथैतयोः पथोर्न कतरेण च तानीमानि क्षुद्रमिश्राण्यसकृदावर्तीनि भूतानि भवन्ति जायस्व म्रियस्वेत्येतत् तृतीयं स्थानम्' । (छां.उ.५-१०-८) इति गतिस्वातन्त्र्यं भूतानां प्रतीयत इत्यत आह–

**।। ॐ विद्याकर्मणोरिति तु प्रकृतत्वात् ॐ ।। १८ ।।**

विद्याकर्मापेक्षयैतद्वचनम् । तयोरपि प्रकृतत्वात् ।

'विद्यापथः कर्मपथो द्वौ पन्थानौ प्रकीर्तितौ ।
तद्वर्जितस्त्रिधा याति तिर्यग्वा नरकं तमः' ।।
इति च भारते ।। १८ ।।

।। इति विद्याकर्माधिकरणम् ।। १४ ।।

### न तृतीयाधिकरणम् - १५

'यत्र दुःखं सुखं तत्र सर्वत्रापि प्रतीयते ।
अपि नीचगतौ किञ्चित् किमु मानुषदेहिनः' ।।

इति वचनान्महातमस्यपि सुखप्राप्तिरित्यत आह—

**।। ॐ न तृतीये तथोपलब्धेः ॐ ।। १९ ।।**

'अथाविद्वानकर्माऽवाग् गच्छति त्रिधा ह वाऽवाग्ग(च्छति)-तिः तिर्यग् यातना तम इति । द्वे वाव सुखानुवृत्ते, न तमः सुखानुवृत्तं केवलं ह्येवात्र दुःखं भवति' । इति श्रुतेर्न तृतीयावाग्गतौ सुखम् ।। १९ ।।

**।। ॐ स्मर्यतेऽपि च लोके ॐ ।। २० ।।**

'तिर्यक्षु नरके चैव सुखलेशो विधीयते ।
नान्धे तमसि मग्नानां सुखलेशोऽपि कश्चन' ।।
इति भविष्यत्पर्वणि ।

लोकसिद्धं चैतत् । चशब्दाल्लोकसिद्धिरपि स्मार्तेत्याह ।

'अतिप्रिये यथा राजा न दुःखं सहते क्वचित् ।
अत्यप्रिये सुखमपि तथैव परमेश्वरः' ।।
इति हि ब्राह्मे ।। २० ।।

**ॐ दर्शनाच्च ॐ ।। २१ ।।**

'नारायणप्रसादेन समिद्धज्ञानचक्षुषा ।
अत्यन्तदुःखसल्लीनान् निश्शेषसुखवर्जितान् ।।
नित्यमेव तथाभूतान् विमिश्रांश्च गणान् बहून् ।
निरस्ताशेषदुःखांश्च नित्यानन्दैकभागिनः ।।

अपश्यत् त्रिविधान् ब्रह्मा साक्षादेव चतुर्मुखः' ।।

इति दर्शनवचनाच्च पाद्मे ।। २१ ।।

**।। ॐ तृतीये शब्दावरोधः संशोकजस्य ॐ ।। २२ ।।**

तृतीये तृतीयतमसः श्रवणादेव शब्दानुसारेण संशोकजमोहप्राप्तिः ।। २२ ।।

**।। ॐ स्मरणाच्च ॐ ।। २३ ।।**

'महातमस्त्रिधा प्रोक्तमूर्ध्वं मध्यं तथाऽधरम् ।
श्रवणादेव मूर्च्छादिरधरस्य यतो भवेत् ।।
तस्मान्न विस्तरेणैतत् कथ्यते राजसत्तम' ।।

इति कौर्मे ।। २३ ।।

।। इति न तृतीयाधिकरणम् ।। १५ ।।

**तत्स्वाभाव्याधिकरणम् - १६**

'धूमो भूत्वाऽभ्रं भवति' (छां.उ.५-१०-५) इत्याद्यन्यभावः श्रूयते । स कथमिति । अतो ब्रवीति—

**।। ॐ तत्स्वाभाव्यापत्तिरुपपत्तेः ॐ ।। २४ ।।**

धूमादिषु प्रविश्य तद्गतौ गतिः तत्स्थितौ स्थितिरित्यादिरेव तद्भावापत्तिः । न ह्यन्यस्यान्यभावो युज्यते । न च तत्पदप्राप्तिः । गारुडे च—

धूमादिभावप्राप्तिश्च तद्गतौ गतिरेव तु ।
स्थितौ स्थितिः प्रवेशश्च लघुत्वादिस्तथैव च ।।
न ह्यन्यस्यान्यथाभावो न च तत्पदमिष्यते ।
विद्यागम्यं पदं यस्मान्न तत्प्राप्यं हि कर्मणा ।।
एकदेशस्वभावेन वागभेदाऽपि युज्यते ।
यथा जीवः परं ब्रह्म ब्रह्मेदं जगदित्यपि ।। इति ।। २४ ।।

।। इति तत्स्वाभाव्याधिकरणम् ।। १६ ।।

**नातिचिरेणाधिकरणम् - १७**

बहुस्थानगमनात् कल्पान्तमप्येवं स्यादित्यत आह—

**।। ॐ नातिचिरेण विशेषात् ॐ ।। २५ ।।**

'तद् य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्यन्ते' । (छा.उ.५-१०-७) इति विशेषान्नातिचिरेण ।।

'स्वर्गाल्लोकादवाक् प्राप्तो वत्सरात् पूर्वमेव तु ।
मातुः शरीरमाप्नोति पर्यटन् यत्र तत्र च' ।।

इति च नारदीये ।। २५ ।।

।। इति नातिचिरेणाधिकरणम् (अचिरप्राप्त्यधिकरणम्) ।। १७ ।।

**अन्याधिकरणम् - १८**

'त इह व्रीहियवा ओषधिवनस्पतयस्तिला माषा इति जायन्ते' । (छां.उ.५-१०-६) इति श्रवणादनर्थफलत्वं यज्ञादेरिति । अतो वक्ति–

**।। ॐ अन्याधिष्ठिते पूर्ववदभिलापात् ॐ ।। २६ ।।**

अन्याधिष्ठिते व्रीह्यादिशरीरे प्रवेशः । न तु भोगोऽस्य । 'धूमो भूत्वाऽभ्रं भवति' (छां.उ.५-१०-५) इत्यादिपूर्वोक्ति(क्त)वत् ।।

'सोऽवाग् गतः स्थावरान् प्रविश्याभोगेनैव व्रजन् स्थूलं शरीरमेति स्थूलाच्छरीराद् भोगाननुभुङ्क्ते' इत्यभिलापात् कौषारवश्रुतौ ।

'स्वर्गादवाग् गतो देही व्रीह्यादीतरदेहगः ।
अभुञ्जंस्तु क्रमेणैव देहमाप्नोति कालतः' ।।
इति वाराहे ।। २६ ।।

**।। ॐ अशुद्धमिति चेन्न शब्दात् ॐ ।। २७ ।।**

हिंसारूपत्वात् पापस्यापि सम्भवाद् दुःखं च भवत्विति चेन्न । शब्दविहितत्वात् ।

'हिंसा त्ववैदिका या तु तयाऽनर्थो ध्रुवं भवेत् ।
वेदोक्तया हिंसया तु नैवानर्थः कथञ्चन' ।।
इति वाराहे ।। २७ ।।

।। इति अन्याधिकरणम् ।। १८ ।।

**रेतोऽधिकरणम् - १९**

'स्वर्गादवाग् गतश्चापि मातुरेवोदरं व्रजेत्' । इति वचनात् 'य एव गृही भवति यो वा रेतः सिञ्चति तमेवानुविशति' । इति श्रुतिः कथमित्यत आह—

**।। ॐ रेतःसिग्योगोऽथ ॐ ।। २८ ।।**

'ततो रेतस्सिचमेवानुप्रविशत्यथ मातरमथ प्रसूयते स कर्म कुरुते' । इति कौण्ठरव्यश्रुतेः पितरमेव प्रथमतो प्रविशति । मातृप्राप्तेः पश्चादपि भाव्यत्वात् ।। २८ ।।

।। इति रेतोऽधिकरणम् ।। १९ ।।

**योन्यधिकरणम् - २०**

'देहं गर्भस्थितं क्वापि प्रविशेत् स्वर्गतो गतः' । इति वचनात् पश्चादेव प्रविशतीत्यत आह—

**।। ॐ योनेः शरीरम् ॐ ।। २९ ।।**

पितृशरीरान्मातृयोनिमनुप्रविश्य तत एव शरीरमाप्नोति ।

'दिवः स्थास्नून् गच्छति स्थास्नुभ्यः पितरं पितुर्मातरं मातुः शरीरं शरीरेण जायत इति सम्मितम् ।

अथासम्मितं स्थास्नुभ्यो जायते पितुर्मातुरन्तरे वा गर्भे वा बहिर्वा' इति पौष्यायणश्रुतेः ।।

'स्थावराणि दिवः प्राप्तः स्थावरेभ्यश्च पूरुषम् ।
पुरुषात् स्त्रियमापन्नस्ततो देहं यथाक्रमम् ।।
देहेन जायते जन्तुरिति सामान्यतो जनिः ।
विशेषजननं चापि प्रोच्यमानं निबोध मे ।।
स्थास्नुष्वथापि पुरुषे प्रमदायामथापि वा ।

गर्भे वा बहिरेवाथ क्वचित् स्थानान्तरेषु च' ॥
इति ब्राह्मे ॥ २९ ॥

॥ इति योन्यधिकरणम् ॥ २० ॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्ब्रह्मसूत्रभाष्ये तृतीयाध्यायस्य प्रथमः पादः ॥

* * *

## तृतीयाध्यायस्य द्वितीयः पादः

### सन्ध्याधिकरणम् - १

भक्तिरस्मिन् पाद उच्यते । भक्त्यर्थं भगवन्महिमोक्तिः ।

**॥ ॐ सन्ध्ये सृष्टिराह हि ॐ ॥ १ ॥**

न स्वप्नोऽपि तं विना प्रतीयते ।

'न तत्र रथा न रथयोगा न पन्थानो भवन्त्यथ रथान् रथयोगान् पथः सृजते' । (बृ.उ.६-३-१०) इत्यादिश्रुतेः ॥ १ ॥

**॥ ॐ निर्मातारं चैके पुत्रादयश्च ॐ ॥ २ ॥**

'य एषु सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः ।' (कठ.उ.५-८) इति च ।

'एतस्माद्ध्येव पुत्रो जायत एतस्माद् भ्रातैतस्माद् भार्या यदैनं पुरुषमेष स्वप्नेनाभिहन्ति' इति गौपवनश्रुतिश्च ॥ २ ॥

केन साधनेन ?

**।। ॐ मायामात्रं तु कात्स्न्र्येनानभिव्यक्तस्वरूपत्वात् ॐ ।। ३ ।।**

अनादिमनोगतान् संस्कारान् स्वेच्छामात्रेण प्रदर्शयति । नान्येन साधनेन, सम्यगनभिव्यक्तत्वात् ।

ब्रह्माण्डे च—

'मनोगतांस्तु संस्कारान् स्वेच्छया परमेश्वरः ।
प्रदर्शयति जीवाय स स्वप्न इति गीयते ।।
यदन्यथात्वं जाग्रत्त्वं सा भ्रान्तिस्तत्र तत्कृता ।
अनभिव्यक्तरूपत्वान्नान्यसाधनजं भवेत्' ।। इति ।। ३ ।।

**।। ॐ सूचकश्च हि श्रुतेराचक्षते च तद्विदः ॐ ।। ४ ।।**

साधनान्तराभावेऽपि भावाभावसूचकत्वेन चेश्वरो दर्शयति ।

'यदा कर्मसु काम्येषु स्त्रियं स्वप्नेऽभिपश्यति ।
समृद्धिं तत्र जानीयात् तस्मिन् स्वप्ननिदर्शने' ।।

(छां.उ.५-२-९) इत्यादिश्रुतेः । हिशब्दाद् दर्शनाच्च ।

'यद्वाऽपि ब्राह्मणो ब्रूयाद् देवता वृषभोऽपि वा ।
स्वप्नस्थमथवा राजा तत्तथैव भविष्यति' ।।

इत्याद्याचक्षते च स्वप्नविदो व्यासादयः ।। ४ ।।

।। इति सन्ध्याधिकरणम् ।। १ ।।

### पराभिध्यानाधिकरणम् - २

**।। ॐ पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ ॐ ।। ५ ।।**

बन्धमोक्षप्रदत्वात् स एव स्वप्नतिरस्कर्ता ।

'स्वप्नादिबुद्धिकर्ता च तिरस्कर्ता स एव च ।
तदिच्छया यतो ह्यस्य बन्धमोक्षौ प्रतिष्ठितौ' ।।

इति कौर्मे ।। ५ ।।

।। इति पराभिध्यानाधिकरणम् ।। २ ।।

### देहयोगाधिकरणम् - ३

**।। ॐ देहयोगाद् वासोऽपि ॐ ।। ६ ।।**

देहयोगेन वासो जाग्रदपि तत एव ।

'स एव जागरिते स्थापयति स स्वप्ने स प्रभुस्तुराषाट् स एको बहुधा भवति' । इति कौण्ठरव्यश्रुतेः ।। ६ ।।

।। इति देहयोगाधिकरणम् ।। ३ ।।

### तदभावाधिकरणम् - ४

**।। ॐ तदभावो नाडीषु तच्छ्रुतेरात्मनि ह ॐ ।। ७ ।।**

जाग्रत्स्वप्नाभावः सुप्तिः नाडीस्थे परमात्मनि ।

'आसु तदा नाडीषु सुप्तो भवति' । (छां.उ.८-६-३)

'सता सौम्य तदा सम्पन्नो भवति' । (छां.उ.६-८-१) इति श्रुतेः ।। ७ ।।

।। इति तदभावाधिकरणम् ।। ४ ।।

**प्रबोधाधिकरणम् - ५**

**।। ॐ अतः प्रबोधोऽस्मात् ॐ ।। ८ ।।**

यतस्तस्मिन् सुप्तिः ।

'एष एव सुप्तं प्रबोधयत्येतस्माज्जीव उत्तिष्ठत्येष प्रमातैष परमः' ।

इति (हि) कौण्डिन्यश्रुतिः ।। ८ ।।

।। इति प्रबोधाधिकरणम् ।। ५ ।।

**कर्मानुस्मृत्यधिकरणम् - ६**

**।। ॐ स एव च कर्मानुस्मृतिशब्दविधिभ्यः ॐ ।।९।।**

न च केषाञ्चित् स्वप्नादिकर्ता न तु सर्वेषामिति ।

'एष ह्येव साधु कर्म कारयति' (कौ.उ.३-८) इति कर्मण्यवधारणात् ।

'प्रदर्शकस्तु सर्वेषां स्वप्नादेरेक एव तु ।
परमः पुरुषो विष्णुस्ततोऽन्यो नास्ति कश्चन' ।।

इत्यनुसारिस्मृतेश्च ।

'एष स्वप्नान् प्रदर्शयत्येष प्रबोधयत्येष एव परम आनन्दः' । इति च श्रुतिः ।

'आत्मानमेव लोकमुपासीत' (बृ.उ.३-४-१५) इति च विधिः ॥ ९ ॥

॥ इति कर्मानुस्मृत्यधिकरणम् ॥ ६ ॥

**सम्पत्त्यधिकरणम् - ७**

**॥ ॐ मुग्धेऽर्धसम्पत्तिः परिशेषात् ॐ ॥ १० ॥**

मोहावस्थायां परमेश्वरेऽर्धप्राप्तिर्जीवस्य ।

'हृदयस्थात् पराज्जीवो दूरस्थो जाग्रदेष्यति ।
समीपस्थस्तथा स्वप्नं स्वपित्यस्मिंल्लयं व्रजन् ॥
यत एवं त्रयोऽवस्था मोहस्तु परिशेषतः ।
अर्धप्राप्तिरिति ज्ञेयो दुःखमात्रप्रतिस्मृतेः' ॥ इति वाराहे ॥

सोऽपि तत एवेति सिद्धम् ।

'मूर्च्छा प्रबोधनं चैव यत एव प्रवर्तते ।
स ईशः परमो ज्ञेयः परमानन्दलक्षणः' ॥
इति (हि) कौर्मे ॥ १० ॥

॥ इति सम्पत्त्यधिकरणम् ॥ ७ ॥

## न स्थानतोऽप्यधिकरणम् - ८

स्थानापेक्षया, परमात्मनो(ऽपि) भेदादनुग्राह्यानुग्राहकभाव इत्यत आह–

**।। ॐ न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि ॐ ।। ११ ।।**

स्थानापेक्षयाऽपि परमात्मनो न भिन्नं रूपम् ।

'सर्वेषु भूतेष्वेतमेव ब्रह्मेत्याचक्षत' । (ऐ.आ.३-२-३) इति श्रुतिः ।

'एकरूपः परो विष्णुः सर्वत्रापि न संशयः ।
ऐश्वर्याद् रूपमेकं च सूर्यवद् बहुधेयते' । इति (हि) मात्स्ये ।

'प्रतिदृशमिव नैकधाऽर्कमेकं समधिगतोऽस्मि विधूतभेदमोहः' । (१-९-४९) इति च भागवते ।। ११ ।।

**।। ॐ न भेदादिति चेन्न प्रत्येकमतद्वचनात् ॐ ।। १२ ।।**

'कार्यकारणबद्धौ ताविष्येते विश्वतैजसौ ।
प्राज्ञः कारणबद्धस्तु द्वौ तु तुर्ये न सिध्यतः' ।।

(मां.उ.२-१६.) इति भेदवचनान्नेति चेन्न ।

'एष त आत्माऽन्तर्याम्यमृतः' । (बृ.उ.५-७-३)

'अयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदं सर्वम्' ।
(बृ.उ.४-५-१)

'अयं वै हरयोऽयं वै दश च सहस्राणि च बहूनि चानन्तानि च ।

तदेतद् ब्रह्मापूर्वमनपरमनन्तरमबाह्यमयमात्मा ब्रह्म सर्वानुभूरित्यनुशासनम्' । (बृ.उ.४-५-१९) इति प्रत्येकमभेदवचनात् ।। १२ ।।

**।। ॐ अपि चैवमेके ॐ ।। १३ ।।**

एवमभेदेनैव । चशब्दादनन्तरूपत्वं चैके शाखिनः पठन्ति ।

'अमात्रोऽनन्तमात्रश्च द्वैतस्योपशमः शिवः ।
ओङ्कारो विदितो येन स मुनिर्नेतरो जनः' ।।
(मां.उ.४-७) इति ।

अभेदेऽपि भेदव्यपदेशः स्थानभेदादैश्वर्ययोगाच्च युज्यते ।

ब्रह्मतर्के च–

'बद्धो बन्धादिसाक्षित्वाद् भिन्नो भिन्नेषु संस्थितेः ।
निर्दोषाद्वयरूपोऽपि कथ्यते परमेश्वरः' ।। इति ।। १३ ।।

।। इति न स्थानतोऽप्यधिकरणम् ।। ८ ।।

**अरूपाधिकरणम् - ९**

रूपवत्त्वादनित्यत्वमित्यतो वक्ति—

**।। ॐ अरूपवदेव हि तत्प्रधानत्वात् ॐ ।। १४ ।।**

प्रकृत्यादिप्रवर्तकत्वेन तदुत्तमत्वान्नैव रूपवद्ब्रह्म । हिशब्दाद् 'अस्थूलमनणु' (बृ.उ.५-८-८) इत्यादिश्रुतेश्च ।

'भौतिकानि हि रूपाणि भूतेभ्योऽसौ परो यतः ।
अरूपवानतः प्रोक्तः क्व तदव्यक्ततः परे' ।।
इति मात्स्ये ।। १४ ।।

**।। ॐ प्रकाशवच्चावैयर्थ्यम् ॐ ।। १५ ।।**

'यदा पश्यः पश्यते रुग्मवर्णम्' (मुं.उ.३-१-३) । 'श्यामाच्छबलं प्रपद्ये' (छां.उ.८-१३-१) ।

'सुवर्णज्योतिः' (तै.उ.३-१०) इत्यादिश्रुतीनां च न वैयर्थ्यम् । विलक्षणरूपवत्वात् । यथा चक्षुरादिप्रकाशे विद्यमानेऽपि वैलक्षण्याद् अप्रकाशादिव्यवहारः ।। १५ ।।

**।। ॐ आह च तन्मात्रम् ॐ ।। १६ ।।**

वैलक्षण्यं चोच्यते रूपस्य विज्ञानानन्दमात्रत्वं 'ऐकात्म्यप्रत्ययसारम्' (मां.उ.२-७) इति ।

'आनन्दमात्रमजरं पुराणमेकं सन्तं बहुधा दृश्यमानम् ।

तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषाम्' ।
इति चतुर्वेदशिखायाम् ।। १६ ।।

**।। ॐ दर्शयति चाथो अपि स्मर्यते ॐ ।। १७ ।।**

दर्शयति चानन्दरूपत्वं

'तद्विज्ञानेन परिपश्यन्ति धीरा आनन्दरूपममृतं यद् विभाति' । (मुं.उ.२-२-८) इति ।

'शुद्धस्फटिकसङ्काशं वासुदेवं निरञ्जनम् ।
चिन्तयीत यतिर्नान्यं ज्ञानरूपादृते हरेः' ।।

इति च मात्स्ये ।। १७ ।।

।। इति अरूपाधिकरणम् ।। ९ ।।

**उपमाधिकरणम् - १०**

**।। ॐ अत एव चोपमा सूर्यकादिवत् ॐ ।। १८ ।।**

यस्मादेवं परमेश्वररूपाणां मिथो न कश्चिद् भेदः अत एव सादृश्या-ज्जीवस्यापि तथा स्यादिति तस्य प्रतिबिम्बत्वमुक्त्वा चशब्देन भेदं दर्शयति ।

'रूपं रूपं प्रतिरूपो बभूव' (बृ.उ.४-५-१९)

'बहवः सूर्यका यद्वत् सूर्यस्य सदृशा जले ।
एवमेवाऽत्मका लोके परात्मसदृशा मताः' ।। इत्यादि ।

अत एव भिन्नत्वतदधीनत्वतत्सादृश्यैरेव सूर्यकाद्युपमा, नोपाध्यधीनत्वादिना ।। १८ ।।

।। इति उपमाधिकरणम् ।। १० ।।

**अम्बुवदधिकरणम् - ११**

नित्यसिद्धत्वात् सादृश्यस्य नित्यानन्दज्ञानादेर्न भक्तिज्ञानादिना प्रयोजनमित्यतो ब्रवीति—

**।। ॐ अम्बुवदग्रहणात्तु न तथात्वम् ॐ ।। १९ ।।**

अम्बुवत् स्नेहेन । ग्रहणं ज्ञानम् । भक्तिं विना न तत्सादृश्यं सम्यगभिव्यज्यते ।

'यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्' । (कठ.उ.२-२३) इति हि श्रुतिः ।

'महित्वबुद्धिर्भक्तिस्तु स्नेहपूर्वाऽभिधीयते ।
तथैव व्यज्यते सम्यग् जीवरूपं सुखादिकम्' ।।
इति पाद्मे ।। १९ ।।

।। इति अम्बुवदधिकरणम् ।। ११ ।।

**वृद्धिह्रासाधिकरणम् - १२**

**।। ॐ वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवम् ॐ ।। २० ।।**

तस्य च भक्तिज्ञानादेर्वृद्धिह्रासभाक्त्वं विद्यते । ब्रह्मादीनामुत्तमानां सर्वेषां भक्तत्वेऽन्तर्भावात् । एवं भक्त्यादिविशेषाङ्गीकारादेवेश्वरस्य ब्रह्मादीन् अन्यान् प्रति च सामञ्जस्यं भवति ।

'साधनस्योत्तमत्वेन साध्यं चोत्तममाप्नुयुः ।
ब्रह्मादयः क्रमेणैव यथाऽऽनन्दश्रुतौ श्रुताः' ।।
इति च ब्राह्मे ।। २० ।।

कुतः ? —

**।। ॐ दर्शनाच्च ॐ ।। २१ ।।**

'अथात आनन्दस्य मीमांसा भवति' । (तै.उ.२-८) इत्यारभ्य ब्रह्मपर्यन्तेषु सुखे विशेषदर्शनात् । चशब्दात् स्मृतिः—

'यथा भक्तिविशेषोऽत्र दृश्यते पुरुषोत्तमे ।
तथा मुक्तिविशेषोऽपि ज्ञानिनां लिङ्गभेदने' ।। इति ।।२१।।

।। इति वृद्धिह्रासाधिकरणम् ।। १२ ।।

**पालकत्वाधिकरणम् - १३**

सृष्टिसंहारकर्तृत्वमेवास्य न पालकत्वं स्वतः सिद्धेरिति, अत आह—

**।। ॐ प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः ॐ ।। २२ ।।**

उक्तं सृष्टिसंहारकर्तृत्वमात्रं प्रतिषिध्य ततोऽधिकं ब्रवीति ।

'नैतावदेना परो अन्यदस्त्युक्षा स द्यावापृथिवी बिभर्ति' । (ऋ.सं.१०-३१-८) इति । चशब्दात् स्मृतिश्च ।

'सृष्टिं च पालनं चैव संहारं नियमं तथा ।
एक एव करोतीशः सर्वस्य जगतो हरिः' ॥
इति ब्रह्माण्डे ॥ २२ ॥

॥ इति पालकत्वाधिकरणम् (प्रकृत्यधिकरणम्) ॥ १३ ॥

**अव्यक्ताधिकरणम् - १४**

परमात्मापरोक्ष्यं च तत्प्रसादादेव न जीवशक्त्येति वक्तुमुच्यते—

**॥ ॐ तदव्यक्तमाह हि ॐ ॥ २३ ॥**

अव्यक्तमेव तद् ब्रह्म स्वतः ।

'अरूपमक्षरं ब्रह्म सदाऽव्यक्तं च निष्कलम् ।
यज्ज्ञात्वा मुच्यते जन्तुरानन्दश्चाव्य(क्ष)यो भवेत्' ॥
इति हि कौण्ठरव्यश्रुतिः ॥ २३ ॥

**॥ ॐ अपि संराधने प्रत्यक्षानुमानाभ्याम् ॐ ॥ २४ ॥**

आराधनेऽप्यव्यक्तमेव । ज्ञानि(नां)प्रत्यक्षेणेतरेषामतिसूक्ष्मत्वलिङ्गादनुमानेन ।

'न तमाराधयित्वाऽपि कश्चिद्व्यक्तीकरिष्यति ।
नित्याव्यक्तो यतो देवः परमात्मा सनातनः' ॥
इति ब्रह्मवैवर्ते ॥ २४ ॥

नित्याव्यक्तेन रूपेण तथैव तिष्ठति । व्यक्तं किञ्चिद् रूपं गृहीत्वा दृश्यते । यथाऽग्न्यादयस्तन्मात्रारूपेणादृश्या अपि स्थूलरूपेण दृश्यन्त एवमिति चेन्न ।

**।। ॐ प्रकाशवच्चावैशेष्यम् ॐ ।। २५ ।।**

अग्न्यादिवत् स्थूलसूक्ष्मत्वविशेषाभावात् ।

'नासौ सूक्ष्मो न स्थूलः पर एव स भवति तस्मादाहुः परम इति' । इति माण्डव्यश्रुतेः ।

'स्थूलसूक्ष्मविशेषोऽत्र न क्वचित् परमेश्वरे ।
सर्वत्रैकप्रकारोऽसौ सर्वरूपेष्वजो यतः' ।। इति च गारुडे ।।

'अव्यक्तव्यक्तभावौ च न क्वचित्परमेश्वरे ।
सर्वत्राव्यक्तरूपोऽयं यत एव जनार्दनः'।। इति कौर्मे ।।२५।।

तर्हि किं यत्नेनेत्यत आह—

**।। ॐ प्रकाशश्च कर्मण्यभ्यासात् ॐ ।। २६ ।।**

विषयभूते तस्मिन्नेव श्रवणाद्यभ्यासात् प्रकाशश्च भवति । 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' । (बृ.उ.४-४-५) इति श्रुतेः ।। २६ ।।

नित्याव्यक्तस्य कथं प्रकाश इत्यत उच्यते—

**।। ॐ अतोऽनन्तेन तथा हि लिङ्गम् ॐ ।। २७ ।।**

उभयत्र प्रमाणभावात् तत्प्रसादादेव प्रकाशो भवति । 'तस्याभिध्यानाद् योजनात् तत्त्वभावाद् भूयश्चान्ते विश्वमायानिवृत्तिः' । (श्वे.उ.-१.१०) इति लिङ्गात् ।

युज्यते च तस्यानन्तशक्तित्वात् ।

'नित्याव्यक्तोऽपि भगवानीक्ष्यते निजशक्तितः ।
तमृते परमात्मानं कः पश्येतामितं प्रभुम्' ।।

इति नारायणाध्यात्मे ।। २७ ।।

।। इति अव्यक्ताधिकरणम् ।। १४ ।।

**उभयव्यपदेशाधिकरणम् - १५**

स्वरूपेणाऽऽनन्दादिना कथमानन्दित्वादिरिति । अ(त)त्रोच्यते–

**।। ॐ उभयव्यपदेशात्त्वहिकुण्डलवत् ॐ ।। २८ ।।**

'आनन्दं ब्रह्मणो विद्वान्' (तै.उ.२-४) । 'अथैष एव परम आनन्दः' (बृ.उ.६-३-३३) इत्युभयव्यपदेशात् अहिकुण्डलवदेव युज्यते । यथाऽहिः कुण्डली कुण्डलं च । तुशब्दात् केवलश्रुतिगम्यत्वं दर्शयति ।। २८ ।।

**।। ॐ प्रकाशाश्रयवद्वा तेजस्त्वात् ॐ ।। २९ ।।**

यथाऽऽदित्यस्य प्रकाशत्वं प्रकाशित्वं च, एवं वा दृष्टान्तः । तेजोरूपत्वाद्ब्रह्मणः ।। २९ ।।

॥ ॐ पूर्ववद्वा ॐ ॥ ३० ॥

यथैक एव कालः पूर्व इत्यवच्छेदकोऽवच्छेद्यश्च भवति । अति-सूक्ष्मत्वापेक्षयैष दृष्टान्तः । स्थूलमतीनां च प्रदर्शनार्थमहिकुण्डल-दृष्टान्तः ।

'प्रकाशवत् कालवद् वा यथाऽङ्गे शयनादिकम् ।
ब्रह्मणश्चैव मुक्तानामानन्दोऽभिन्न एव तु' ॥

इति नारायणाध्यात्मे ।

'आनन्देन त्वभिन्नेन व्यवहारः प्रकाशवत् ।
कालवद् वा यथा कालः स्वावच्छेदकतां व्रजेत्' ॥

इति पाद्मे ॥ ३० ॥

॥ ॐ प्रतिषेधाच्च ॐ ॥ ३१ ॥

'एकमेवाद्वितीयम्' (छां.उ.६-२-१) । 'नेह नानाऽस्ति किञ्चन' (कठ.उ.२-४-११) इति भेदस्य ॥ ३१ ॥

॥ इति उभयव्यपदेशाधिकरणम् (अहिकुण्डलाधिकरणम्) ॥ १५ ॥

परमता(परानन्दा)धिकरणम् - १६

॥ ॐ परमतः सेतून्मानसम्बन्धभेदव्यपदेशेभ्यः ॐ ॥ ३२ ॥

न चाऽऽनन्दादित्वाल्लोकानन्दादिवत् । 'एष सेतुर्विधृतिः' (छां.उ.८-४-१) 'य एष आनन्दः परस्य' 'एष नित्यो महिमा

ब्राह्मणस्य' (बृ.उ.६-४-२३) इति सेतुत्वं ह्युच्यते । 'यतो वाचो निवर्तन्ते' । (तै.उ.२-४) इत्युन्मानत्वम् । 'एतस्यैवाऽऽनन्दस्याऽन्यानि भूतानि मात्रामुपजीवन्ति' (बृ.उ.६-३-३२) इति सम्बन्धः ।

'अन्यज्ज्ञानं तु जीवानामन्यज्ज्ञानं परस्य च ।
नित्यानन्दाव्ययं पूर्णं परज्ञानं विधीयते' ।। इति भेदः ।

अतोऽलौकिकत्वात्परमेव ब्रह्मानन्दादिकम् ।। ३२ ।।

**।। ॐ दर्शनात् ॐ ।। ३३ ।।**

दर्शनादेव चाऽन्याऽऽनन्दादीनाम् । 'अदृष्टमव्यवहार्यमव्यपदेश्यं सुखं ज्ञानमोजो बलमिति ब्रह्मणस्तस्माद् ब्रह्मेत्याचक्षते तस्माद् ब्रह्मेत्याचक्षते' । इति कौण्डिन्यश्रुतिः ।। ३३ ।।

अप्रसिद्धस्य कथमानन्द इत्यादिव्यपदेश इत्यतो वक्ति—

**।। ॐ बुद्ध्यर्थः पादवत् ॐ ।। ३४ ।।**

जीवेश्वरसम्बन्धज्ञापनार्थमप्रसिद्धोऽपि पादो यथापादशब्देन व्यपदिश्यते 'पादोऽस्य विश्वा भूतानि' (ऋ.सं.१०-९०-३) इति तथा ।

'अलौकिकोऽपि ज्ञानादिस्तच्छब्दैरेव भण्यते ।
ज्ञापनार्थाय लोकस्य यथा राजेव देवराट्' ।।
इति (च) पाद्मे ।। ३४ ।।

।। इति परमता(परानन्दा)धिकरणम् ।। १६ ।।

## ।। ॐ पूर्ववद्वा ॐ ।। ३० ।।

यथैक एव कालः पूर्व इत्यवच्छेदकोऽवच्छेद्यश्च भवति । अतिसूक्ष्मत्वापेक्षयैष दृष्टान्तः । स्थूलमतीनां च प्रदर्शनार्थमहिकुण्डलदृष्टान्तः ।

'प्रकाशवत् कालवद् वा यथाऽङ्गे शयनादिकम् ।
ब्रह्मणश्चैव मुक्तानामानन्दोऽभिन्न एव तु' ।।

इति नारायणाध्यात्मे ।

'आनन्देन त्वभिन्नेन व्यवहारः प्रकाशवत् ।
कालवद् वा यथा कालः स्वावच्छेदकतां व्रजेत्' ।।

इति पाद्मे ।। ३० ।।

## ।। ॐ प्रतिषेधाच्च ॐ ।। ३१ ।।

'एकमेवाद्वितीयम्' (छां.उ.६-२-१) । 'नेह नानाऽस्ति किञ्चन' (कठ.उ.२-४-११) इति भेदस्य ।। ३१ ।।

।। इति उभयव्यपदेशाधिकरणम् (अहिकुण्डलाधिकरणम्) ।। १५ ।।

### परमता(परानन्दा)धिकरणम् - १६

## ।। ॐ परमतः सेतून्मानसम्बन्धभेदव्यपदेशेभ्यः ॐ ।। ३२ ।।

न चाऽऽनन्दादित्वाल्लोकानन्दादिवत् । 'एष सेतुर्विधृतिः' (छां.उ.८-४-१) 'य एष आनन्दः परस्य' 'एष नित्यो महिमा

ब्राह्मणस्य' (बृ.उ.६-४-२३) इति सेतुत्वं ह्युच्यते । 'यतो वाचो निवर्तन्ते' । (तै.उ.२-४) इत्युन्मानत्वम् । 'एतस्यैवाऽऽनन्दस्याऽन्यानि भूतानि मात्रामुपजीवन्ति' (बृ.उ.६-३-३२) इति सम्बन्धः ।

'अन्यज्ज्ञानं तु जीवानामन्यज्ज्ञानं परस्य च ।
नित्यानन्दाव्ययं पूर्णं परज्ञानं विधीयते' ।। इति भेदः ।

अतोऽलौकिकत्वात्परमेव ब्रह्मानन्दादिकम् ।। ३२ ।।

**।। ॐ दर्शनात् ॐ ।। ३३ ।।**

दर्शनादेव चाऽन्याऽऽनन्दादीनाम् । 'अदृष्टमव्यवहार्यमव्यपदेश्यं सुखं ज्ञानमोजो बलमिति ब्रह्मणस्तस्माद् ब्रह्मेत्याचक्षते तस्माद् ब्रह्मेत्याचक्षते' । इति कौण्डिन्यश्रुतिः ।। ३३ ।।

अप्रसिद्धस्य कथमानन्द इत्यादिव्यपदेश इत्यतो वक्ति—

**।। ॐ बुद्ध्यर्थः पादवत् ॐ ।। ३४ ।।**

जीवेश्वरसम्बन्धज्ञापनार्थमप्रसिद्धोऽपि पादो यथापादशब्देन व्यपदिश्यते 'पादोऽस्य विश्वा भूतानि' (ऋ.सं.१०-९०-३) इति तथा ।

'अलौकिकोऽपि ज्ञानादिस्तच्छब्दैरेव भण्यते ।
ज्ञापनार्थाय लोकस्य यथा राजेव देवराट्' ।।
इति (च) पाद्मे ।। ३४ ।।

।। इति परमता(परानन्दा)धिकरणम् ।। १६ ।।

### स्थानविशेषाधिकरणम् - १७

परानन्दमात्रत्वे कथं ब्रह्माद्यानन्दादीनां विशेष इत्यत उच्यते

**।। ॐ स्थानविशेषात्प्रकाशादिवत् ॐ ।। ३५ ।।**

यथाऽऽदित्यस्य दर्पणादिस्थानविशेषात् प्रतिबिम्बविशेष एवमानन्दादेरपि ।

'ब्रह्मादिगुणवैशेष्यादानन्दादिः परस्य च ।
प्रतिबिम्बत्वमायाति मध्योच्चादिविशेषतः' ।।

इति वाराहे ।। ३५ ।।

**।। ॐ उपपत्तेश्च ॐ ।। ३६ ।।**

'ऐश्वर्यात् परमाद् विष्णोर्भक्त्यादीनामनादितः ।
ब्रह्मादीनां सूपपन्ना ह्यानन्दादेर्विचित्रता' ।।

इति पाद्मे ।। ३६ ।।

।। इति स्थानविशेषाधिकरणम् ।। १७ ।।

### तथान्यत्वाधिकरणम् - १८

ध्यानकाले यच्चित्ते प्रदृश्यते तदेव हि ब्रह्मरूपम् । अतः कथमव्यक्ततेत्यत आह—

**।। ॐ तथाऽन्यत्प्रतिषेधात् ॐ ।। ३७ ।।**

यथा जीवानन्दादेरन्यद्ब्रह्म तथोपासाकृतादपि ।

'यन्मनसा न मनुते येनाऽऽहुर्मनो मतम् ।
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते' ॥
(के.उ.१-६) इति प्रतिषेधात् ।

'पश्यन्ति परमं ब्रह्म चित्ते यत्प्रतिबिम्बितम् ।
ब्रह्मैव प्रतिबिम्बे यदतस्तेषां फलप्रदम् ॥
तदुपासनं च भवति प्रतिमोपासनं यथा ।
दृश्यते त्वापरोक्षेण ज्ञानेनैव परं पदम् ।
उपासना त्वापरोक्ष्यं गमयेत्तत्प्रसादतः' ॥
इति ब्रह्मतर्के ॥ ३७ ॥

॥ इति तथान्यत्वाधिकरणम् (प्रतिषेधाधिकरणम्) ॥ १८ ॥

**सर्वगतत्वाधिकरणम् - १९**

देशकालान्तरेऽन्यतोऽपि सृष्ट्यादिर्युक्ता, इत्यतो ब्रूते—

**॥ ॐ अनेन सर्वगतत्वमायामयशब्दादिभ्यः ॐ ॥३८॥**

सर्वदेशकालवस्तुष्वनेनैव सृष्ट्यादिकं प्रवर्तते । 'एष सर्व एष सर्वगत एष सर्वेश्वर एषोऽचिन्त्य एष परमः' इति भाल्लवेयश्रुतिः ।

'सर्वत्र सर्वमेतस्मात् सर्वदा सर्ववस्तुषु ।
स्वरूपभूतया नित्यशक्त्या मायाख्यया यतः ॥
अतो मायामयं विष्णुं प्रवदन्ति सनातनम्' ॥

इति चतुर्वेदशिखायाम् ॥ आदिशब्दादन्यत्र प्रमाणाभावाच्च ॥ ३८ ॥

॥ इति सर्वगतत्वाधिकरणम् ॥ १९ ॥

फलाधिकरणम् - २०

कर्माऽपेक्षत्वात् फलदानस्य तदेव ददातीति न वाच्यम् । कुतः?—

॥ ॐ फलमत उपपत्तेः ॐ ॥ ३९ ॥

अत एवेश्वरात्फलं भवति । न ह्यचेतनस्य स्वतः प्रवृत्तिर्युज्यते ॥ ३९ ॥

॥ ॐ श्रुतत्वाच्च ॐ ॥ ४० ॥

'विज्ञानमानन्दं ब्रह्म रातिर्दातुः परायणम्' । (बृ.उ.५-९-२७) इति ॥ ४० ॥

॥ ॐ धर्मं जैमिनिरत एव ॐ ॥ ४१ ॥

यतः फलं तदेव कर्मेश्वराद् भवति । 'एष ह्येव साधु कर्म कारयति' (कौ.उ.३-८) इति श्रुतेरिति जैमिनिः ॥ ४१ ॥

॥ ॐ पूर्वं तु बादरायणो हेतुव्यपदेशात् ॐ ॥ ४२ ॥

परस्य कर्मणश्चोभयोः फलकारणत्वेऽपि न कर्म परप्रवर्तकम् । पर एव कर्मणः प्रवर्तकः । 'पुण्येन पुण्यं लोकं नयति पापेन पापम्' । (प्र.उ.३-२) इति हेतुव्यपदेशात् । 'द्रव्यं कर्म च कालश्च' इति च ॥ ४२ ॥

॥ इति फलाधिकरणम् ॥ २० ॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्ब्रह्मसूत्रभाष्ये तृतीयाध्यायस्य द्वितीयः पादः ॥

# तृतीयाध्यायस्य तृतीयः पादः

## सर्ववेदान्तप्रत्ययाधिकरणम् - १

उपासनाऽस्मिन् पाद उच्यते । सर्वपरिज्ञानं प्रथमत उच्यते—

**।। ॐ सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात् ॐ ।। १ ।।**

अन्तो निर्णयः । 'उभयोरपि दृष्टोऽन्तः' (भ.गी.२-१६) इति वचनात् । सर्ववेदविनिर्णयोत्पाद्यज्ञानं ब्रह्म । 'आत्मेत्येवोपासीत' (बृ.उ.३-४-७) इत्यादिविधीनां तदुक्तयुक्तीनां चाविशिष्टत्वात् ।। १ ।।

**।। ॐ भेदान्नेति चेदेकस्यामपि ॐ ।। २ ।।**

'विज्ञानमानन्दं ब्रह्म' (बृ.उ.५-९-२८) । 'सत्यं ज्ञानमनन्तं ब्रह्म' (तै.उ.२-१) इत्यादिप्रतिशाखमुक्तिभेदान्नैकाधिकारिविषयाः सर्वशाखा इति चेन्न । एकस्यामपि शाखायां 'आत्मेत्येवोपासीत' (बृ.उ.३-४-७) 'कं ब्रह्म खं ब्रह्म' (छां.उ.४-१०-५) इत्यादिभेददर्शनात् ।। २ ।।

**।। ॐ स्वाध्यायस्य तथात्वेन हि समाचारेऽधिकाराच्च ॐ ।। ३ ।।**

'स्वाध्यायोऽध्येतव्यः' (तै.आ.२-१५) इति सामान्यविधेः । हिशब्दात्

'वेदः कृत्स्नोऽधिगन्तव्यः सरहस्यो द्विजन्मना' ।। इति स्मृतेः ।

'सर्ववेदोक्तमार्गेण कर्म कुर्वीत नित्यशः ।
आनन्दो हि फलं यस्मात् शाखाभेदो ह्यशक्तिजः ।।
सर्वकर्मकृतौ यस्मादशक्ताः सर्वजन्तवः ।
शाखाभेदं कर्मभेदं व्यासस्तस्मादचीकॢपत्' ।।

इति समाचारे सर्वेषामधिकाराच्च ।। ३ ।।

**।। ॐ सलिलवच्च तन्नियमः ॐ ।। ४ ।।**

यथा सर्वं सलिलं समुद्रं गच्छत्येवं सर्वाणि वचनानि ब्रह्मज्ञानार्थानीति नियमः । आग्नेये च—

'यथा नदीनां सलिलं शक्ये सागरगं भवेत् ।
एवं वाक्यानि सर्वाणि पुंशक्त्या ब्रह्मवित्तये' ।। इति ।।४।।

**।। ॐ दर्शयति च ॐ ।। ५ ।।**

'सर्वैश्च वेदैः परमो हि देवो जिज्ञास्योऽसौ नाल्पवेदैः प्रसिद्ध्येत् ।

तस्मादेनं सर्ववेदानधीत्य विचार्य च ज्ञातुमिच्छेन्मुमुक्षुः' ।। इति चतुर्वेदशिखायाम् ।

'सर्वान् वेदान् सेतिहासान् सपुराणान् सयुक्तिकान् ।
सपञ्चरात्रान् विज्ञाय विष्णुर्ज्ञेयो न चान्यथा' ।।
इति ब्रह्मतर्के ।। ५ ।।

।। इति सर्ववेदान्तप्रत्ययाधिकरणम् ।। १ ।।

### उपसंहाराधिकरणम् - २

सर्वैर्वेदैर्ज्ञेयो नोपास्योऽशक्यत्वादित्यत आह—

**।। ॐ उपसंहारोऽर्थभेदाद्विधिशेषवत्समाने च ॐ ।।६।।**

सर्ववेदोक्तान् गुणान् दोषाभावांश्चोपसंहृत्यैव परमात्मोपास्यः ।

'उपास्य एकः परतः परो यो वेदैश्च सर्वैः सह चेतिहासैः ।
सपश्चरात्रैः सपुराणैश्च देवः सर्वैर्गुणैस्तत्र तत्र प्रतीतैः' ।।

इति भाल्लवेयश्रुतिः ।

आग्नेये च—

'विधिशेषाणि कर्माणि सर्ववेदोदितान्यपि ।
यथा कार्याणि सर्वैश्च सर्वाण्येवाविशेषतः ।।
एवं सर्वगुणान् सर्वदोषाभावांश्च यत्नतः ।
योजयित्वैव भगवानुपास्यो नान्यथा क्वचित्' ।। इति ।

समानविषये चोपसंहारः । न तु 'सोऽरोदीत्' (तै.सं.१-५-१) इत्यादीनाम् ।

'गुणैरेव स तूपास्यो नैव दोषैः कथश्चन ।
गुणैरपि न तूपास्यो ये पूर्णत्वविरोधिनः' ।।

इति बृहत्तन्त्रे ।। ६ ।।

**।। ॐ अन्यथात्वं (च) शब्दादिति चेन्नाविशेषात् ॐ ।। ७ ।।**

'आत्मेत्येवोपासीत' (बृ.उ.३-४-७) इति शब्दादुपसंहारस्यान्यथात्वमिति चेन्न । एते गुणा नोपास्या इति विशेषवचनाभावात् ॥

'सर्वैर्गुणैरेक एवेशिताऽसावुपासितव्यो न तु दोषैः कदाचित्' । इति विशेषवचनाच्च । 'आत्मेत्येव' इत्यवधारणमनात्मत्वनिवृत्त्यर्थम् ॥ ७ ॥

**॥ ॐ न वा प्रकरणभेदात्परोवरीयस्त्वादिवत् ॐ ॥८॥**

प्रकरणभेदान्नवोपसंहारः कार्यः । परोवरीयस्त्वादिषु तावदेव ह्युक्तम् ॥ ८ ॥

**॥ ॐ संज्ञातश्चेत्तदुक्तमस्ति तु तदपि ॐ ॥ ९ ॥**

सर्वविद्या उक्त्वा 'सोऽहं नामविदेवास्मि नाऽत्मवित्' (छां.उ. ७-१-३) इति वचनात् सर्वस्य ब्रह्मनामत्वात् तदुपसंहारः कार्यः ।

'नामत्वात् सर्वविद्यानां गुणानामुपसंहृतिः ।
कार्यैव ब्रह्मणि परे नात्र कार्या विचारणा' ॥

इति च ब्रह्मतर्के ।

इति चेत् सत्यम् । उक्तो ह्युपसंहारः । तत्प्रमाणमप्यस्त्येव ।

'नाम वा एता ब्रह्मणः सर्वविद्यास्तस्मादेकः सर्वगुणैर्विचिन्त्यः' इति कौण्डिन्यश्रुतौ ॥ ९ ॥

॥ इति उपसंहाराधिकरणम् ॥ २ ॥

## प्राप्त्यधिकरणम् - ३

**।। ॐ प्राप्तेश्च समञ्जसम् ॐ ।। १० ।।**

युज्यते चोपसंहारोऽनुपसंहारश्च योग्यताविशेषात् ।

'गुणैस्सर्वैरुपास्योऽसौ ब्रह्मणा परमेश्वरः ।
अन्यैर्यथाक्रमं चैव मानुषैः कैश्चिदेव तु' ।।

इति भविष्यत्पर्वणि ।। १० ।।

।। इति प्राप्त्यधिकरणम् ।। ३ ।।

## सर्वाभेदाधिकरणम् - ४

**।। ॐ सर्वाभेदादन्यत्रेमे ॐ ।। ११ ।।**

सर्वगुणयुक्तत्वेनोपासनादन्यत्रैव फले ब्रह्मादयो भवन्ति ।

'सम्पूर्णोपासनाद् ब्रह्मा सम्पूर्णानन्दभाग् भवेत् ।
इतरे तु यथायोगं सम्यङ् मुक्तौ भवन्ति हि' ।।

इति पाद्मे ।। ११ ।।

।। इति सर्वाभेदाधिकरणम् ।। ४ ।।

## आनन्दाद्यधिकरणम् - ५

सर्वेषां मुमुक्षूणां कियन्नियमेन उपास्यमिति (अत) आह—

**।। ॐ आनन्दादयः प्रधानस्य ॐ ।। १२ ।।**

प्रधानफलस्य मोक्षस्यार्थे आनन्दो ज्ञानं सदात्मेत्युपास्य एव ।

'सच्चिदानन्द आत्मेति ब्रह्मोपासा विनिश्चिता ।
सर्वेषां च मुमुक्षूणां फलसाम्यादपेक्षिता ।।
इति ब्रह्मतर्के ।। १२ ।।

।। इति आनन्दाद्यधिकरणम् ।। ५ ।।

**प्रियशिरस्त्वाधिकरणम् - ६**

**।। ॐ प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे ॐ ।। १३ ।।**

फलभेदार्थमुपचयापचययोर्भावान्न सर्वेषां प्रियशिरस्त्वादि-गुणोपासाप्राप्तिः ।

'नैव सर्वगुणाः सर्वैरुपास्या मुक्तिभेदतः ।
विरिञ्चस्यैव यन्मुक्तावानन्दस्य सुपूर्णता' ।।
इति (हि) वाराहे ।। १३ ।।

।। इति प्रियशिरस्त्वाधिकरणम् ।। ६ ।।

**इतराधिकरणम् - ७**

**।। ॐ इतरे त्वर्थसामान्यात् ॐ ।। १४ ।।**

इतरे गुणाः फलसाम्यापेक्षयोपसंहर्तव्याः ।। १४ ।।

।। इति इतराधिकरणम् (फलसाम्याधिकरणम्) ।। ७ ।।

## आध्यानाधिकरणम् - ८

उपसंहारानुपसंहारप्रमाणमाह —

**।। ॐ आध्यानाय प्रयोजनाभावात् ॐ ।। १५ ।।**

आध्यानार्थं हि सर्वे गुणा उच्यन्ते प्रयोजनान्तराभावात् ।।

'ज्ञानार्थमथ ध्यानार्थं गुणानां समुदीरणा ।
ज्ञातव्याश्चैव ध्यातव्या गुणास्सर्वेऽप्यतो हरेः ।।
नान्यत्प्रयोजनं ज्ञानाद्ध्यानात्कर्मकृतेरपि ।
श्रवणाच्चाथ पाठाद् वा विद्याभिः किञ्चिदिष्यते' ।।
इति परमसंहितायाम् ।।

'गुणाः सर्वेऽपि वेत्तव्या ध्यातव्याश्च न संशयः ।
नान्यत्प्रयोजनं मुख्यं गुणानां कथने भवेत् ।।
ज्ञानध्यानसमायोगाद्गुणानां सर्वशः फलम् ।
मुख्यं भवेन्न चान्येन फलं मुख्यं क्वचिद्भवेत्' ।।
इति बृहत्तन्त्रे ।। १५ ।।

**।। ॐ आत्मशब्दाच्च ॐ ।। १६ ।।**

'आत्मेत्येवोपासीत' (बृ.उ.३-४-७) इत्यनुपसंहार(रे)प्रमाणम् ।। १६ ।।

।। इति आध्यानाधिकरणम् ।। ८ ।।

### आत्मगृहीत्यधिकरणम् - ९

### ।। ॐ आत्मगृहीतिरितरवदुत्तरात् ॐ ।। १७ ।।

न च 'आनन्दादयः प्रधानस्य' इत्युक्तिविरोधः । यतः 'सत्यं ज्ञानमनन्तं ब्रह्म' (तै.उ.२-१) 'विज्ञानमानन्दं ब्रह्म' (बृ.उ.५-९-२८) इतिवदेवाऽत्मशब्दगृहीतिः । 'अत्र ह्येते सर्व एकीभवन्ति' (बृ.उ.३-४-७) इत्युत्तरात् ।

'आनन्दानुभवत्वाच्च निर्दोषत्वाच्च भण्यते ।
नित्यत्वाच्च तथाऽऽत्मेति वेदवादिभिरीश्वरः' ।।
इति (हि) बृहत्तन्त्रे ।। १७ ।।

।। इति आत्मगृहीत्यधिकरणम् ।। ९ ।।

### अन्वयाधिकरणम् - १०

### ।। ॐ अन्वयादिति चेत् स्यादवधारणात् ॐ ।। १८ ।।

सर्वगुणानामन्वय आत्मशब्दे भवति । 'आप्तव्याप्तेरात्मशब्दः परमस्य प्रयुज्यते' ।

इति वचनादिति चेत् सत्यम् । स्याच्चैवम् । 'आत्मेत्येव' (बृ.उ.३-४-७) इत्यवधारणात् । अन्यथा सर्वोपसंहारवचनविरोधात् ।। १८ ।।

।। इति अन्वयाधिकरणम् ।। १० ।।

**कार्याख्यानाधिकरणम् - ११**

**।। ॐ कार्याख्यानादपूर्वम् ॐ ।। १९ ।।**

'अलौकिकास्तस्य गुणा ह्युपास्या अलौकिकं मुक्तिकार्यं यतोऽस्य' इति कार्याख्यानादन्यत्रादृष्टा एव गुणा उपास्याः ।। १९ ।।

।। इति कार्याख्यानाधिकरणम् ।। ११ ।।

**समानाधिकरणम् - १२**

**।। ॐ समान एवञ्चाभेदात् ॐ ।। २० ।।**

अपूर्वत्वेऽपि समानानामेवोपसंहारः । न तु त्रिविक्रमत्वादीनां कादाचित्कानां पृथक्त्वेन । नित्यविक्रान्त्यादिष्वन्तर्भावात् ।। २० ।।

**।। ॐ सम्बन्धादेवमन्यत्रापि ॐ ।। २१ ।।**

परमात्मसम्बन्धित्वेन नित्यत्वात् त्रिविक्रमत्वादिष्वप्युपसंहार्यत्वं युज्यते ।

'गुणास्त्रैविक्रमाद्याश्च (स्तु) संहर्तव्या न संशयः ।
विरिञ्चस्यैव नान्येषां स हि सर्वगुणाधिकः' ।।
इति (हि) बृहत्तन्त्रे ।। २१ ।।

।। इति समानाधिकारणम् ।। १२ ।।

**न वाधिकरणम् (विशेषाधिकरणम्) - १३**

**।। ॐ न वा विशेषात् ॐ ।। २२ ।।**

न वाऽऽत्मशब्देन सर्वगुणगृहीतिः । अधिकारिविशेषात्
।। २२ ।।

**।। ॐ दर्शयति च ॐ ।। २३ ।।**

'सर्वान् गुणानात्मशब्दो ब्रवीति ब्रह्मादीनामितरेषां न चैव' । इति (च) भाल्लवेयश्रुतिः ।। २३ ।।

।। इति नवाधिकरणम् (विशेषाधिकरणम्) ।। १३ ।।

**सम्भृत्यधिकरणम् - १४**

**।। ॐ सम्भृतिद्युव्याप्त्यपि चातः ॐ ।। २४ ।।**

सम्भृतिद्युव्याप्ती अपि देवादीनामुपसंहर्तव्ये नान्येषाम् । अत एव योग्यताविशेषात् ।

'देवादीनामुपास्यास्तु भृतिव्याप्त्यादयो गुणाः ।
आनन्दाद्यास्तु सर्वेषामन्यथाऽनर्थकृद्भवेत्' ।।
इति (च) ब्रह्मतर्के ।। २४ ।।

।। इति सम्भृत्यधिकरणम् ।। १४ ।।

**पुरुषविद्याधिकरणम् - १५**

यस्यां विद्यायां महागुणा उच्यन्ते सोत्तमानाम्, इतराऽन्येषामिति चेन्न—

**।। ॐ पुरुषविद्यायामपि चेतरेषामनाम्नानात् ॐ ।। २५ ।।**

पुरुषसूक्तोक्तविद्यायामपि केषाञ्चिद् गुणानामनाम्नानात् ।

'सर्वतः पौरुषे सूक्ते गुणाः विष्णोरुदीरिताः ।
तत्रापि नैव सर्वेऽपि तस्मात् कार्योपसंहृतिः' ।।

इति ब्रह्मतर्के ।। २५ ।।

।। इति पुरुषविद्याधिकरणम् ।। १५ ।।

**वेधाद्यधिकरणम् - १६**

**।। ॐ वेधाद्यर्थभेदात् ॐ ।। २६ ।।**

'भिन्धि विद्धि शृणीहीति फलभेदेन सर्वशः ।
यत्यादीनां तेष्वयोगात् नाधिकार्येकता भवेत् ।
अयोग्योपासनादीयुरनर्थं चार्थनाशनम्' ।।

इति बृहत्तन्त्रे ।। २६ ।।

।। इति वेधाद्यधिकरणम् ।। १६ ।।

**हान्यधिकरणम् - १७**

मुक्तस्योपासना कर्तव्या न वा इति । अतो ब्रवीति—

**।। ॐ हानौ तूपायनशब्दशेषत्वात् कुशाछन्दस्तुत्युपगानवत् तदुक्तम् ॐ ।। २७ ।।**

नियतस्वाध्यायानन्तरं स्वेच्छया कुशाग्रहणस्तुत्युपगानवदेव मोक्ष उपासनादिः । 'ब्रह्मविदाप्नोति परम्' (तै.उ.३-१०) इति मोक्षवाक्यशेषत्वादितरेषाम् ।। तच्चोक्तम्— 'एतत्सामगायन्नास्ते' (तै.उ.३-१०) इत्यादि । ब्रह्मतर्के च

'मुक्ता अपि हि कुर्वन्ति स्वेच्छयोपासनं हरेः ।
नियमानन्तरं विप्राः कुशाद्यैरप्यधीयते' ।। इति ।।

'कृष्णो मुक्तैरिज्यते वीतमोहैः' । इति च भारते ।। २७ ।।

**।। ॐ साम्पराये तर्तव्याभावात् तथा ह्यन्ये ॐ ।।२८।।**

स्वेच्छयैवेत्यङ्गीकर्तव्यम् । मुक्तस्य तीर्णत्वात् ।

'तीर्णो हि तदा सर्वाञ्छोकान्हृदयस्य भवति' । (बृ.उ.६-३-२२) इति ह्यन्ये पठन्ति ।

वायुप्रोक्ते च—

'स्थितप्रज्ञत्वमाप्ता ये ज्ञानेन परमात्मनः ।
ब्रह्मलोकं गतास्सर्वे ब्रह्मणा च परं गताः ।
तीर्णतर्तव्यभागाश्च स्वेच्छयोपासते परम्' ।। इति ।। २८ ।।

।। इति ह्यन्यधिकरणम् (मुक्तोपासनाधिकरणम्) ।। १७ ।।

**छन्दाधिकरणम् - १८**

कर्मापि कुर्वन्ति न वा इति । अत आह —

**।। ॐ छन्दत उभयाविरोधात् ॐ ।। २९ ।।**

स्वेच्छया कुर्वन्ति न वा । बन्धप्रत्यवाययोरभावात् ।। २९ ।।

**।। ॐ गतेरर्थवत्त्वमुभयथाऽन्यथा हि विरोधः ॐ ।। ३० ।।**

बन्धप्रत्यवायाभावे हि मोक्षस्यार्थवत्त्वम् । अन्यथा मोक्षत्वमेव न स्यात् ।

'कदाचित् कर्म कुर्वन्ति कदाचिन्नैव कुर्वते ।
नित्यज्ञानस्वरूपत्वात् नित्यं ध्यायन्ति केशवम् ।।
तीर्णतर्तव्यभागा ये प्राप्तानन्दाः परात्मनः ।
प्रत्यवायस्य बन्धस्याप्यभावात् स्वेच्छया भवेत्' ।।
इति हि ब्रह्माण्डे ।। ३० ।।

**।। ॐ उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत् ॐ ।। ३१ ।।**

उपपन्नश्चैवम्भावः । प्राप्तत्वात् तल्लक्षणस्य फलस्य । यथा लोके विध्यर्थत्वेन विष्णुक्रमणादिकं कृत्वा समाप्तकर्मेच्छया करोति न करोति च ।। ३१ ।।

।। इति छन्दाधिकरणम् ।। १८ ।।

### अनियमाधिकरणम् - १९

**।। ॐ अनियमः सर्वेषामविरोधाच्छब्दानुमानाभ्याम् ॐ ।। ३२ ।।**

प्राप्तज्ञानानामपि केषाञ्चिन्मुक्तिप्राप्तिः केषाञ्चिन्न, यथोपसंहार-नियम इति न मन्तव्यम् ।

'सर्वे गुणा ब्रह्मणैव ह्युपास्या नान्यैर्देवैः किमु सर्वैर्मनुष्यैः' ।

इत्युपसंहारविरोधादन्यत्राविरोधात् । 'न कश्चिद्ब्रह्मवित् सृतिमनुभवति मुक्तो ह्येव भवति तस्मादाहुः सृतिहेति' । इति कौण्डिन्य-श्रुतेश्च । यथा केषाञ्चिन्मोक्ष एवमन्येषामित्यनुमानाच्च ।।३२।।

।। इति अनियमाधिकरणम् ।। १९ ।।

## यावदधिकरणम् - २०

**।। ॐ यावदधिकारमवस्थितिराधिकारिकाणाम् ॐ ।।३३।।**

यथा यथाऽधिकारो विशिष्यते एवं मुक्तावानन्दो विशिष्यते । 'मनुष्येभ्यो गन्धर्वाणां गन्धर्वेभ्य ऋषीणामृषिभ्यो देवानां देवेभ्य इन्द्रस्य इन्द्राद् रुद्रस्य रुद्राद् ब्रह्मण एष ह्येव शतानन्दः' । इति चतुर्वेदशिखायाम् ।

अध्यात्मे च—

'ज्ञानं चोपासनं चैव मुक्तावानन्द एव च ।
यथाधिकारं देवानां भवन्त्येवोत्तरोत्तरम्' ।। इति ।। ३३ ।।

**।। ॐ अक्षरधियां त्वविरोधः सामान्यतद्भावाभ्यामौपसदवत्तदुक्तम् ॐ ।। ३४ ।।**

न चासमत्वेन विरोधो भवति । ब्रह्मधीत्वा(ब्रह्माधीनत्वात्)द् दोषाभावसाम्यादुत्तमेभ्योऽन्येषां भावाच्च । औपसदवत् शिष्यवत् । उक्तं च तुरश्रुतौ —

'नानाविधा जीवसङ्घा विमुक्तौ न चैव तेषां ब्रह्मधियां विरोधः ।
दोषाभावाद् गुरुशिष्यादिभावाल्लोकेऽपि नासौ किमु तेषां विमुक्तेः' ।।
इति ।। ३४ ।।

।। इति यावदधिकरणम् ।। २० ।।

## इयदामननाधिकरणम् - २१

**।। ॐ इयदामननात् ॐ ।। ३५ ।।**

नामाद्यारभ्य प्राणान्तमुत्तरोत्तरमुत्तमत्वमुक्तम् । न प्राणात् किञ्चिद्भूय उक्तम् । तथाऽपि पूर्ववत्स्यादि(दपी)ति न वाच्यम् । 'प्राणो वाव सर्वेभ्यो भूयान्न हि प्राणाद् भूयान् प्राणो ह्येव भूयांस्तस्माद् भूयान् नाम' इति कौण्ठरव्यश्रुतेः ।। ३५ ।।

**।। ॐ अन्तरा भूतग्रामवदिति चेत्तदुक्तम् ॐ ।। ३६ ।।**

यथा भूतग्राम एकस्मादेक उत्तमोऽस्त्येव, एवं प्राणादपि परमात्मानमन्तरा विद्यत इति चेन्न । प्राणादुत्तमाभावे प्रमाणमुक्तम् । अन्यत्रोत्तमाभावे न प्रमाणम् । दृश्यते चान्यत्रोत्तमत्वम् ।। ३६ ।।

**।। ॐ अन्यथा भेदानुपपत्तिरिति चेन्नोपदेशवत् ॐ ।। ३७ ।।**

प्राणस्य सर्वोत्तमत्वे परमात्मना भेदानुपपत्तिरिति चेन्न । श्रुत्युपदिष्टवदुपपत्तेः । अन्येभ्यः प्राणस्योत्तमत्वं तस्मात् परमात्मनो ह्युपदिष्टम् ।। ३७ ।।

।। इति इयदामननाधिकरणम् ।। २१ ।।

## व्यतिहाराधिकरणम् - २२

नेति चेन्न —

**।। ॐ व्यतिहारो विशिंषन्ति हीतरवत् ॐ ।। ३८ ।।**

उक्तं प्राणात् परमात्मन उत्तमत्वं पूर्वोक्ताध्याहारेण 'एष तु वा अतिवदति' (छां.उ.७-१६) इति विशिंषन्ति हि । यथेतरेषु विशेषणम् ।

'उत्तमत्वं हि देवानां मुक्तावपि हि मानवात् ।
तेभ्यः प्राणस्य तस्माच्च नित्यमुक्तस्य वै हरेः' ।।
इति (च) बृहत्तन्त्रे ।। ३८ ।।

।। इति व्यतिहाराधिकरणम् ।। २२ ।।

**सत्याधिकरणम् - २३**

कृतिर्निष्ठा विज्ञानमित्यादीनां भेदाद् बहव उत्तमा इति चेन्न—

**।। ॐ सैव हि सत्यादयः ॐ ।। ३९ ।।**

सत्यादिगुणास्तस्या एव परदेवतायाः स्वरूपभूताः । ब्रह्मतर्के च–

'नामादिप्राणपर्यन्ताद्यो हि सत्यादिरूपवान् ।
तस्मै नमो भगवते विष्णवे सर्वजिष्णवे' ।। इति ।
'सत्याद्या अहमात्मान्ता यद्गुणास्समुदीरिताः ।
तस्मै नमो भगवते यस्मादेव विमुच्यते' ।।
इति चाध्यात्मे ।। ३९ ।।

।। इति सत्याधिकरणम् ।। २३ ।।

## कामाधिकरणम् - २४

प्रकृतेरपि जन्मादेः संसारप्राप्तेः किमिति नामादिष्वपाठ इत्यत्रोच्यत—

**।। ॐ कामादितरत्र तत्र चाऽयतनादिभ्यः ॐ ।। ४० ।।**

स्वेच्छयैव मूलस्थाने स्थिताऽन्यत्र अवतारान् करोतीश्वरेच्छानुसारेण । 'सर्वायतना सर्वकाला सर्वेच्छा सर्वज्ञा न बद्धा बन्धिका सैषा प्रकृतिरविकृतिः' । इति वत्सश्रुतेः ।

'नामादयस्तु बद्धत्वान्मोचकत्वात्परोऽपि च ।
उभयोरप्यभावेन यथाऽव्यक्तं न तूदितम् ।।
श्रुतौ तथा जीवपरावुच्येते किञ्चनेतरत् ।
नोच्यते च तदा तत्त्वद्वयं वै समुदाहृतम्' ।।
इति ब्रह्मतर्के ।। ४० ।।

**।। ॐ आदरादलोपः ॐ ।। ४१ ।।**

अबद्धत्वेऽपि भक्तिविशेषादेवोपासनाद्यलोपस्तस्याः भवति ।

'यथा श्रीर्नित्यमुक्ताऽपि प्राप्तकामाऽपि सर्वदा ।
उपास्ते नित्यशो विष्णुमेवं भक्तो हरेर्भवेत्' ।।
इति बृहत्तन्त्रे ।। ४१ ।।

**।। ॐ उपस्थितेस्तद्वचनात् ॐ ।। ४२ ।।**

अनादिकाले भगवत्सम्बन्धित्वाद् युज्यते च नित्यमुक्तत्वं तस्याः । 'द्वावेतावनादिनित्यावनादियुक्तौ नित्यमुक्तावनादिकृतौ नित्यकृतौ योऽयं परमो या च प्रकृती रमते ह्यस्यां परमो रमते ह्यस्मिन् प्रकृतिः स्वस्मिन् हि रमते परमो न स्वस्मिन् प्रकृतिरत एनमाहुः परम इति' । इति गौपवनश्रुतिवचनात् ।। ४२ ।।

।। इति कामाधिकरणम् ।। २४ ।।

**निर्धारणाधिकरणम् - २५**

दर्शनार्थं ह्युपासनम् । तच्च श्रवणादेरेव भवति । अतः किमर्थमित्यत्रोच्यते—

**।। ॐ तन्निर्धारणार्थनियमस्तद्दृष्टेः पृथग्घ्यप्रतिबन्धः फलम् ॐ ।। ४३ ।।**

तत्त्वनिश्चयो वेदार्थनियमश्च ब्रह्मदृष्टेः पृथगेव । हिशब्देन 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' (बृ.उ.४-४-५) इति श्रुतिं सूचयति । श्रवणादिफलं चाज्ञानविपर्ययादिदर्शनप्रतिबन्धनिवृत्तिः । ब्रह्मतर्के च—

'श्रुत्वा मत्वा यथा ध्यात्वा तदज्ञानविपर्ययौ ।
संशयं च पराणुद्य लभते ब्रह्मदर्शनम्' ।। इति ।। ४३ ।।

।। इति निर्धारणाधिकरणम् ।। २५ ।।

### प्रदानाधिकरणम् - २६

## ।। ॐ प्रदानवदेव हि तदुक्तम् ॐ ।। ४४ ।।

न च श्रवणादिमात्रेण ब्रह्मदृष्टिर्भवति, किन्तु सेतिकर्तव्येन । यथा गुरुदत्तं तथैव भवति । 'आचार्यवान् पुरुषो वेद' (छां.उ. ६-१४-२) इति ह्युक्तम् ।। ४४ ।।

।। इति प्रदानाधिकरणम् ।। २६ ।।

### लिङ्गभूयस्त्वाधिकरणम् - २७

गुरुप्रसादः स्वप्रयत्नो वा बलवानिति निगद्यते—

## ।। ॐ लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि ॐ ।। ४५ ।।

ऋषभादिभ्यो विद्यां ज्ञात्वाऽपि सत्यकामेन 'भगवांस्त्वेव मे कामं ब्रूयात्' (छां.उ.४-९-२) 'श्रुतं ह्येव मे भगवद्दृशेभ्य आचार्याद्ध्येव विद्या विदिता साधिष्ठं प्रापयति' (छां.उ.४-९-३) इति वचनात् । 'अत्र ह न किञ्चन वीयाय' इत्यनुज्ञानादुपकोसलवचनाच्च लिङ्गभूयस्त्वाद्गुरुप्रसाद एव बलवान् (गुरुप्रदानमेव बलवत्) । तर्हि तावताऽलमिति न मन्तव्यम् । 'श्रोतव्यो मन्तव्यः' (बृ.उ.४-४-५) इत्यादेस्तदपि कर्तव्यम् । वाराहे च–

'गुरुप्रसादो बलवान्न तस्माद्बलवत्तरम् ।
तथाऽपि श्रवणादिश्च कर्तव्यो मोक्षसिद्धये' ।। इति ।।४५।।

।। इति लिङ्गभूयस्त्वाधिकरणम् (गुरुप्रसादाधिकरणम्) ।। २७ ।।

## पूर्वविकल्पाधिकरणम् - २८

### ।। ॐ पूर्वविकल्पः प्रकरणात् स्यात् क्रियामानसवत् ॐ ।। ४६ ।।

न च पूर्वप्राप्त एव गुरुरिति नियमः । समग्रानुग्रहं चेत् पश्चात्तनः करोति स्वयमेव तदा विकल्पः स्यात् । मानसक्रियावत्, यथोभयोर्ध्यानयोः समयोः ।

'पूर्वस्मादुत्तमो लब्धः स्वयमेव गुरुर्यदि ।
गृह्णीयादविचारेण विकल्पः समयोर्भवेत् ।।
समग्रानुग्रहाभावात् सत्यकामः स्वकं गुरुम् ।
ऋषभाद्यनुज्ञया चैव प्राप तस्माद्धि युज्यते' ।। इति बृहत्तन्त्रे ।।

'समग्रानुग्रहं कश्चित् स्वयमेव समो यदि ।
कुर्यात् पुनश्च गृह्णीयादविरोधेन कामतः ।।
ध्यानयोः समयोर्यद्वद् विकल्पः कामतो भवेत् ।
एवं गुरोर्द्वितीयस्य विकल्पो ग्रहणेऽपि च' ।।

इति महासंहितायाम् ।। ४६ ।।

### ।। ॐ अतिदेशाच्च ॐ ।। ४७ ।।

'ब्रह्मोपास्व ब्रह्मोपचरस्व तच्छृणु हि तत् त्वामवतु । यथा ब्रह्मोपचरेर्यथा मामुपचरेर्ये चान्येऽस्मद्विधाः श्रेयसश्च तानुपास्व तानुपचरस्व तेभ्यः शृणु हि ते त्वामवन्तु' । इति पौष्यायण-श्रुतावतिदेशाच्च ।। ४७ ।।

।। इति पूर्वविकल्पाधिकरणम् ।। २८ ।।

### विद्याधिकरणम् - २९

न च 'कर्मणैव हि संसिद्धिमास्थिता जनकादयः' । (भ.गी.३-२०) इत्यादिनाऽन्यन्मोक्षसाधनम् ।

### ।। ॐ विद्यैव तु निर्धारणात् ॐ ।। ४८ ।।

'तमेवं विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यते अयनाय' । (श्वे.उ.३-८) इति निर्धारणाद् विद्ययैव मोक्षः ।। ४८ ।।

### ।। ॐ दर्शनाच्च ॐ ।। ४९ ।।

न केवलं विद्यया किन्तु अपरोक्षज्ञानेनैव च । 'सर्वान् परो माययाऽयं सिनीते दृष्ट्वैव तं मुच्यते नापरेण' । इति कौशिकश्रुतेः ।। ४९ ।।

।। इति विद्याधिकरणम् ।। २९ ।।

### श्रुत्यधिकरणम् - ३०

### ।। ॐ श्रुत्यादिबलीयस्त्वाच्च न बाधः ॐ ।। ५० ।।

सावधारणा बलवती श्रुतिः ।

'इन्द्रोऽश्वमेधान् शतमिष्ट्वाऽपि राजा
ब्रह्माणमीड्यं समुवाचोपसन्नः ।
न कर्मभिर्न धनैर्नैव चान्यैः
पश्येत्सुखं तेन तत्त्वं ब्रवीहि' ।। इति बलवल्लिङ्गम् ।

'नास्त्यकृतः कृतेन' (मुं.उ.१-२-१२) इत्युपपत्तिश्च ।

'कर्मणा बध्यते जन्तुर्विद्यया च विमुच्यते ।
तस्मात् कर्म न कुर्वन्ति यतयः पारदर्शिनः' ।।
इति युक्तिमद् भगवद्वचनम् ।

अतो न प्रमाणान्तरबाधः । 'कर्मणैव' (भ.गी.३-२०) इत्ययोगव्यवच्छेदः ।। ५० ।।

।। इति श्रुत्यधिकरणम् (अबाधाधिकरणम्) ।। ३० ।।

**अनुबन्धाधिकरणम् - ३१**

**।। ॐ अनुबन्धादिभ्यः ॐ ।। ५१ ।।**

न केवलं श्रवणादिभिर्गुरुप्रसादेन च ब्रह्मदर्शनम् । किन्तु भक्त्यादिभिश्च ।

'सर्वलक्षणसम्पन्नः सर्वज्ञो विष्णुतत्परः ।
यद्गुरुः सुप्रसन्नः सन् दद्यात् तन्नान्यथा भवेत् ।।
तथाऽप्यनादिसंसिद्धो भक्त्यादिगुणपूगतः ।
लभेद् गुरुप्रसादं च तस्मादेव च तद्भवेत्' ।। इति ।

'भक्तिर्विष्णौ गुरौ चैव गुरोर्नित्यप्रसन्नताम् ।
दद्याच्छमदमादींश्च तेन चैते गुणाः पुनः ।।
तैस्सर्वैर्दर्शनं विष्णोः श्रवणादिकृतं भवेत्' ।।
इति च नारायणतन्त्रे ।। ५१ ।।

।। इति अनुवन्धाधिकरणम् ।। ३१ ।।

### प्रज्ञान्तराधिकरणम् - ३२

**।। ॐ प्रज्ञान्तरपृथक्त्ववद् दृष्टिश्च तदुक्तम् ।। ५२ ।।**

उपासनाभेदव(त्त)द्दर्शनभेदः । तच्चोक्तं कमठश्रुतौ —

'अन्तर्दृष्टयो बहिर्दृष्टयोऽवतारदृष्टयः सर्वदृष्टय इति । देवा वाव सर्वदृष्टयस्तेषु चोत्तरोत्तरमाब्रह्मणोऽन्येषु (तु) यथायोगं यथा ह्याचार्या आचक्षते' । इति ।

अध्यात्मे च —

'दृष्ट्यैव ह्यवताराणां मुच्यन्ते केचिदञ्जसा ।
दर्शनेनाऽन्तरेणान्ये देवास्सर्वत्र दर्शनात् ।।
तेषां विशेषमाचार्यो वेत्ति सर्वज्ञतां गतः' ।। इति ।।५२।।

।। इति प्रज्ञान्तराधिकरणम् (दर्शनभेदाधिकरणम्) ।। ३२ ।।

### न सामान्याधिकरणम् - ३३

**।। ॐ न सामान्यादप्युपलब्धेर्मृत्युवन्न हि लोकापत्तिः ॐ ।। ५३ ।।**

न सामान्यदर्शनमात्रेण मुक्तिः । यथा मृत्युमात्रात् । न हि लोकापत्तिमात्रं मुक्तिः ।

'सामान्यदर्शनाल्लोका मुक्तिर्योग्यात्मदर्शनात्' ।
इति हि नारायणतन्त्रे ।।

'मुच्यते नात्र संदेहो दृष्ट्या तु स्वात्मयोग्यया' । इति च ।।

'दर्शनेनाऽत्मयोग्येन मुक्तिर्नान्येन केनचित्' । इति चाध्यात्मे ॥ ५३ ॥

॥ इति न सामान्याधिकरणम् ॥ ३३ ॥

**परेणाधिकरणम् - ३४**

'भक्तिरेवैनं नयति भक्तिरेवैनं दर्शयति भक्तिवशः पुरुषो भक्तिरेव भूयसी' इति माठरश्रुतेर्न परमात्मना दर्शनमिति चेन्न । 'तस्यैष आत्मा विशते ब्रह्मधाम' (मुं.उ.३-२-४) इति श्रुतेः । कथं तर्ह्येषा श्रुतिः —

**॥ ॐ परेण च शब्दस्य ताद्विध्यं भूयस्त्वात् त्वनुबन्धः ॐ ॥ ५४ ॥**

परमात्मैवं(व) भक्त्या दर्शनं प्राप्य मुक्तिं ददातीति प्रधानसाधनत्वाद् भक्तिः करणत्वेनोच्यते ।

मायावैभवे च—

'भक्तिस्थः परमो विष्णुस्तयैवैनं वशं नयेत् ।
तयैव दर्शनं यातः प्रदद्यान्मुक्तिमेतया ॥
स्नेहानुबन्धो यस्तस्मिन् बहुमानपुरस्सरः ।
भक्तिरित्युच्यते सैव करणं परमी(मे)शितुः' ॥ इति ।

सर्वशब्दानां ब्रह्मणि प्रवृत्तेश्च ॥ ५४ ॥

॥ इति परेणाधिकरणम् (ताद्विध्याधिकरणम्) ॥ ३४ ॥

एकाधिकरणम् - ३५

जीवांशानां पृथगुत्पत्तेर्नानादियोग्यताऽपेक्षेति न मन्तव्यम् । कुतः ?

**।। ॐ एक आत्मनश्शरीरे भावात् ॐ ।। ५५ ।।**

अंशांशिनोरेकत्वमेव । अंशिकर्म(वि)निर्मितशरीर एवांशस्य भावात् ।। ५५ ।।

**।। ॐ व्यतिरेकस्तद्भावभावित्वान्न तूपलब्धिवत् ॐ ।। ५६ ।।**

ज्ञानादि(भेदे)भावे विद्यमानेऽपि नांशांशिनोः पृथग्भाव एव । तदुपासनादिभोगादंशस्य ।

परमसंहितायां च —

'अंशिनस्तु पृथग् जाता अंशास्तस्यैव कर्मणा ।
पुनरैक्यं प्रपद्यन्ते नात्र कार्या विचारणा' ।। इति ।। ५६ ।।

।। इति एकाधिकरणम् ।। ३५ ।।

अङ्गावबद्धाधिकरणम् - ३६

**।। ॐ अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम् ॐ ।। ५७ ।।**

ब्रह्माद्यङ्गदेवतावबद्धोपासनादि प्रतिशाखं प्रतिवेदं च नोपसंह्रियते । हिशब्दात् —

'दर्शनेनाऽत्मयोग्येन मुक्तिर्नान्येन केनचित्' । इति चाध्यात्मे ।। ५३ ।।

।। इति न सामान्याधिकरणम् ।। ३३ ।।

**परेणाधिकरणम् - ३४**

'भक्तिरेवैनं नयति भक्तिरेवैनं दर्शयति भक्तिवशः पुरुषो भक्तिरेव भूयसी' इति माठरश्रुतेर्न परमात्मना दर्शनमिति चेन्न । 'तस्यैष आत्मा विशते ब्रह्मधाम' (मुं.उ.३-२-४) इति श्रुतेः । कथं तर्ह्येषा श्रुतिः —

**।। ॐ परेण च शब्दस्य ताद्विध्यं भूयस्त्वात् त्वनुबन्धः ॐ ।। ५४ ।।**

परमात्मैवं(व) भक्त्या दर्शनं प्राप्य मुक्तिं ददातीति प्रधानसाधनत्वाद् भक्तिः करणत्वेनोच्यते ।

मायावैभवे च—

'भक्तिस्थः परमो विष्णुस्तयैवैनं वशं नयेत् ।
तयैव दर्शनं यातः प्रदद्यान्मुक्तिमेतया ।।
स्नेहानुबन्धो यस्तस्मिन् बहुमानपुरस्सरः ।
भक्तिरित्युच्यते सैव करणं परमी(मे)शितुः' ।। इति ।

सर्वशब्दानां ब्रह्मणि प्रवृत्तेश्च ।। ५४ ।।

।। इति परेणाधिकरणम् (ताद्विध्याधिकरणम्) ।। ३४ ।।

एकाधिकरणम् - ३५

जीवांशानां पृथगुत्पत्तेर्नानादियोग्यताऽपेक्षेति न मन्तव्यम् । कुतः ?

**।। ॐ एक आत्मनश्शरीरे भावात् ॐ ।। ५५ ।।**

अंशांशिनोरेकत्वमेव । अंशिकर्म(वि)निर्मितशरीर एवांशस्य भावात् ।। ५५ ।।

**।। ॐ व्यतिरेकस्तद्भावभावित्वान्न तूपलब्धिवत् ॐ ।। ५६ ।।**

ज्ञानादि(भेदे)भावे विद्यमानेऽपि नांशांशिनोः पृथग्भाव एव । तदुपासनादिभोगादंशस्य ।

परमसंहितायां च —

'अंशिनस्तु पृथग् जाता अंशास्तस्यैव कर्मणा ।
पुनरैक्यं प्रपद्यन्ते नात्र कार्या विचारणा' ।। इति ।। ५६ ।।

।। इति एकाधिकरणम् ।। ३५ ।।

अङ्गावबद्धाधिकरणम् - ३६

**।। ॐ अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम् ॐ ।। ५७ ।।**

ब्रह्माद्यङ्गदेवतावबद्धोपासनादि प्रतिशाखं प्रतिवेदं च नोपसंह्रियते । हिशब्दात् —

'समत्वाद् वोत्तमत्वाद्वा नाङ्गदेवाद्युपासनम् ।
उपसंहार्यमित्याहुर्वेदसिद्धान्तवेदिनः' ॥
इति ब्रह्मतर्कवचनात् ॥ ५७ ॥

**॥ ॐ मन्त्रादिवद्वाऽविरोधः ॐ ॥ ५८ ॥**

सर्वदेवतामन्त्रा यथाऽधीयन्त एवमविरोधो वा ।

'उपासनाङ्गदेवानां परमाङ्गतया भवेत् ।
उपसंहृतिर्विशेषे तु फलानामन्यथा न तु ॥
पुरुषाणां विशेषाद्वा यथायोगं भविष्यति' ॥
इति बृहत्तन्त्रे ॥ ५८ ॥

॥ इति अङ्गावबद्धाधिकरणम् ॥ ३६ ॥

**भूमाधिकरणम् - ३७**

**॥ ॐ भूम्नः क्रतुवज्ज्यायस्त्वं तथा च दर्शयति ॐ ॥ ५९ ॥**

सर्वगुणेषु भूमगुणस्य ज्यायस्त्वं क्रतुवत् सर्वत्र सहभावात् (दीक्षाप्रायणीयोदयनीयसवनत्रयावभृथात्मकः क्रतुः इत्यधिकः पाठः क्वचित्) ।

'भूमैव देवः परमो ह्युपास्यो नैवाभूमा फलमेषां विधत्ते ।
तस्माद्भूमा गुणतो वै विशिष्टो यथा क्रतुः कर्ममध्ये विशिष्टः ॥'

इति च गौपवनश्रुतिः ।। ५९ ।।

।। इति भूमाधिकरणम् ।। ३७ ।।

## नानाशब्दाधिकरणम् - ३८

### ।। ॐ नाना शब्दादिभेदात् ॐ ।। ६० ।।

'शब्दोऽनुमा तथैवाक्षो योग्यताभेदतः सदा ।
ब्रह्मादीनामेकमर्थं बहुधा दर्शयन्ति हि ।।
अतः पूर्णत्वमीशस्य नानैवैषां प्रदृश्यते ।
अतः फलस्य नानात्वं नानैवोपासनं(ना)यतः' ।।

इति ब्रह्मतर्के ।

अतो भूमत्वमपि नानैवोपास्यते ।। ६० ।।

।। इति नानाशब्दाधिकरणम् ।। ३८ ।।

## विकल्पाधिकरणम् - ३९

### ।। ॐ विकल्पो विशिष्टफलत्वात् ॐ ।। ६१ ।।

स्वयोग्योपासनानन्तरं सामान्यस्यापि कस्यचिदुपासनं विकल्पेन भवति विशिष्टफलापेक्षया ।

'मुक्त्यर्थमात्मयोग्यं हि कार्यमेव ह्युपासनम् ।
नृसिंहादिकमन्यच्च दुरितादिनिवृत्तये ।।
उपास्यते यथायोगं न वा फलविभेदतः' ।।

इति (च) ब्रह्मतर्के ।। ६१ ।।

।। इति विकल्पाधिकरणम् ।। ३९ ।।

**काम्याधिकरणम् - ४०**

**।। ॐ काम्यास्तु यथाकामं समुच्चीयेरन्न वा पूर्वहेत्वभावात् ॐ ।। ६२ ।।**

'यस्य यस्य हि यः कामस्तस्य तस्य ह्युपासनम् ।
तादृशानां गुणानां च समाहारं प्रकल्पयेत् ।।
अकामत्वान्मुमुक्षूणां न वा तेषामुपासनम् ।
तुष्ट्यर्थमीश्वरस्यैव नैवोपासा विदुष्यति' ।।
इति बृहत्तन्त्रे ।। ६२ ।।

।। इति काम्याधिकरणम् ।। ४० ।।

**अङ्गाधिकरणम् (यथाऽऽश्रयभावाधिकरणम्) - ४१**

**।। ॐ अङ्गेषु यथाऽऽश्रयभावः ॐ ।। ६३ ।।**

अङ्गदेवतानां यथा यथा परमेश्वराङ्गाश्रयत्वं 'चक्षोः सूर्यो अजायत' (ऋ.सं.१०-९०-१३) इत्यादि तथा भावना कर्तव्या ।। ६३ ।।

**।। ॐ शिष्टेश्च ॐ ।। ६४ ।।**

'यस्मिन् यस्मिन् यो हि चाङ्गे निविष्टः परस्य चिन्त्यः स तथा तथैव' इति पौत्रायणश्रुतेः ।। ६४ ।।

**।। ॐ समाहारात् ॐ ।। ६५ ।।**

'अङ्गैः परात् ये हि देवा विसृष्टास्तत्तद्गुणान् परमे संहरेत ।
तांश्चापि तत्रैव विचिन्त्य देवान् स्थानं मुमुक्षुः परमं व्रजेत'
इति काषायणश्रुतौ समाहारवचनाच्च ।। ६५ ।।

### ।। ॐ गुणसाधारण्यश्रुतेश्च ॐ ।। ६६ ।।

'साधारण्यात् सर्वगुणाः परस्य समाहार्यास्तत्त्वदृशो मुमुक्षोः' इति माण्डव्यश्रुतेश्च ।। ६६ ।।

।। इति अङ्गाधिकरणम् (यथाश्रयभावाधिकरणम्) ।। ४१ ।।

## नवाधिकरणम् - ४२

### ।। ॐ न वाऽतत्सहभावश्रुतेः ॐ ।। ६७ ।।

न वाऽङ्गदेवतोपसंहारः कार्यः । उपसंहारस्य सहाश्रवणात् ।। ६७ ।।

### ।। ॐ दर्शनाच्च ॐ ।। ६८ ।।

'सत्यो ज्ञानः परमानन्दरूप आत्मेत्येवं नित्यदोपासनं स्यात् ।
नान्यत् किञ्चित् समुपासीत धीरः सर्वैर्गुणैर्देवगणा उपासते'
इति कमठश्रुतौ ।। ६८ ।।

।। इति नवाधिकरणम् ।। ४२ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्ब्रह्मसूत्रभाष्ये तृतीयाध्यायस्य तृतीयः पादः समाप्तः ।।

* * *

## तृतीयाध्यायस्य चतुर्थः पादः

### पुरुषार्थाधिकरणम् - १

ज्ञानसामर्थ्यमस्मिन् पादे उच्यते—

**।। ॐ पुरुषार्थोऽतःशब्दादिति बादरायणः ॐ ।। १ ।।**

यद्दर्शनार्थमुपासनोक्ता तस्मात् दर्शनात् सर्वपुरुषार्थप्राप्तिरिति बाद-रायणो मन्यते ।

'यं यं लोकं मनसा संविभाति विशुद्धसत्त्वः कामयते यांश्च कामान् ।
तं तं लोकं जयते तांश्च कामांस्तस्मादात्मज्ञं ह्यर्चयेद् भूतिकामः' ।।

(मु.उ.३-१-१०) इति शब्दात् ।। १ ।।

**।। ॐ शेषत्वात् पुरुषार्थवादो यथाऽन्येष्विति जैमिनिः ॐ ।। २ ।।**

अस्त्येव मोक्षसाधनत्वं ज्ञानस्य । स्वर्गादिषु तत्साधनकर्म-शेषत्वेन ।

'स्वर्गं धनाद् देहतो वै गृहाच्च प्राप्स्यन्ति धीरा न त्वधीराः कुतश्चित्' इति वदति जैमिनिः ।। २ ।।

**।। ॐ आचारदर्शनात् ॐ ।। ३ ।।**

ज्ञानिनामेव देवादीनामाचारदर्शनात् ।। ३ ।।

## ।। ॐ तच्छ्रुतेः ॐ ।। ४ ।।

'यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति' । (छां.उ.१-१-१०) इति शेषत्वश्रुतेः ।। ४ ।।

## ।। ॐ समन्वारम्भणात् ॐ ।। ५ ।।

'कर्मैव देहं दैविकं मानुषं वाऽप्यन्वारभेन्नापरस्तत्र हेतुः ।
भोगांस्तदीयांश्च यथाविभागं ददाति कर्मैव शुभाशुभं यत्' ।।
इति माठरश्रुतेश्च ।

संशब्दः प्राधान्यं दर्शयति ।। ५ ।।

## ।। ॐ तद्वतो विधानात् ॐ ।। ६ ।।

'ज्ञानी च कर्माणि सदोदितानि कुर्यादकामः सततं भवेत' ।। इति कमठश्रुतौ ज्ञानवतोऽपि विधानात् ।। ६ ।।

## ।। ॐ नियमाच्च ॐ ।। ७ ।।

'कुर्वन्नेवेह कर्माणि जिजीविषेच्छतꣳसमाः ।
एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे' ।।
(ई.उ.२) इति ।। ७ ।।

## ।। ॐ अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात् ॐ ।। ८ ।।

'ज्ञानादेव स्वर्गो ज्ञानादेवापवर्गो ज्ञानादेव सर्वे कामाः
सम्पद्यन्ते ।
अथापि यथा यथा कर्म कुरुते तथा तथाऽधिको भवति' ।।
इति कौण्ठरव्यश्रुतेः ।।

युधिष्ठिरादीनां राजसूयादिना फलाधिक्यदर्शनाच्चेति बादरायण(स्य)मतम् ।। ८ ।।

।। ॐ तुल्यं तु दर्शनम् ॐ ।। ९ ।।

राजसूयादिकृतावकृतौ च सममेव तेषां विज्ञानम् ।

'विज्ञातमेतत् सर्वेषां मुनीनां ब्रह्मदर्शनात् ।
स्यादेव मोक्षो नान्यस्मादिति तत्रापि चित्रता ।।
स्वर्गादयः कर्मणैव नान्येनेत्यपरे विदुः ।
ज्ञानेनाऽऽधिक्यमित्याहुर्जैमिन्याद्यास्तु केचन ।।
अदृष्टमेव ज्ञानेन दृष्टं नैवोपलभ्यते ।
इति केचिद्विदः प्राहुर्व्यासशिष्या इमेऽखिलाः ।।
यस्माद्व्यासमतं सर्वं सत्यमेव ततोऽखिलम् ।
यथाऽऽकाशस्त्वनन्तोऽपि व्यामो हस्तावधिस्तथा ।
प्रादेशोऽपि हि सत्येन तथैतेषां मतानि तु ।।
स्वयं तु भगवान् व्यासो व्याप्तज्ञानमहांशुमान् ।
अनन्ताकाशवत् पश्यन्नि(न्न)खिलं पुरुषोत्तमः ।।
ज्ञानेनैवाऽऽप्यते सर्वं कर्मणा त्वधिकं भवेत् ।

इति प्राह महायोगी पुमर्थानां विनिर्णयम्' ।।
इति भविष्यत्पर्वणि ।

'ज्ञानिनामपि देवानां विशेषः कर्मभिर्भवेत् ।
चीर्णेऽकृते वा ज्ञानस्य न विशेषोऽस्ति कर्मणि' ।।
इति ब्रह्मतर्के ।। ९ ।।

।। इति पुरुषार्थाधिकरणम् ।। १ ।।

**असार्वत्रिकाधिकरणम् - २**

सर्वेषां पुरुषार्थापेक्षित्वाज्ज्ञानाधिकारिता । इत्यत आह—

**।। ॐ असार्वत्रिकी ॐ ।। १० ।।**

न सर्वेषामधिकारः ।। १० ।।

**।। ॐ विभागश्शतवत् ॐ ।। ११ ।।**

'नवकोट्यो हि देवानां तेषां मध्ये शतस्य तु ।
सोमाधिकारो वेदोक्तो ब्रह्मणी द्वे शताधिके ।।
यथा तथैवासङ्ख्येयाः प्रजास्तासु कियान् जनः ।
ज्ञानाधिकारी सम्प्रोक्तो विष्णुपादैकसंश्रयः' ।।

इति वचनात् सुखापेक्षासाम्येऽपि विभाग इष्यतेऽधिकारार्थम् ।। ११ ।।

कस्याधिकारः ?

**।। ॐ अध्ययनमात्रवतः ॐ ।। १२ ।।**

'अवैष्णवस्य वेदेऽपि ह्यधिकारो न विद्यते ।
गुरुभक्तिविहीनस्य शमादिरहितस्य च ॥
न च वर्णावरस्यापि तस्मादध्ययनान्वितः ।
ब्रह्मज्ञाने तु वेदोक्तेऽप्यधिकारी सतां मतः' ॥
इति ब्रह्मतर्के ॥

'पठेद् वेदानथार्थानधीयीताथ विचार्य ब्रह्म विन्देत्' । इति (च) कौषारवश्रुतिः ॥ १२ ॥

॥ इति असार्वत्रिकाधिकरणम् (अधिकाराधिकरणम्) ॥ २ ॥

**अविशेषाधिकरणम् - ३**

**॥ ॐ नाविशेषात् ॐ ॥ १३ ॥**

न सामान्येनाधिकारो देवादीनाम् ।

'अथ पुमर्थसाधनान्यर्थो धर्मो ज्ञानमित्युत्तरोत्तरम् ।
तत्राधिकारिणो मनुष्या ऋषयो देवा इत्युत्तरोत्तरम्' ॥
इति कौण्डिन्यश्रुतिः ॥ १३ ॥

॥ इति अविशेषाधिकरणम् (अधिकारविशेषाधिकरणम्) ॥ ३ ॥

**स्तुत्यधिकरणम् - ४**

'अथ मुनिरमौनं च मौनं च निर्विद्याथ ब्राह्मणः स ब्राह्मणः केन स्याद् येन स्यात् तेनेदृश एव' । (बृ.उ.५-५-१) इति ज्ञानिनो यथेष्टाचरणं विधीयत इत्यत आह —

**।। ॐ स्तुतयेऽनुमतिर्वा ॐ ।। १४ ।।**

न विधिः । ज्ञानिनः स्तुतये अनुमतिमात्रं वा । युज्यते च ।। १४ ।।

**।। ॐ कामकारेण चैके ॐ ।। १५ ।।**

'कामचाराः कामभक्षाः कामवादाः कामेनैवेमं देहमुत्सृज्याथ परात्परमीयुरनारम्भणम्' । (सामशाखा.) इति चैके पठन्ति ।। १५ ।।

**।। ॐ उपमर्दं च ॐ ।। १६ ।।**

'ओमित्युच्चार्यान्तरिममात्मानमभिपश्योपमृद्य पुण्यं च पापं च काममाचरन्तो ब्रह्मानुव्रजन्ति' । इति च तुरश्रुतौ ।। १६ ।।

**।। ॐ ऊर्ध्वरेतस्सु च शब्दे हि ॐ ।। १७ ।।**

न तावता कामचारणां ज्ञानेऽधिकारः ।

'य इमं परमं गुह्यमूर्ध्वरेतस्सु भाषयेत् ।
न तथा विद्यते भूयान् यं प्राप्यान्येऽपि भूयसः' ।।
इति माठरश्रुतेः ।। १७ ।।

**।। ॐ परामर्शं जैमिनिरचोदना चापवदति हि ॐ ।। १८ ।।**

'प्रातरुत्थायाथ सन्ध्यामुपासीत, यत्सन्ध्यामुपासते ब्रह्मैव तदुपासतेऽथ देवान् नमेत् जुहुयाद् वेदानावर्तयीत, नान्यत्किञ्चिदाचरेन्न

सुरां पिबेन्न पलाण्डुं भक्षयीत, न भृशं वदेन्न विस्मरेदात्मानं सोमं पिबेत्, हुतशेषेण वर्तयेत्' । इत्युक्ताचारपरामर्शेन विधिबन्ध-वर्जितत्वेन कामत एव तस्य चरणं कामचार इति जैमिनिर्मन्यते । न च निषिद्धं कर्म कर्तव्यमेवेति चोदना । 'ब्राह्मणो न हन्तव्यः' इत्याद्यपवादश्च ।। १८ ।।

**।। ॐ अनुष्ठेयं बादरायणः साम्यश्रुतेः ॐ ।। १९ ।।**

अनुष्ठेयानां मध्य एव कामतश्चरणं कामतो निवृत्तिरिति बादरायणो मन्यते । 'केन स्याद् येन स्यात् तेनेदृश एव' । (बृ.उ.५-५-१) इति साम्यश्रुतेः ।

'यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः ।
आत्मन्येव च सन्तुष्टस्तस्य कार्यं न विद्यते' ।।

(गीता.३/१७) इति भगवद्वचनाच्च ।। १९ ।।

**।। ॐ विधिर्वा धारणवत् ॐ ।। २० ।।**

'केन स्याद् येन स्यात्' इति विधिर्वा । यथा वेदधारणं त्रैवर्णिकानां विहितं नान्येषाम् । एवं स्वमतानुसारिणी प्रवृत्तिर्ज्ञानिनां विहिता । न तत्राधर्मशङ्का कार्या । नान्येषामिति वा ।

'स्वेच्छयैव प्रवृत्तिस्तु ब्रह्मणो विधिचोदिता ।
नाऽऽशङ्क्यं तन्मतं क्वापि विष्णोः प्रत्यक्षचोदना ।
इतरेषां न विहिता स्वेच्छावृत्तिः कथश्चन' ।।

इति हि ब्राह्मे ।। २० ।।

**।। ॐ स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात् ॐ ।। २१ ।।**

स्तुतिमात्रमेव स्वेच्छाचरणं न विधिः । तैरपि सामान्यविधिस्वीकारादिति चेन्न । अपूर्वत्वात् परवशत्वात् । सर्वविध्यतिक्रमेण स्तुतिमात्रविषयत्वं परब्रह्मण एव हि ।

'विधीनां विषयास्त्वन्ये ब्रह्मणः स्वेच्छया कृतौ ।
परस्य ब्रह्मणो ह्येव सर्वविध्यतिदूरता' ।।

इति ब्रह्मतर्के ।। २१ ।।

**।। ॐ भावशब्दाच्च ॐ ।। २२ ।।**

'यथाविधानमपरे विधिर्भावे प्रजापतेः ।
ब्रह्मणः परमस्यैव सर्वविध्यतिदूरता' ।।

इति च तुरश्रुतौ ।। २२ ।।

**।। ॐ पारिप्लवार्था इति चेन्न विशेषितत्वात् ॐ ।। २३ ।।**

'केन स्याद् येन स्यात्' (बृ.उ.५-५-१) इत्यादयः स्थिरत्वनिवृत्त्यर्था इति चेन्न । 'त्रेधा हि ज्ञानिनो ह वाव भवन्ति विधिनियता अनियताः स्वेच्छानियता इति । विधिनियता मनुष्या, अनियता हि देवा, ब्रह्मैव स्वेच्छानियतः' । इति गौपवनश्रुतौ विशेषितत्वात् ।। २३ ।।

**।। ॐ तथा चैकवाक्योपबन्धात् ।। २४ ।।**

एवं सति विधिवाक्यानां स्वेच्छावृत्तिवाक्यानां च सम्बन्धो भवति ।। २४ ।।

**।। ॐ अत एव चाग्नीन्धनाद्यनपेक्षा ॐ ।। २५ ।।**

अत एव ज्ञानस्य मोक्षदाने नाग्निहोत्राद्यपेक्षा ।

ब्रह्मतर्के च —

'येषां ज्ञानं समुत्पन्नं तेषां मोक्षो विनिश्चितः ।
शुभकर्मभिराधिक्यं विपरीतैर्विपर्ययः ।।
स्वेच्छानुवृत्त्यैव भवेद्ब्रह्मणः प्रायशस्तथा ।
देवानामपि सर्वेषां विशेषादुत्तरोत्तरम्' ।। इति ।। २५ ।।

**।। ॐ सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् ॐ ।। २६ ।।**

सर्वधर्मापेक्षा च ज्ञानस्योत्पत्तौ । 'विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन' (बृ.उ.६-४-२२) इति श्रुतेः । यथा गतिनिष्पत्त्यर्थमश्वादयोऽपेक्ष्यन्ते न विनिष्पन्नगतेर्ग्रामादिप्राप्तौ ।।२६।।

**।। ॐ शमदमाद्युपेतः स्यात्तथाऽपि तु तद्विधेस्तदङ्गतया तेषामवश्यानुष्ठेयत्वात् ॐ ।। २७ ।।**

यद्यपि ज्ञानेनैव मोक्षो नियतस्तथाऽपि ज्ञानी शमदमाद्युपेतः स्यात् ।

'आचार्याद्विद्यामवाप्यैतमात्मानमभिपश्यन् शान्तो भवेद् दान्तो भवेदनुकूलो भवेदाचार्यं परिचरेत् परिचरेदाचार्यम्' ।। इति माठरश्रुतौ

ज्ञानिनोऽपि तद्विधेः । 'ब्राह्मीं वाव त उपनिषदमब्रूमेति । तस्यै तपो दमः कर्मेति प्रतिष्ठा वेदाः सर्वाङ्गानि सत्यमायतनम् । यो वा एतामुपनिषदमेवं वेद' । (के.उ.४-७,८,९) इति ज्ञानाङ्गतया तेषामवश्यानुष्ठेयत्वात् ।

'यस्य ज्ञानं तस्य मोक्ष इति नात्र विचारणा ।
तस्य शान्त्यादयोऽङ्गानि तस्मात् तेषामनुष्ठितिः ।।
अवश्यकरणीया स्यादन्यथाऽल्पफलं भवेत्' ।।
इति आग्नेये ।

तु शब्दः पूर्णफलार्थत्वं सूचयति ।। २७ ।।

**।। ॐ सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् ॐ ।। २८ ।।**

'यदि ह वा अप्येवं विन्निखिलं भक्षयीत एवमेव स भवति' । इति सर्वान्नानुमतिः प्राणात्ययविषया । 'न वा अजीविष्यमिमानखादन्निति होवाच कामो म उदपानम्' ।। (छां.उ.१-१०-४) इति (तद्)दर्शनात् ।। २८ ।।

**।। ॐ अबाधाच्च ॐ ।। २९ ।।**

'अन्याय्यचरणाभावे न हि ज्ञानस्य बाधनम् ।
अतो विद्वानपि न्याय्यं वर्तेतोत्कर्षसिद्धये' ।।
इति ब्रह्मतर्के ।। २९ ।।

**।। ॐ अपि स्मर्यते ॐ ।। ३० ।।**

'अतीतानागतज्ञानी त्रैलोक्योद्धरणक्षमः ।
एतादृशोऽपि नाऽऽचारं श्रौतं स्मार्तं परित्यजेत्' ।।
इति हरिवंशेषु ।। ३० ।।

।। ॐ शब्दश्चातोऽकामचारे ॐ ।। ३१ ।।

'स य एतदेवं विदेवं मन्वान एवं पश्यन्न कामचरितं चरेन्न कामं भक्षयीत न काममनुवर्तेत' ।। इति कौण्डिन्यश्रुतौ ।

अत इत्यल्पफलत्वं सूचयति ।

'न निषिद्धानि वर्तेत पूर्णज्ञानफलेच्छया' ।। इति पाद्मे ।।३१।।

।। ॐ विहितत्वाच्चाऽऽश्रमकर्माऽपि ॐ ।। ३२ ।।

न केवलं निषिद्धाकरणे पूर्यते । कर्तव्यं च वर्णाश्रमविहितं कर्म ।।

'पश्यन्नपीममात्मानं कुर्यात् कर्माऽविचारयन् ।
यदात्मनः सुनियतमानन्दोत्कर्षमाप्नुयात्' ।।

इति कौषारवश्रुतौ विहितत्वाच्च ।

अपिशब्दो वर्णधर्मसमुच्चयार्थः ।। ३२ ।।

।। ॐ सहकारित्वेन च ॐ ।। ३३ ।।

'यथा राज्ञः सहकार्येव मन्त्री तथाऽप्यृते तं क्षितिपः कार्यमृच्छेत् ।

एवं ज्ञानं कर्म विनाऽपि कार्यं सहायभूतं न विचारः कुतश्चित्' ।। इति कमठश्रुतौ सहकारित्वोक्तेश्च ।

'ज्ञानान्मोक्षो भवत्येव सर्वाकार्यकृतोऽपि तु ।
आनन्दो ह्रसतेऽकार्याच्छुभं कृत्वा च (तु) वर्धते' ।।
इति (च) ब्रह्माण्डे ।।

'सर्वदुःखनिवृत्तिश्च ज्ञानिनो निश्चितैव हि ।
उपासया कर्मभिश्च भक्त्या चाऽऽनन्दचित्रता' ।।
इति बृहत्तन्त्रे ।।

'धर्मस्वरूपचित्रत्वाद् यो यो देवमनोगतः ।
स एव धर्मो विज्ञेयो न ह्येते लोकसम्मिताः' ।।
इति च पाद्मे ।। ३३ ।।

।। इति स्तुत्यधिकरणम् (कामचाराधिकरणम्) ।। ४ ।।

### उभयलिङ्गाधिकरणम् - ५

**।। ॐ सर्वथाऽपि तु त एवोभयलिङ्गात् ॐ ।। ३४ ।।**

सर्वप्रकारेणोत्साहेऽपि ये ज्ञानयोग्यास्त एव ज्ञानं प्राप्नुवन्ति नान्ये । 'य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोकोऽविजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः सोऽन्वेष्टव्यः स विजिज्ञासितव्यः' ।। (छां.उ.८-७-३) इति श्रुत्याऽऽचार्योपदेशसाम्येऽपि विरोचनो विपरीतज्ञानमापेन्द्रः सम्यग्ज्ञानमित्युभयविधलिङ्गात् ।। ३४ ।।

### ।। ॐ अनभिभवं च दर्शयति ॐ ।। ३५ ।।

'दैवीमेव सम्पत्तिं देवा अभिगच्छन्त्यासुरीमेव चासुरा नैवैतयोरभिभवः कदाचित् स्वभाव एव ह्यवतिष्ठते' ।। इति स्वभावानभिभवं च दर्शयति ।। ३५ ।।

### ।। ॐ अन्तरा चापि तु तद्दृष्टेः ॐ ।। ३६ ।।

सम्यग्ज्ञानविपरीतज्ञानयोरन्तरा स्थितानामपि देवासुरभावयोर्दार्ढ्यदृष्टेः ।। ३६ ।।

### ।। ॐ अपि स्मर्यते ॐ ।। ३७ ।।

'असुरा आसुरेणैव स्वभावेन च कर्मणा ।
ज्ञानेन विपरीतेन तमो यान्ति विनिश्चयात् ।।
देवा दैवस्वभावेन कर्मणा चाप्यसंशयम् ।
सम्यग्ज्ञानेन परमां गतिं गच्छन्ति वैष्णवीम् ।।
नानयोरन्यथाभावः कदाचित्कापि विद्यते ।
मानुषा मिश्रमतयो विमिश्रगतयोऽपि च' ।।
इति स्कान्दे ।। ३७ ।।

### ।। ॐ विशेषानुग्रहं च ॐ ।। ३८ ।।

'शृण्वे वीर उग्रमुग्रं दमायन् अन्यमन्यमतिनेनीयमानः ।
एधमानद्विट् उभयस्य राजा चोष्कूयते विश इन्द्रो मनुष्यान्' ।।

(ऋ.सं.६-४७-१६) इति विशेषानुग्रहं च दर्शयति देवेषु परमेश्वरस्य ।

'असुरान् दमयन् विष्णुः स्वपदं च सुरान्नयन् ।
पुनः पुनर्मानुषांस्तु सृतावावर्तयत्यसौ ॥
इति भविष्यत्पर्वणि ॥ ३८ ॥

**॥ ॐ अतस्त्वितरज्ज्यायो लिङ्गाच्च ॐ ॥ ३९ ॥**

देवभागादसुरभाग एव बहुलः । 'तस्मान्न जनतामियात्' (बृ.उ.३-३-१०) इति लिङ्गात् । चशब्दात् 'ततः कनीयसा एव देवा ज्यायसा असुराः' ॥ (बृ.उ.३-३-१) इति श्रुतेश्च ।

'असुरा बहुला यस्मात्तस्मान्न जनतामियात्' ॥
इति च ब्राह्मे ॥ ३९ ॥

**॥ ॐ तद्भूतस्य तु तद्भावो जैमिनेरपि नियमातद्रूपाऽभावेभ्यः ॐ ॥ ४० ॥**

असुरजातेरेवासुरत्वं देवजातेरेव देवत्वं जैमिनेरपि सिद्धमेव । 'नासुरा दैवीं न देवा आसुरीं न मनुष्या दैवीमासुरीं च गतिमीयुरात्मीयामेव जातिमनुभवन्ति' ॥ इति नियमश्रुतेः । 'नासुराणां दैवं रूपं न देवानामासुरं न चोभयं मनुष्याणां यो यद्रूपः स तद्रूपो निसर्गो ह्येष भवति' ॥ इत्यतद्रूपत्वश्रुतेः । 'तं भूतिरिति देवा उपासाञ्चक्रिरे ते बभूवुस्तस्माद्धाऽप्येतर्हि सुप्तो भूर्भूरित्येव प्रश्वसित्यभूतिरित्यसुरास्ते ह पराबभूवुः' (ऐ.आ.२-१-८) इति देवासुराणां भावाभावश्रुतेश्च ।

'देवानां भूतिरित्येव मनो विष्णौ स्वभावतः ।
असुराणामभूतित्वेनैतन्नेयमतोऽन्यथा ॥
देवाः शापाभिभूतत्वात् प्रह्लादाद्या बभूविरे ।
अतः सुगतिरेतेषां नान्यथा व्यत्ययो भवेत्' ॥
इति चाध्यात्मे ॥ ४० ॥

॥ इति उभयलिङ्गाधिकरणम् ॥ ५ ॥

**आधिकारिकाधिकरणम् - ६**

**॥ ॐ न चाऽधिकारिकमपि पतनानुमानात् तदयोगात् ॐ ॥ ४१ ॥**

न च परमात्मैश्वर्यादिकमाकाङ्क्ष्यम् । ब्रह्मादीनामपि नाऽऽकाङ्क्ष्यं, किमु परस्येति सूचयितुमपिशब्दः । चशब्दस्तु ज्ञानार्थिनां पूर्वोक्तादित्थम्भावान्तरसूचकः । अयोग्यमारोढुं प्रयतन् प्रपतन् हि दृश्यते । एवमयोग्यस्य परमात्मैश्वर्यस्य ब्रह्मादिपदस्य चाकाङ्क्षायां पतनमनुमीयते ।

'न देवपदमन्विच्छेत् कुत एव हरेर्गुणान् ।
इच्छन् पतति पूर्वस्मादधस्ताद् यत्र नोत्थितिः' ॥
इति ब्रह्माण्डे ।

'स्वकीयमिच्छमानं तु राजाद्याः पातयन्ति हि ।
एवमेव सुराद्याश्च हरिश्च स्वपदेच्छुकम्' ॥

इत्याद्यनुमानरूपवाक्याच्च ।

'मायाभिरुत्सिसृप्सत इन्द्र द्यामारुरुक्षतः । अव दस्यूँरधूनुथाः'। (ऋ.सं.८-१४-१४) इति श्रुतिश्च ॥ ४१ ॥

**॥ ॐ उपपूर्वमपीत्येके भावशमनवत् तदुक्तम् ॐ ॥ ४२ ॥**

उपदेवपदं च (नाकांक्ष्य) नापेक्ष्यमित्येके । भावशमनवत् ऋषिपदवदेव । तच्चोक्तमिन् द्रद्युम्नश्रुतौ—

'अथ यथर्षीन् प्रजापतीन् नाकाङ्क्षेदेवं न गन्धर्वान्न विद्याधरान्न सिद्धान्' ॥ इति ।

बृहत्संहितायां च —

'न दैवानभिकाङ्क्षेत कुत एव हरेर्गुणान् ।
प्राजापत्यान्न चाऽऽर्षांश्च गान्धर्वादीनपि क्वचित् ॥
ऋष्यादिषु विशेषे तु दोषो नैवाविशेषि(ष)तः' ॥

इति विशेषदर्शनार्थमेक इत्युक्तम् ॥ ४२ ॥

**॥ ॐ बहिस्तूभयथाऽपि स्मृतेराचाराच्च ॐ ॥ ४३ ॥**

देवर्षिगन्धर्वादिपदेभ्योऽन्यत्र शुभविषय आकाङ्क्षायामनाकाङ्क्षायां च न पतनम् ।

देवर्षिगन्धर्वाणां पदाकाङ्क्षी पतेद्ध्रुवम् ।
अन्यत्र शुभमाकाङ्क्षन्न पतेदविरोधतः ॥ इति स्मृतेः ॥

'नानात्वमेव कामानां नाकामः क्व च दृश्यते ।
अतोऽविरुद्धकामः स्यादकामस्तेन भण्यते' ॥

इत्याचाराच्च ।। ४३ ।।

।। इति आधिकारिकाधिकरणम् ।। ६ ।।

फलश्रुत्यधिकरणम् - ७

**।। ॐ स्वामिनः फलश्रुतेरित्यात्रेयः ॐ ।। ४४ ।।**

'ब्रह्मविदाप्नोति परम्' (तै.उ.२-१) इत्यादि फलं स्वामिनां देवानामेव भवति । 'यदु किञ्चेमाः प्रजाः शुभमाचरन्ति देवा एव तदाचरन्ति यदु किं चेमाः प्रजाः विजानते देवा एव तद्विजानते देवानां ह्येतद्भवति स्वामी हि फलमश्नुते नास्वामी कर्म कुर्वाणः' ।। इति माध्यन्दिनायनश्रुतेरित्यात्रेयो मन्यते ।। ४४ ।।

**।। ॐ आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रियते ॐ ।। ४५ ।।**

सत्रयागेष्वृत्विजामपि फलदर्शनादल्पं फलं प्रजानामपि भवतीत्यौडुलोमिर्मन्यते । तदर्थं देवैः क्रियमाणत्वात् ।। ४५ ।।

**।। ॐ सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत् ॐ ।। ४६ ।।**

तृतीयः स्वपक्षः । देवानां ज्ञानादिकर्मणि सहकार्यन्तरत्वेन प्रजा विधीयन्ते । यथा प्रजावतो राज्ञः प्रजाः सहकारित्वेन विधीयन्ते । यथा वाऽऽचार्यस्य शिष्याः ।

वाराहे च —

'ज्ञानादिदानं देवानां विष्णुना साधु चोदितम् ।
वेदे(षु)च तेषां विहितं तत्राऽचार्यो महत्तरः ।।
विहितस्सहकारित्वे सहकार्यन्तरं प्रजाः ।
पातृत्वेन यथा राज्ञो यथा शिष्या गुरोरपि ।।
तस्मात् श्रुतं फलं तासामाचार्याणां महत्तरम् ।
ततो महत्तरं प्रोक्तं देवानामुत्तरोत्तरम्' ।। इति ।। ४६ ।।

।। इति फलश्रुत्यधिकरणम् ।। ७ ।।

## कृत्स्नभावाधिकरणम् - ८

## ।। ॐ कृत्स्नभावात्तु गृहिणोपसंहारः ॐ ।। ४७ ।।

'कुटुम्बे शुचौ देशे स्वाध्यायमधीयानो धार्मिकान् विदधत्' इत्युक्त्वा 'न च पुनरावर्तते न च पुनरावर्तते' । (छां.उ.८-१५-१) इति गृहिणोपसंहारः क्रियते तस्माद् गृहस्थस्यैवोत्तम(र)त्वमिति न वाच्यम् । यतः कृत्स्नगृहस्थान् देवानपेक्ष्यैवोपसंहारः क्रियते ।

'कृत्स्ना ह्येते गृहिणो देवाः कृत्स्ना ह्येते यतयोऽत एतेषां न पुत्रा दायमुपयन्ति न चैते गृहान् विसृजन्त्यरागा अद्वेषा अलोभाः सर्वभोगाः सर्वज्ञाः सर्वकर्तारः' । इति पौत्रायणश्रुतिः।। ४७ ।।

## ।। ॐ मौनवदितरेषामप्युपदेशात् ॐ ।। ४८ ।।

न चाऽऽश्रमद्वयमेव देवानाम् । 'देवा एव ब्रह्मचारिणो देवा

एव गृहस्था देवा एव वनस्था यथा ह्येते मुनय एवं सर्ववर्णाः सर्वाश्रमाः सर्वं ह्येते कर्म कुर्वन्ति' ।। इति कौण्ठरव्यश्रुतौ यतित्वदृष्टान्तेनान्येषामप्युपदेशात् ।। ४८ ।।

।। इति कृत्स्नभावाधिकरणम् ।। ८ ।।

**अन्वयाधिकरणम् - ९**

**।। ॐ अनाविष्कुर्वन्नन्वयात् ॐ ।। ४९ ।।**

'एतां विद्यामधीत्य ब्रह्मदर्शी वाव भवति । स एतां मनुष्येषु विब्रूयात् । यथा यथा ह वै ब्रूयात् तथा तथाऽधिको भवति' ।। इति माठरश्रुतौ विद्यादानं श्रूयते । तच्च बहूनां स्वीकरणार्थमाविष्कारेणेति न मन्तव्यम् । अन्वयायुक्तेः । आविष्कारेऽयोग्यानामपि स्वीकारप्राप्तिः । तच्च निषिद्धम्—

'मा नः स्तेनेभ्यो ये अभि द्रुहस्पदे निरामिणो
रिपवोऽन्नेषु जागृधुः ।
येषां नैतन्नापरं किं च नैकं ब्रह्मणस्पते ब्रूहि तेभ्यः कदाचित्' ।।

'अथो(प)शमेनोपरता मनुष्याः ये धर्मिणो ब्रूहि तेभ्यः सदा नः ।
आदेवानामोहते वि व्रयो हृदि बृहस्पते न परः साम्नो विदुः' ।।
इति (ऋ.सं.२-२३-१६) ।

'विद्या ह वै ब्राह्मणमाजगाम गोपाय मां शेवधिष्टेऽहमस्मि ।
अनार्यकायानृजवे शठाय मा स्म (न मां) ब्रूया ऋजवे ब्रूहि
नित्यम्' ।। इति च ।। ४९ ।।

।। इति अन्वयाधिकरणम् (अनाविष्काराधिकरणम्) ।। ९ ।।

**ऐहिकाधिकरणम् - १०**

**।। ॐ ऐहिकमप्रस्तुतप्रतिबन्धे तद्दर्शनात् ॐ ।। ५० ।।**

'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः'।। (बृ.उ.४-४-५) इति दर्शनार्थं श्रवणादि विधीयते। तच्च दर्शनमैहिकमेव प्रारब्धप्रतिबन्धाभावे ।

'श्रुत्वाऽऽत्मानं मतिपूर्वं ह्युपास्य इहैव दृष्टिं परमस्य विन्देत् ।
यद्यारब्धं कर्म निबन्धकं स्यात् प्रेत्यैव पश्येद् योगमेवान्ववेक्ष्य' ।।
इति सौपर्णश्रुतौ तद्दर्शनात् ।

'अनादिजन्मसम्बद्धं(न्धं) निर्भेत्तुं पापपञ्जरम् ।
यावत्या सेवया शक्यं तावत्कार्यं न संशयः ।।
यावद्दूरे स्थितो गम्यात् तावद् गन्तव्यमेव हि ।
इह जन्मान्तरे वाऽपि तावत्यैव तु दर्शनम् ।।
श्रवणं मननं चैव निदिध्यासनमेव च ।
परे गुरौ च या भक्तिः परिचर्यादिकं हरेः ।।
एषा सेवेति सम्प्रोक्ता यया तद्दर्शनं भवेत्' ।।
इति बृहत्संहितायाम् ।। ५० ।।

।। इति ऐहिकाधिकरणम् ।। १० ।।

**मुक्तिफलाधिकरणम् - ११**

**।। ॐ एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः ॐ ।। ५१ ।।**

एवमेव प्रारब्धकर्माभावे शरीरपातानन्तरमेव मोक्षः, तद्भावे जन्मान्तराणीत्यनियमः । 'धर्मी स्वर्गं विधर्मी निरयमेत्येव ब्रह्मसंस्थोऽमृत(त्व)मेत्येव ब्रह्मसंस्थोऽमृत(त्व)मेत्येव' ।। इति ब्रह्मसंस्थस्य मोक्षस्यैवावधारणात् ।

'विद्वानमृतमाप्नोति नात्र कार्या विचारणा ।
अवसन्नं यदारब्धं कर्म तत्रैव गच्छति ।।
नचेद्बहूनि जन्मानि प्राप्यैवान्ते न संशयः' ।।
इति नारायणाध्यात्मे ।। ५१ ।।

।। इति मुक्तिफलाधिकरणम् ।। ११ ।।
।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्ब्रह्मसूत्रभाष्ये तृतीयाध्यायस्य चतुर्थः पादः ।।
।। तृतीयाध्यायः समाप्तः ।।

* * *

# चतुर्थाध्यायस्य प्रथमः पादः

## आवृत्त्यधिकरणम् - १

फलं निगद्यतेऽस्मिन्नध्याये । कर्मनाशाख्यं फलमस्मिन् पादे । नित्यशः कार्यं सर्वथा भाव्यं साधनं प्रथमत उच्यते । प्रायिकत्वाच्चाध्यायानां पादानां च न विरोधः ।

**।। ॐ आवृत्तिरसकृदुपदेशात् ॐ ।। १ ।।**

'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' (बृ.उ.४-४-५) इत्यादीनां नाग्निष्टोमादिवदेकवारेणैव फलप्राप्तिः । किन्तु आवृत्तिः कर्तव्या ।

'स य एषोऽणिमैतदात्म्यमिदं सर्वम्' । (छा.उ.६-८-७) इत्याद्यसकृदुपदेशात् ।। १ ।।

**।। ॐ लिङ्गाच्च ॐ ।। २ ।।**

'स तपोऽतप्यत....पुनरेव वरुणं पितरमुपससार' (तै.उ.३-१-२) इत्याद्यावर्तनलिङ्गाच्च ।

'नित्यशः श्रवणं चैव मननं ध्यानमेव च ।
कर्तव्यमेव पुरुषैर्ब्रह्मदर्शनमिच्छुभिः' ।। इति बृहत्तन्त्रे ।।२।।

।। इति आवृत्त्यधिकरणम् ।। १ ।।

### आत्माधिकरणम् - २

### ।। ॐ आत्मेति तूपगच्छन्ति ग्राहयन्ति च ॐ ।। ३ ।।

आत्मेत्युपदेश उपासनं च मोक्षार्थिभिः सर्वथा कार्यमेव । 'नान्यं विचिन्तय आत्मानमेवाहं विजानीयामात्मानमुपास आत्मा हि ममैष भवति' ।। इति ह्युपगच्छन्ति । 'आत्मेत्येवोपास्व आत्मेत्येव विजानीहि नान्यं किञ्चन विजानथ आत्मा ह्येवैष भवति' ।। इति ग्राहयन्ति च ।

'आत्मेत्युपासनं कार्यं सर्वथैव मुमुक्षुभिः ।
नानाक्लेशसमायुक्तोऽप्येतावन्नैव विस्मरेत्' ।।
इति भविष्यत्पर्वणि ।।

'आत्मा विष्णुरिति ध्यानं विशेषणविशेष्यतः ।
सर्वेषां च मुमुक्षूणामुपदेशश्च तादृशः ।।
कर्तव्यो नास्य हानेन कस्यचिन्मोक्ष इष्यते' ।।
इति ब्राह्मे ।। ३ ।।

।। इति आत्माधिकरणम् ।। २ ।।

### नप्रतीकाधिकरणम् - ३

### ॐ न प्रतीके न हि सः ॐ ।। ४ ।।

'नाम ब्रह्मेत्युपास्ते' (छां.उ.७-१-५) इत्यादिना शब्दभ्रान्त्या न प्रतीके ब्रह्मदृष्टिः कार्या । किन्तु तत्स्थत्वेनैवोपासनं कार्यम् । ब्रह्मतर्के च—

'नामादिप्राणपर्यन्त(उ)मुभयोः प्रथमा(त्म)त्वतः ।
ऐक्यदृष्टिरिति भ्रान्तिरबुधानां भविष्यति ।।
नामादिस्थितिरेवात्र ब्रह्मणो हि विधीयते ।
सर्वार्था प्रथमा यस्मात् सप्तम्यर्था ततो मता' ।।
इति ।। ४ ।।

।। इति नप्रतीकाधिकरणम् ।। ३ ।।

**ब्रह्मदृष्ट्यधिकरणम् - ४**

**।। ॐ ब्रह्मदृष्टिरुत्कर्षात् ॐ ।। ५ ।।**

ब्रह्मदृष्टिश्च सर्वथा कार्यैव परमेश्वरे । उत्कृष्टत्वात् ।

'ब्रह्मदृष्ट्या सदोपास्यो विष्णुः सर्वैरपि ध्रुवम् ।
महत्त्ववाची शब्दोऽयं महत्त्वज्ञानमेव हि ।
सर्वतः प्रीतिजनकमतस्तत् सर्वथा भवेत् ।।
आत्मेत्येव यदोपासा तदा ब्रह्मत्वसंयुता ।
कार्यैव सर्वथा विष्णोर्ब्रह्मत्वं न परित्यजेत्' ।।
इति ब्रह्मतर्के ।। ५ ।।

।। इति ब्रह्मदृष्ट्यधिकरणम् ।। ४ ।।

**आदित्याधिकरणम् - ५**

**।। ॐ आदित्यादिमतयश्चाङ्ग उपपत्तेः ॐ ।। ६ ।।**

'चक्षोः सूर्यो अजायत' इत्याद्युपासनं च देवानां कार्यमेव ।

स्वोत्पत्तिस्थानत्वात् स्वाश्रयत्वान्मुक्तौ तत्र लयस्यापेक्षितत्वा-च्चोपपन्नं तेषां तथोपासनम् ।

नारायणतन्त्रे च—

'आधिव्याधिनिमित्तेन विक्षिप्तमनसोऽपि तु ।
गुणानां स्मरणाशक्तौ विष्णोर्ब्रह्मत्वमेव तु ।।
स्मर्तव्यं सततं तत्तु न कदाचित् परित्यजेत् ।
अत्र सर्वगुणानां च यतोऽन्तर्भाव इष्यते ।।
स्वोत्पत्त्यङ्गं च देवानां विष्णोश्चिन्त्यं सदैव तु ।
तेषां तत्र प्रवेशो हि मुक्तिरित्युच्यते बुधैः ।।
तदाश्रिताश्च ते नित्यं ततश्चिन्त्यं विशेषतः' ।। इति ।।६।।

।। इति आदित्याधिकरणम् ।। ५ ।।

**आसीनाधिकरणम् - ६**

**।। ॐ आसीनस्सम्भवात् ॐ ।। ७ ।।**

सर्वदोपासनं कुर्वन्नप्यासीनो विशेषतः कुर्यात् । तदा विक्षेपाल्पत्वेन सम्भवात् ।। ७ ।।

**।। ॐ ध्यानाच्च ॐ ।। ८ ।।**

'स्मरणोपासनं चैव ध्यानात्मकमिति द्विधा ।
स्मरणं सर्वदा योग्यं ध्यानोपासनमासने ।।
नैरन्तर्यं मनोवृत्तेर्ध्यानमित्युच्यते बुधैः ।
आसीनस्य भवेत् तत्तु न शयानस्य निद्रया ।।

स्थितस्य गच्छतो वाऽपि विक्षेपस्यैव सम्भवात् ।
स्मरणात् परमं ज्ञेयं ध्यानं नास्त्यत्र संशयः' ॥

इति नारायणतन्त्रे ॥ अतो ध्यानत्वाच्च ॥ ८ ॥

**॥ ॐ अचलत्वं चापेक्ष्य ॐ ॥ ९ ॥**

'अचलं चेच्छरीरं स्यान्मनसश्चाप्यचालनम् ।
चलने तु शरीरस्य चञ्चलं तु मनो भवेत्' ॥

इति ब्रह्माण्डे ॥ ९ ॥

**॥ ॐ स्मरन्ति च ॐ ॥ १० ॥**

'समं कायशिरोग्रीवं धारयन्नचलं स्थिरः ।
सम्प्रेक्ष्य नासिकाग्रं स्वं दिशश्चानवलोकयन्' ॥

इत्यादि ॥ १० ॥

**॥ ॐ यत्रैकाग्रता तत्राविशेषात् ॐ ॥ ११ ॥**

देशकालावस्थादिषु यत्रैकाग्रता भवति तत्रैव स्थातव्यम् ।

'तमेव देशं सेवेत तं कालं तामवस्थितिम् ।
तानेव भोगान् भुञ्जीत मनो यत्र प्रसीदति ॥
न हि देशादिभिः कश्चिद् विशेषः समुदीरितः ।
मनः प्रसादनार्थं हि देशकालादिचिन्तना' ॥

इति वाराहे ॥ ११ ॥

॥ इति आसीनाधिकरणम् ॥ ६ ॥

## आ प्रायणाधिकरणम् - ७

### ।। ॐ आ प्रायणात् तत्रापि हि दृष्टम् ॐ ।। १२ ।।

यावन्मोक्षस्तावदुपासनादि कार्यम् ।

'स यो ह वै तद् भगवन्मनुष्येषु प्रायणान्तम्
ओङ्कारमभिध्यायीत' ।। (प्र.उ.५-२) इति हि श्रुतिः ।

'सर्वदैनमुपासीत यावद् विमुक्तिर्मुक्ता अपि ह्येनमुपासते' ।।
इति सौपर्णश्रुतिः ।।

'श्रुणुयाद् यावदज्ञानं मतिर्यावदयुक्तता ।
ध्यानं च यावदीक्षा स्यान्नेक्षा क्वचन बाध्यते ।।
दृष्टतत्वस्य च ध्यानं यदा दृष्टिर्न विद्यते ।
भक्तिश्चानन्तकालीना परमे ब्रह्मणि स्फुटा ।
आ विमुक्तेर्विधिर्नित्यं स्वत एव ततः परम्' ।।
इति ब्रह्माण्डे ।। १२ ।।

।। इति आ प्रायणाधिकरणम् ।। ७ ।।

## तदधिगमाधिकरणम् - ८

### ।। ॐ तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् ॐ ।। १३ ।।

ब्रह्मदर्शन उत्तराघस्याश्लेषः पूर्वस्य विनाशश्च ।

'तद् यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेवंविदि पापं कर्म न श्लिष्यते' । (छां.उ.४-१४-३)

'तद् यथेषीकातूलमग्नौ प्रोतं प्रदूयेतैवं हैवास्य सर्वे पाप्मानः प्रदूयन्ते' । (छां.उ.५-२४-३) इति तद्व्यपदेशात् ।। १३ ।।

**।। ॐ इतरस्याप्येवमसंश्लेषः पाते तु ॐ ।। १४ ।।**

पुण्यस्याप्येवमसंश्लेषः पाते । तुशब्दोऽनुत्थानवाची ।

'यथाऽश्लेषो विनाशश्च मुक्तस्य तु विकर्मणः ।
एवं सुकर्मणश्चापि पततस्तमसि ध्रुवम्' ।।
इति चाऽग्नेये ।। १४ ।।

**।। ॐ अनारब्धकार्ये एव तु पूर्वे तदवधेः ॐ ।। १५ ।।**

अनारब्धकार्ये एव पूर्वे पुण्यपापे विनश्यतः ।

'तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्यते' ।
(छां.उ.६-१४-२) इति तदवधेः ।

तुशब्दः स्मृतिद्योतकः ।

'यदनारब्धपापं स्यात् तद् विनश्यति निश्चयात् ।
पश्यतो ब्रह्म निर्द्वन्द्वं हीनं च ब्रह्म पश्यतः ।
द्विषतो वा भवेत् पुण्यनाशो नास्त्यत्र संशयः ।।
तस्याप्यारब्धकार्यस्य न विनाशोऽस्ति कुत्रचित् ।
आरब्धयोश्च नाशः स्यादल्पयोः पुण्यपापयोः' ।।
इति नारायणतन्त्रे ।। १५ ।।

**।। ॐ अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् ॐ ।। १६ ।।**

अग्निहोत्राद्यपि तु मोक्षेऽनुभवायैव । तुशब्दाद् ब्रह्मदर्शनवतः ।

'स एनमविदितो न भुनक्ति यथा वेदो वाऽननूक्तोऽन्यद्वा कर्माकृतम् । यदि ह वा अप्यनेवंविन्महत् पुण्यं कर्म करोति तद्धास्यान्ततः क्षीयत एवात्मानमेव लोकमुपासीत स य आत्मानमेव लोकमुपास्ते न हास्य कर्म क्षीयतेऽस्माद्ध्येवात्मनो यद्यत् कामयते तत्तत् सृजते' ।। (बृ.उ.३-४-१५) इति तद्दर्शनात् ।। १६ ।।

**।। ॐ अतोऽन्यदपीत्येकेषामुभयोः ॐ ।। १७ ।।**

मुक्तावनुभवकारणाद् यदन्यत् पुण्यमपि विनश्यति, अप्रारब्धमनभीष्टं च । तथा ह्येकेषां पाठ उभयोस्त्यागेन–

'तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्याम्' ।। (शाट्यायनशाखा) इति ।

'अनभीष्टमनारब्धं पुण्यमप्यस्य नश्यति ।
किमु पापं परब्रह्मज्ञानिनो नात्र संशयः' ।।
इति पाद्मे ।। १७ ।।

**।। ॐ यदेव विद्ययेति हि ॐ ।। १८ ।।**

ब्रह्मदर्शिकृतमल्पमपि पुण्यं महत्तममनन्तं च भवति ।

'यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति' । (छां.उ.१-१-१०) इति श्रुतेः ।

'न हास्य कर्म क्षीयत' (बृ.उ.३-४-१५) इति च ।

'अल्पमात्रः कृतो धर्मो भवेज्ज्ञानवतो महान् ।
महानपि कृतो धर्मो ह्यज्ञानां निष्फलो भवेत्' ।।
इति च भारते ।। १८ ।।

**।। ॐ भोगेन त्वितरे क्षपयित्वाऽथ सम्पत्स्यते ॐ ।। १९ ।।**

आरब्धपुण्यपापे भोगेन क्षपयित्वा ब्रह्म सम्पत्स्यते । अथेति नियमसूचकः ।

'आरब्धपुण्यपापस्य भोगेन क्षपणादनु ।
प्राप्नोत्येव तमो घोरं ब्रह्म वा नात्र संशयः ।।
ब्रह्मणां शतकालात्तु पूर्वमारब्धसंक्षयः ।
नियमेन भवेन्नात्र कार्या काचिद्विचारणा' ।।
इति च नारायणतन्त्रे ।। १९ ।।

।। इति तदधिगमाधिकरणम् ।। ८ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते ब्रह्मसूत्रभाष्ये चतुर्थाध्यायस्य प्रथमः पादः ।।

# चतुर्थाध्यायस्य द्वितीयः पादः

**वाङ्मनसाधिकरणम् - १**

देवानां मोक्ष उत्क्रान्तिश्चास्मिन्पाद उच्यते–

**।। ॐ वाङ्मनसि दर्शनाच्छब्दाच्च ॐ ।। १ ।।**

वागभिमानिनी उमा मनोऽभिमानिनि रुद्रे विलीयते । वाचो मनोवशत्वदर्शनात् । 'तस्य यावन्न वाङ्मनसि सम्पद्यते' । (छां.उ.६-१५-१) इति शब्दाच्च ।

'उमा वै वाक् समुद्दिष्टा मनो रुद्र उदाहृतः ।
तदेतन्मिथुनं ज्ञात्वा न दाम्पत्याद् विहीयते' ।।
इति स्कान्दे ।। १ ।।

**।। ॐ अत एव च सर्वाण्यनु ॐ ।। २ ।।**

अत एव च शब्दात् सर्वाणि दैवतानि यथानुकूलं विलीयन्ते ।

'अग्नौ सर्वे देवा विलीयन्तेऽग्निरिन्द्रे इन्द्र उमायामुमा रुद्रे विलीयते एवमन्यानि दैवतानि यथाऽनुकूलम्' ।। इति हि गौपवनश्रुतिः ।। २ ।।

।। इति वाङ्मनसाधिकरणम् ।। १ ।।

**मनः प्राणाऽधिकरणम् (मनोऽधिकरणम्) - २**

**।। ॐ तन्मनः प्राण उत्तरात् ॐ ।। ३ ।।**

'मनः प्राणे' (छां.उ. ६-१५-१) इत्युत्तराद् वचनान्मनोऽभिमानी रुद्रः प्राणे वायौ विलीयते ।

'वायोर्वाव रुद्र उदेति वायौ विलीयते तस्मादाहुर्वायुर्देवानां श्रेष्ठः' इति च कौण्डिन्यश्रुतिः ।। ३ ।।

।। इति मनः प्राणाधिकरणम् ।। २ ।।

**अध्यक्षाधिकरणम् - ३**

**।। ॐ सोऽध्यक्षे तदुपगमादिभ्यः ॐ ।। ४ ।।**

स प्राणः परमात्मनि विलीयते ।

'सर्वे प्राणमुपगच्छन्ति प्राणः परमुपगच्छति प्राणं देवा अनुप्राणन्ति प्राणः परमनुप्राणिति तस्मादाहुः प्राणस्य प्राण इति' ।। 'प्राणः परस्यां देवतायाम्' ।

'मुक्ताः सन्तोऽग्निमाविश्य देवाः सर्वेऽपि भुञ्जते ।
अग्निरिन्द्रं तथेन्द्रश्च वायुमाविश्य सोऽपि तु ।
आविश्य परमात्मानं भुङ्क्ते भोगांस्तु बाह्यकान् ।।
न ह्यानन्दो निजस्तेषां परैर्लभ्यः कथञ्चन ।
किमु विष्णोः परानन्दो न ते विष्णविति श्रुतेः ।।
प्राणस्य तेजसि लयो मार्गमात्रमुदाहृतम् ।
सर्वेशितुश्च सर्वादेस्तस्यान्यत्र लयः कथम्' ।।

इत्यादिश्रुतिस्मृतिभ्यः ।। ४ ।।

।। इति अध्यक्षाधिकरणम् ।। ३ ।।

## भूताधिकरणम् - ४

**।। ॐ भूतेषु तच्छ्रुतेः ॐ ।। ५ ।।**

भूतेष्वन्येषां देवानां लयः ।

'भूतेषु देवा विलीयन्ते भूतानि परे न पर उदेति नास्तमेत्येकल एव मध्ये स्थाता' ।। इति बृहच्छ्रुतेः ।। ५ ।।

।। इति भूताधिकरणम् ।। ४ ।।

## नैकस्मिन्नधिकरणम् - ५

**।। ॐ नैकस्मिन् दर्शयतो हि ॐ ।। ६ ।।**

नैकस्मिन् भूते सर्वेषां देवानां लयः । 'पृथिव्यामृभवो विलीयन्ते, वरुणेऽश्विनावग्रावग्रयो वायाविन्द्रः सोम आदित्यो बृहस्पतिरित्याकाश एव साध्या विलीयन्ते । मृत्यवः पृथिव्यां, वरुण आपोऽग्नयस्तेजसि मरुतो मारुत, आकाशे विनायका विलीयन्ते' ।। इति महोपनिषच्चतुर्वेदशिखा च दर्शयतः । अतोऽग्नौ देवा विलीयन्त इति तत्र निर्दिष्टानामेव ।। ६ ।।

।। इति नैकस्मिन्नधिकरणम् ।। ५ ।।

## समनाधिकरणम् - ६

**।। ॐ समना चासृत्युपक्रमादमृतत्वं चानुपोष्य ॐ ।।७।।**

देशतः कालतश्च व्याप्त्या समो ना परमपुरुषो यस्याः सा समना । संसारानुपक्रमात् स्वत एवामृतत्वं तस्याः । बृहच्छ्रुतिश्च–

'द्वौ वाव सृत्यनुपक्रमौ प्रकृतिश्च परमश्च द्वावेतौ नित्यमुक्तौ नित्यौ च सर्वगतौ चैतौ ज्ञात्वा विमुच्यते' । इति । नैतावता साम्यम् ॥ ७ ॥

॥ ॐ तदपीतेः संसारव्यपदेशात् ॐ ॥ ८ ॥

'समावेतौ प्रकृतिश्च परमश्च नित्यौ सर्वगतौ नित्यमुक्ताव-समावेतौ प्रकृतिश्च परमश्च विलीनो हि प्रकृतौ संसारमेति विलीनः परमे ह्यमृतत्वमेति' ॥ इति सौपर्णश्रुतेः ॥ ८ ॥

॥ ॐ सूक्ष्मं प्रमाणतश्च तथोपलब्धेः ॐ ॥ ९ ॥

सूक्ष्मत्वं चाधिकं ब्रह्मणः प्रकृतेः । ज्ञानानन्दैश्वर्यादि-प्रमाणाधिक्यं च ।

'सर्वतः प्रकृतिः सूक्ष्मा प्रकृतेः परमेश्वरः ।
ज्ञानानन्दौ तथैश्वर्यं गुणाश्चान्येऽधिकाः प्रभोः' ॥
इति च तुरश्रुतिः ॥ ९ ॥

॥ ॐ नोपमर्देनातः ॐ ॥ १० ॥

अतस्तस्य ये विशेषगुणास्तेषामनुपमर्देनैव साम्यम् ।

'देशतः कालतश्चैव समा प्रकृतिरीश्वरे ।
उभयोरप्यबद्धत्वं तदबन्धः परात्मनः ।
स्वत एव परेशस्य सा चोपास्ते सदा हरिम् ॥

प्रकृतेः प्राकृतस्यापि ये गुणास्ते तु विष्णुना ।
नियता नैव केनापि नियता हि हरेर्गुणाः' ।।
इति भविष्यत्पर्वणि ।। १० ।।

।। ॐ अस्यैव चोपपत्तेरूष्मा ॐ ।। ११ ।।

'द्विधा हीदमवदृश्यते ऊष्मावदनूष्मावच्च । तत्रोष्मावत्परं ब्रह्म यन्न जिघ्रन्ति न पश्यन्ति न शृण्वन्ति न विजानन्ति । अथानूष्मावत् प्रकृतिश्च प्राकृतं च यन्न जिघ्रन्ति जिघ्रन्ति च यन्न पश्यन्ति पश्यन्ति च यन्न शृण्वन्ति शृण्वन्ति च यन्न जानन्ति जानन्ति च' ।। इति सौपर्णश्रुतेः किञ्चित्साम्योपपत्तेः ।।११।।

।। ॐ प्रतिषेधादिति चेन्न शारीरात् ॐ ।। १२ ।।

'असमो वा एष परो न हि कश्चिदेवं दृश्यते सर्वे ह्येतेऽणवो जायन्ते च म्रियन्ते च छिद्रा ह्येते भवन्ति । अथ परो न जायते न म्रियते पूर्णश्चैष भवति' ।। इति चतुर्वेदशिखायां साम्य-प्रतिषेधान्नेति चेन्न । शारीराद्धि साम्यं प्रतिषिध्यते ।। १२ ।।

कुतः ?—

।। ॐ स्पष्टो ह्येकेषाम् ॐ ।। १३ ।।

'अथातः समाश्चासमाश्चाभिधीयन्ते समासमाश्चाथ समानि ब्रह्मणो रूपाणि यैरुत्पत्तिः स्थितिर्लयो नियतिरायतिश्चैकं ह्येवैतद् भवत्यथासमाः ब्रह्मेन्द्रो रुद्रः प्रजापतिर्बृहस्पतिर्ये के च देवा

गन्धर्वा मनुष्याः पितरोऽसुरा यत्किञ्चेदं चरमचरं चाथ समाऽसमा प्रकृतिर्वाव समाऽसमा सैषा हि नित्याऽजरा तद्वशा च' ।। इति स्पष्टो हि माध्यन्दिनायनानां समादिवादः ।। १३ ।।

**।। ॐ स्मर्यते च ॐ ।। १४ ।।**

'मत्स्यकूर्मवराहाद्याः समा विष्णोरभेदतः ।
ब्रह्माद्यास्त्वसमाः प्रोक्ताः प्रकृतिश्च समासमा' ।।
इति वाराहे ।। १४ ।।

।। इति समनाधिकरणम् ।। ६ ।।

**परा(लया)धिकरणम् - ७**

**।। ॐ तानि परे तथा ह्याह ॐ ।। १५ ।।**

प्राणद्वारेण सर्वाणि दैवतानि परमात्मनि विलीयन्ते । 'सर्वे देवाः प्राणमाविश्य देवे मुक्ता लयं परमे यान्त्यचिन्त्ये' । इति कौषारवश्रुतिः ।। १५ ।।

।। इति परा(लया)धिकरणम् ।। ७ ।।

**अविभागाधिकरणम् - ८**

**।। ॐ अविभागो वचनात् ॐ ।। १६ ।।**

'एते देवा एतमात्मानमनुविश्य सत्याः सत्यकामाः सत्यसङ्कल्पा यथानिकाममन्तर्बहिः परिचरन्ति' इति गौपवनश्रुतिः । तत्परमेश्वरकामाद्यविभागेनैव तेषां सत्यकामत्वम् । 'कामेन मे

कामः आगात् हृदयात् हृदयं मृत्योः' ।। (तै.आ.३-१५-४) इति वचनात् ।

'मुक्तानां सत्यकामत्वं सामर्थ्यं च परस्य तु ।
कामानुकूलकामत्वं नान्यत्तेषां विधीयत' ।।
इति ब्राह्मे ।। १६ ।।

।। इति अविभागाधिकरणम् ।। ८ ।।

**हृदयाग्रज्वलना(तदोकोऽ)धिकरणम् - ९**

**।। ॐ तदोकोऽग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात् तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया ॐ ।। १७ ।।**

उत्क्रान्तिकाले हृदयस्याग्रे ज्वलनं भवति । 'तस्य हैतस्य हृदयस्याग्रं प्रद्योतते' । (बृ.उ.६-४-२) इति श्रुतेः । तत्प्रकाशितद्वारो निष्क्रामति । विद्यासामर्थ्यात् ।

'यं यं वाऽपि स्मरन् भावं त्यजत्यन्ते कलेवरम् ।
तं तमेवैति कौन्तेय सदा तद्भावभावितः' ।। (गीता.८-६)

इति स्मृतेर्विद्याशेषगत्यनुस्मरणयोगाच्च ।

'आचार्यस्तु ते गतिं वक्ता' । (छा.उ.४-१४-१) इति हि लिङ्गम् ।

'हृदिस्थेनैव हरिणा तस्यैवानुग्रहेण तु ।
उत्क्रान्तिर्ब्रह्मरन्ध्रेण तमेवोपासतो भवेत्' ।। इति चाध्यात्मे ।

'शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिःसृतैका ।
तयोर्ध्वमायन्नमृतत्वमेति विष्वङन्या उत्क्रमणे भवन्ति' ।।
(काठ.उ.२-३-१६) इति च ।। १७ ।।

**।। ॐ रश्म्यनुसारी ॐ ।। १८ ।।**

निष्क्रामति । 'सहस्रं वा आदित्यस्य रश्मय आसु नाडीष्वाततास्तत्र श्वेतः सुषुम्नो ब्रह्मयानः सुषुम्नायामाततस्तत्प्रकाशेनैष निर्गच्छति' । इति पौत्रायणश्रुतिः ।। १८ ।।

**।। ॐ निशि नेति चेन्न सम्बन्धात् ॐ ।। १९ ।।**

रश्म्यभावान्निशि ज्ञानिन उत्क्रमणं न युक्तमिति चेन्न । सर्वदा सम्बन्धाद् रश्मीनाम् ।। १९ ।।

कियत्कालम् ?—

**।। ॐ यावद्देहभावित्वाद्दर्शयति च ॐ ।। २० ।।**

यावद् देहो विद्यते तावद् रश्मिसम्बन्धोऽस्त्येव । 'संसृष्टा वा एते रश्मयश्च नाड्यश्च नैषां वियोगो यावदिदं शरीरमत एतैः पश्यत्येतैरुत्क्रामत्येतैः प्रवर्तते' ।। इति माध्यन्दिनायनश्रुतिः ।। २० ।।

**।। ॐ अतश्चायनेऽपि हि दक्षिणे ॐ ।। २१ ।।**

'दक्षिणे मरणाद् याति स्वर्गं ब्रह्मोत्तरायणे' ।

इत्युक्तेऽपि ज्ञानिनो दक्षिणायनोत्क्रान्तिर्युज्यते ।

'शतं पञ्चैव सूर्यस्य दक्षिणायनरश्मयः ।
तावन्त एव निर्दिष्टा उत्तरायणरश्मयः ॥
ते सर्वे देहसम्बद्धाः सर्वदा सर्वदेहिनाम् ।
महर्लोकादिगन्तार उत्तरायणरश्मिभिः ।
निर्गच्छन्तीतरैश्चापि यैरेष्टव्येतरा गतिः ॥
उत्तरं दक्षिणमिति त एव तु निगद्यते ।
न तु कालविशेषोऽस्ति ज्ञानिनां नियमात्फलम् ॥
ददाति कालेऽनुगुणे फलं किञ्चिद्विशिष्यते ।
अत्युत्तमानां केषाञ्चिन्न विशेषोऽस्ति कालतः ॥'
इति नारायणाध्यात्मे ॥ २१ ॥

॥ इति हृदयाग्रज्वलना(तदोको)धिकरणम् ॥ ९ ॥

**योग्यधिकरणम् (प्रतिस्मरणाधिकरणम्) - १०**

**॥ ॐ योगिनः प्रति स्मर्येते स्मार्ते चैते ॐ ॥ २२ ॥**

न केवलं कालादिकृते ब्रह्मचन्द्रगती स्मर्येते । किन्तु ज्ञान-योगिनः कर्मयोगिनश्च ।

'अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् ।
तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः ॥
धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम् ।

तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्तते' ।।
(गीता.८-२४-२५)

इत्यत्र 'योगी' इति विशेषणात् स्मरणनिमित्ते चैते गती ।

'गत्यनुस्मरणाद्ब्रह्म चन्द्रं वा गच्छति ध्रुवम् ।
अननुस्मरतः काले स्मरणं प्राप्य वै गतिः' ।।
इति अध्यात्मे ।। २२ ।।

।। इति योग्यधिकरणम् ।। १० ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते ब्रह्मसूत्रभाष्ये चतुर्थाध्यायस्य द्वितीयः पादः ।।

## चतुर्थाध्यायस्य तृतीयः पादः

### अर्चिराद्यधिकरणम् - १

मार्गो गम्यं चास्मिन् पादे उच्यते–

**।। ॐ अर्चिरादिना तत्प्रथितेः ॐ ।। १ ।।**

'तेऽर्चिषमभिसम्भवन्त्यर्चिषोऽहरह्न आपूर्यमाणपक्षम्' । (छां.उ.५-१०-१) इत्यर्चिषः प्राथम्यं श्रूयते । 'यदा ह वै पुरुषोऽस्माल्लोकात् प्रैति स वायुमागच्छति' (बृ.उ.७-१०-१) इति वायोः । तत्रार्चिषः प्राप्तिरेव प्रथमा ।

'द्वावेव मार्गौ प्रथितावर्चिरादिर्विपश्चिताम् ।
धूमादिः कर्मिणां चैव सर्ववेदविनिर्णयात् ।।

अग्निर्ज्योतिरिति द्वेधैवार्चिषः सम्प्रतिष्ठितिः ।
अग्निं गत्वा ज्योतिरेति प्रथमं ब्रह्म संव्रजन् ।। इति ।।
एकस्मिंस्तु पुरे संस्थो द्विरूपोऽग्नेः सुतो महान्' ।
इति ब्रह्मतर्के ।। १ ।।

।। इति अर्चिराद्यधिकरणम् ।। १ ।।

## वायुशब्दाधिकरणम् - २

**।। ॐ वायुशब्दादविशेषविशेषाभ्याम् ॐ ।। २ ।।**

अर्चिषो वायुं गच्छति । 'स वायुमागच्छति' । (बृ.उ.७-१०-१) इति सामान्यवचनात् ।

'स इतो गतो द्वितीयां गतिं वायुमागच्छति वायोरहरह्न आपूर्यमाणपक्षम्' । इति विशेषवचनाच्च ।। २ ।।

।। इति वायुशब्दाधिकरणम् ।। २ ।।

## तटिदधिकरणम् - ३

**।। ॐ तटितोऽधि वरुणस्सम्बन्धात् ॐ ।। ३ ।।**

'मासेभ्यः संवत्सरं संवत्सराद् वरुणलोकं वरुणलोकात् प्रजापतिलोकम्' । इति कौण्डिन्यश्रुतिः । 'संवत्सरात् तटितमागच्छति तटितः प्रजापतिलोकम्' ।। इति च गौपवनश्रुतिः ।

'तत्र तटितो वरुणं गच्छति । तटिता ह्यूह्यते वरुणलोकस्तटिदुपरि मुक्तामयो राजते तत्रासौ वरुणो राजा सत्यानृते

विविश्चति' ।। इत्युपरिसम्बद्धत्वश्रुतेः ।। ३ ।।

।। इति तटिदधिकरणम् ।। ३ ।।

**आतिवाहिकाधिकरणम् - ४**

**।। ॐ आतिवाहिकस्तल्लिङ्गात् ।। ४ ।।**

पूर्वोक्तस्त्वातिवाहिको वायुः । पूर्वगमनलिङ्गात् ।। ४ ।।

कुतः?–

**।। ॐ उभयव्यामोहात् तत्सिद्धेः ॐ ।। ५ ।।**

'स वायुमागच्छति' । (बृ.उ.७-१०-१) इति प्रथममुच्यते । 'उत्क्रान्तो विद्वान् परमभिगच्छन् विद्युतमेवान्तत उपगच्छति द्यौर्वाव विद्युत् तत्पतिं वायुमुपगम्य तेनैव ब्रह्म गच्छति' । इत्यन्तेऽपि वायुगमनश्रुतेः । पूर्वोक्त आतिवाहिकः परो वेति व्यामोहे उत्तरे दिवस्पतिरिति विशेषणात् पूर्वत्राऽतिवाहिकस्यैव सिद्धेः ।

ब्रह्मतर्के च–

'उत्क्रान्तस्तु शरीरात् स्वाद् गच्छत्यर्चिषमेव तु ।
ततो हि वायोः पुत्रं च योऽसौ नाम्नाऽऽतिवाहिकः ।।
ततोऽहः पूर्वपक्षं चाप्युदक् संवत्सरं तथा ।
तटितं वरुणं चैव प्रजापं सूर्यमेव च ।।
सोमं वैश्वानरं चेन्द्रं ध्रुवं देवीं दिवं तथा ।
ततो वायुं परं प्राप्य तेनैति पुरुषोत्तमम्' ।। इति ।। ५ ।।

।। इति आतिवाहिकाधिकरणम् ।। ४ ।।

### वैद्युताधिकरणम् - ५

**।। ॐ वैद्युतेनैव ततस्तच्छ्रुतेः ॐ ।। ६ ।।**

प्रकारान्तरेण तत्र तत्रोच्यमानत्वाद् वायोरपि परतो ब्रह्मणोऽर्वागन्तव्योऽस्तीति नाशङ्कनीयम् । विद्युत्पतिना वायुनैव 'स एनान् ब्रह्म गमयति' (छां.उ.४-१५-६) इति ब्रह्मगमनश्रुतेः ।

'विद्युत्पतिर्वायुरेव नयेद् ब्रह्म न चापरः ।
कुतोऽन्यस्य भवेच्छक्तिस्तमृते प्राणनायकम्' ।।
इति बृहत्तन्त्रे ।। ६ ।।

।। इति वैद्युताधिकरणम् ।। ५ ।।

### कार्याधिकरणम् - ६

**।। ॐ कार्यं बादरिरस्य गत्युपपत्तेः ॐ ।। ७ ।।**

'स एनान् ब्रह्म गमयति' (छां.उ.५-१०-२) इति कार्यं ब्रह्म गमयतीति बादरिर्मन्यते ।

'ऋते देवान्परं ब्रह्म कः पुमान् प्राप्नुयात् क्वचित् ।
यद्यपि ब्रह्मदृष्टिः स्याद् ब्रह्मलोकमवाप्नुयात्' ।।
इत्यध्यात्मवचनात्तस्यैव गत्युपपत्तेः ।। ७ ।।

**।। ॐ विशेषितत्वाच्च ॐ ।। ८ ।।**

'यदि ह वाव परमभिपश्यति प्राप्नोति ब्रह्माणं चतुर्मुखं प्राप्नोति ब्रह्माणं चतुर्मुखम्' । इति कौषारवश्रुतौ ।। ८ ।।

**।। ॐ सामीप्यात्तु तद्व्यपदेशः ॐ ।। ९ ।।**

'ब्रह्मविदाप्नोति परम्' (तै.उ.२-१) इति तद्व्यपदेशस्तु समीपत एव परमपि प्राप्नोतीत्येतदर्थ एव ।। ९ ।।

कदा?–

**।। ॐ कार्यात्यये तदध्यक्षेण सहातः परमभिधानात् ॐ ।। १० ।।**

'ते ह ब्रह्माणमभिसम्पद्य यदैतद् वीलीयतेऽथ सह ब्रह्मणा परमभिगच्छन्ति' । इति सौपर्णश्रुतेर्महाप्रलये तदध्यक्षेण ब्रह्मणा सह गच्छन्ति ।। १० ।।

**।। ॐ स्मृतेश्च ॐ ।। ११ ।।**

'ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसञ्चरे ।
परस्यान्ते परात्मानः प्रविशन्ति परं पदम्' ।।
इति ।। ११ ।।

**।। ॐ परं जैमिनिर्मुख्यत्वात् ॐ ।। १२ ।।**

ब्रह्मशब्दस्य तत्रैव मुख्यत्वात् परमेव ब्रह्म गमयतीति जैमिनिर्मन्यते ।। १२ ।।

**।। ॐ दर्शनाच्च ॐ ।। १३ ।।**

दृष्टत्वाच्च परब्रह्मणः ।। १३ ।।

**।। ॐ न च कार्ये प्रतिपत्त्यभिसन्धिः ॐ ।। १४ ।।**

न हि कार्ये प्रतिपत्तिः प्राप्नुवानीत्यभिसन्धिश्च ।

'यदुपास्ते पुमान् जीवन् यत् प्राप्तुमभिवाञ्छति ।
यच्च पश्यति तृप्तः सन् तत् प्राप्नोति मृतेरनु' ।।

इति पाद्मे ।। १४ ।।

**।। ॐ अप्रतीकालम्बनान्नयतीति बादरायण उभयथा च दोषात् तत्क्रतुश्च ॐ ।। १५ ।।**

'प्रतीकं देह उद्दिष्टो येषां तत्रैव दर्शनम् ।
न तु व्याप्ततया क्वापि प्रतीकालम्बनास्तु ते ।।
अप्रतीका देवतास्तु ऋषीणां शतमेव च ।
राज्ञां च शतमुद्दिष्टं गन्धर्वा(दि)णां शतं तथा ।।
एतेऽधिकारिणो व्याप्तदर्शिनोऽन्ये न तु क्वचित् ।
अयोग्यदर्शने यत्नाद् भ्रंशः पूर्वस्य चापि तु ।।
अप्रतीकाश्रया ये हि ते यान्ति परमेव तु ।
स्वदेहे ब्रह्मदृष्ट्यैव गच्छेद् ब्रह्मसलोकताम् ।
ब्रह्मणा सह सम्प्राप्ते संहारे परमं पदम्' ।।

इति गारुडवचनात् ।

उभयत्रोक्तदोषाच्चाप्रतीकालम्बनान्परं नयति ।

'स यथाकामो भवति तत्क्रतुर्भवति यत्क्रतुर्भवति तत्कर्म कुरुते यत्कर्म कुरुते तदभिसम्पद्यते' । (बृ.उ.६-४-५) इति श्रुतेश्च । अत्र कर्मोपासनमेव । अन्यान् कार्यं नयतीति भगवन्मतम् ।।१५।।

**।। ॐ विशेषं च दर्शयति ॐ ।। १६ ।।**

'अन्तःप्रकाशा बहिःप्रकाशाः सर्वप्रकाशाः । देवा वाव सर्वप्रकाशाः ऋषयोऽन्तःप्रकाशाः मानुषा एव बहिःप्रकाशाः ।' इति चतुर्वेदशिखायाम् ।। १६ ।।

।। इति कार्याधिकरणम् ।। ६ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते ब्रह्मसूत्रभाष्ये चतुर्थाध्यायस्य तृतीयः पादः ।।

* * *

# चतुर्थाध्यायस्य चतुर्थः पादः

**सम्पद्याधिकरणम् - १**

भोगमाहास्मिन् पादे–

**।। ॐ सम्पद्याविहाय स्वेन शब्दात् ॐ ।। १ ।।**

'स य एवंविदेवं मन्वान एवं पश्यन्नात्मानमभिसम्पद्यैतेनात्मना यथाकामं सर्वान् कामाननुभवति' ।। इति सौपर्णश्रुतेः ।

'परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते' ।।
(छां.उ.८-३-४) इति च ।

'एतं सेतुं तीर्त्वाऽन्धस्सन्ननन्धो भवति' । (छां.उ.८-४-२) इति च ।

तत्र तरणं नाम तत्प्राप्तयेऽन्यतरणमेव ।

'इमां घोरामशिवां नदीं तीर्त्वैतं सेतुमाप्य एतेनैव सेतुना मोदते प्रमोदत आनन्दी भवति'। इति मौद्गल्यश्रुतेः ।। १ ।।

।। इति सम्पद्याधिकरणम् ।। १ ।।

**मुक्ताधिकरणम् - २**

**।। ॐ मुक्तः प्रतिज्ञानात् ॐ ।। २ ।।**

मुक्त एव चात्रोच्यते ।

'अहरहरेनमनुप्रविशत्युपसङ्क्रमे च न तत्र मोदते न प्रमोदते न कामाननुभवति बद्धो ह्येष तदा भवत्यथ यदैनं मुक्तोऽनुप्रविशति मोदते च प्रमोदते च कामांश्चैवानुभवति' ।। इति बृहच्छ्रुतौ प्रतिज्ञानात् ।। २ ।।

।। इति मुक्ताधिकरणम् ।।

**आत्माधिकरणम् - ३**

**।। ॐ आत्मा प्रकरणात् ॐ ।। ३ ।।**

परञ्ज्योतिःशब्देन परमात्मैवोच्यते । तत्प्रकरणत्वात् ।

'परञ्ज्योतिः परं ब्रह्म परमात्मादिका गिरः ।
सर्वत्र हरिमेवैकं ब्रूयुर्नान्यं कथञ्चन' ।। इति ब्रह्माण्डे ।।३।।

।। इति आत्माधिकरणम् ।। ३ ।।

### अविभागाधिकरणम् - ४

**।। ॐ अविभागेन दृष्टत्वात् ॐ ।। ४ ।।**

ये भोगाः परमात्मना भुज्यन्ते त एव मुक्तैर्भुज्यन्ते ।

'यानेवाहं शृणोमि यान् पश्यामि यान् जिघ्रामि तानेवैत इदं शरीरं विमुच्यानुभवन्ति' ।। इति दृष्टत्वाच्चतुर्वेदशिखायाम् ।

भविष्यत्पुराणे च–

'मुक्ताः प्राप्य परं विष्णुं तद् भोगान् लेशतः क्वचित् ।
बहिष्ठान् भुञ्जते नित्यं नानन्दादीन् कथञ्चन' ।। इति ।।४।।

।। इति अविभागाधिकरणम् ।। ४ ।।

### ब्राह्माधिकरणम् - ५

**।। ॐ ब्राह्मेण जैमिनिरुपन्यासादिभ्यः ॐ ।। ५ ।।**

सर्वदेहपरित्यागेन मुक्ताः सन्तो ब्राह्मेणैव देहेन भोगान् भुञ्जत इति जैमिनिर्मन्यते ।

'स वा एष ब्रह्मनिष्ठ इदं शरीरं मर्त्यमतिसृज्य ब्रह्माभिसम्पद्य ब्रह्मणा पश्यति ब्रह्मणा शृणोति ब्रह्मणैवेदं सर्वमनुभवति' ।। इति माध्यन्दिनायनश्रुतावुपन्यासात् ।

'आदत्ते हरिहस्तेन हरिदृष्ट्यैव पश्यति ।
गच्छेच्च हरिपादाभ्यां मुक्तस्यैषा स्थितिर्भवेत्' ।।
इति स्मृतेः ।।

'गच्छामि विष्णुपादाभ्यां विष्णुदृष्ट्या च दर्शनम् ।
इत्यादिपूर्वस्मरणान्मुक्तस्यैतद् भविष्यति' ।।
इति बृहत्तन्त्रोक्तयुक्तेश्च ।। ५ ।।

**।। ॐ चितिमात्रेण तदात्मकत्वादित्यौडुलोमिः ॐ ।।६।।**

'चितिमात्रो देहो मुक्तानां पृथग् विद्यते तेन भुञ्जते । सर्वं वा एतदचित्परित्यज्य चिन्मात्र एवैष भवति चिन्मात्र एवावतिष्ठते तामेतां मुक्तिरित्याचक्षते' ।। इत्युद्दालकश्रुतेश्चिदात्मकत्वादित्यौडुलोमिर्मन्यते ।। ६ ।।

**।। ॐ एवमप्युपन्यासात्पूर्वभावादविरोधं बादरायणः ॐ ।। ७ ।।**

'स वा एष एतस्मान्मर्त्याद् विमुक्तश्चिन्मात्रीभवत्यथ तेनैव रूपेणाभिपश्यत्यभिशृणोत्यभिमनुतेऽभिविजानाति तामाहुर्मुक्तिः'।। इति सौपर्णश्रुतौ चिन्मात्रेणाप्युपन्यासाज्जैमिन्युक्तस्य च भावादुभयत्राप्यविरोधं बादरायणो मन्यते । नारायणाध्यात्मे च–

'मर्त्यं देहं परित्यज्य चितिमात्रात्मदेहिनः ।
चितिमात्रेन्द्रियाश्चैव प्रविष्टा विष्णुमव्ययम् ।।
तदङ्गानुगृहीतैश्च स्वाङ्गैरेव प्रवर्तनम् ।
कुर्वन्ति भुञ्जते भोगांस्तदन्तर्बहिरेव वा ।।
यथेष्टं परिवर्तन्ते तस्यैवानुग्रहेरिताः' इति ।। ७ ।।

।। इति ब्राह्माधिकरणम् ।। ५ ।।

### सङ्कल्पाधिकरणम् - ६

**।। ॐ सङ्कल्पादेव च तच्छ्रुतेः ॐ ।। ८ ।।**

न तेषां भोगादिषु प्रयत्नापेक्षा ।

'स यदि पितृलोककामो भवति सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्ति' (छां.उ.८-२-१) इत्यादिश्रुतेः ।। ८ ।।

।। इति सङ्कल्पाधिकरणम् ।। ६ ।।

### अनन्याधिपत्यधिकरणम् - ७

**।। ॐ अत एव चानन्याधिपतिः ॐ ।। ९ ।।**

सत्यसङ्कल्पत्वादेव ।

'परमोऽधिपतिस्तेषां विष्णुरेव न संशयः ।
ब्रह्मादिमानुषान्तानां सर्वेषामविशेषतः ।।
ततः प्राणादिनामान्ताः सर्वेऽपि पतयः क्रमात् ।
आचार्याश्चैव सर्वेऽपि यैर्ज्ञानं सुप्रतिष्ठितम् ।
एतेभ्योऽन्यः पतिर्नैव मुक्तानां नात्र संशयः' ।।
इति वाराहे ।। ९ ।।

।। इति अनन्याधिपत्यधिकरणम् ।। ७ ।।

### अभावाधिकरणम् - ८

**।। ॐ अभावं बादरिराह ह्येवम् ॐ ।। १० ।।**

चिन्मात्रं विनाऽन्यो देहस्तेषां न विद्यत इति बादरिः ।

'अशरीरो वाव तदा भवत्यशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतो याभ्यां ह्येष उन्मथ्यते' । इत्येवं कौण्ठरव्यश्रुतावाह हि ॥ १० ॥

॥ ॐ भावं जैमिनिर्विकल्पाम्नानात् ॐ ॥ ११ ॥

'स वा एष एवंवित्परमभिपश्यत्यभिशृणोति ज्योतिषैव रूपेण चिता वाऽचिता वा नित्येन वाऽनित्येन वाऽथानन्दी ह्येवैष भवति नानानन्दं कश्चिदुपस्पृशति' ॥ इत्यौद्दालकश्रुतौ विकल्पाम्नानादन्यदेहस्यापि भावं जैमिनिर्मन्यते ॥ ११ ॥

॥ ॐ द्वादशाहवदुभयविधं बादरायणोऽतः ॐ ॥ १२ ॥

यथा द्वादशाहः क्रत्वात्मकः सत्रात्मकश्च भवति । एवं मुक्तभोगो बाह्यशरीरकृतश्चिन्मात्रकृतश्च भवति इति बादरायणो मन्यते ॥ १२ ॥

उपपत्तिश्च ॥

॥ ॐ तन्वभावे सन्ध्यवदुपपत्तेः ॐ ॥ १३ ॥

सन्ध्यं स्वप्नः । 'सन्ध्यं तृतीयं स्वप्नस्थानम्' । (बृ.उ.६-३-९) इति श्रुतेः ॥ १३ ॥

॥ ॐ भावे जाग्रद्वत् ॐ ॥ १४ ॥

ब्रह्मवैवर्ते च–

'स्वप्नस्थानां यथा भोगो विना देहेन युज्यते ।
एवं मुक्तावपि भवेद्विना देहेन भोजनम् ॥
स्वेच्छया वा शरीराणि तेजोरूपाणि कानिचित् ।
स्वीकृत्य जागरितवद् भुक्त्वा त्यागः कदाचन' ॥
इति ॥ १४ ॥

॥ ॐ प्रदीपवदावेशस्तथा हि दर्शयति ॐ ॥ १५ ॥

शरीरमनुविश्यापि तत्प्रकाशयन्तः पुण्यानेव भोगाननुभवन्ति न तु दुःखादीन् । यथा प्रदीपो दीपिकादिषु प्रविष्टस्तत्स्थं तैलाद्येव भुङ्क्ते न तु काष्ण्र्यादि । 'तीर्णो हि तदा सर्वान् शोकान् हृदयस्य भवति' । (बृ.उ.६-३-२२) इति हि दर्शयति ॥ १५ ॥

न च स्वर्गे लोके न भयं किञ्चनास्ति' । (कठ.उ.१-१२) इत्यादिना स्वर्गादिस्थस्यैतदिति वाच्यम् । यतः–

॥ ॐ स्वाप्ययसम्पत्त्योरन्यतरापेक्षमाविष्कृतं हि ॐ ॥ १६ ॥

सुप्तौ मोक्षे वा तदुच्यते । 'अत्र पिताऽपिता भवत्यनन्वागतं पुण्येनानन्वागतं पापेन' । (बृ.उ.६-३-२२) इत्याद्याविष्कृतत्वात् ॥ ब्रह्मवैवर्ते च–

'ज्योतिर्मयेषु देहेषु स्वेच्छया विश्वमोक्षिणः ।
भुञ्जते सुसुखान्येव न दुःखादीन् कदाचन ॥

तीर्णा हि सर्वशोकांस्ते पुण्यपापादिवर्जिताः ।
सर्वदोषनिवृत्तास्ते गुणमात्रस्वरूपिणः' ।। इति ।। १६ ।।

।। इति अभावाधिकरणम् ।। ८ ।।

**जगद्व्यापाराधिकरणम् - ९**

**।। ॐ जगद्व्यापारवर्जम् ॐ ।। १७ ।।**

'सर्वान्कामानाप्त्वाऽमृतः समभवत्' । (ऐ.आ.२-५-४) इत्युच्यते । तत्र सृष्ट्यादिभ्योऽन्यान् व्यापारानाप्नोति ।। १७ ।।

कुतः?–

**।। ॐ प्रकरणादसन्निहितत्वाच्च ॐ ।। १८ ।।**

जीवप्रकरणत्वाज्जीवानां तादृक्सामर्थ्यविदूरत्वाच्च । वाराहे च–

'स्वाधिकानन्दसम्प्राप्तौ सृष्ट्यादिव्यापृतिष्वपि ।
मुक्तानां नैव कामः स्यादन्यान् कामांस्तु भुञ्जते ।।
तद्योग्यता नैव तेषां कदाचित्क्वापि विद्यते ।
न चायोग्यं विमुक्तोऽपि प्राप्नुयान्न च कामयेत्' ।।
इति ।। १८ ।।

**।। ॐ प्रत्यक्षोपदेशादिति चेन्नाऽधिकारिकमण्डलस्थोक्तेः ॐ ।। १९ ।।**

'ता यो वेद, स वेद ब्रह्म, सर्वेऽस्मै देवा बलिमावहन्ति' । (तै.उ.१-५) इति प्रत्यक्षोपदेशाज्जगदैश्वर्यमप्यस्तीति चेन्न । आधिकारिकमण्डलाधिपतिर्ब्रह्मा हि तत्रोच्यते ।

गारुडे च–

'आत्मेत्येव परं देवमुपास्य हरिमव्ययम् ।
केचिदत्रैव मुच्यन्ते नोत्क्रामन्ति कदाचन ।।
अत्रैव च स्थितिस्तेषामन्तरिक्षे तु केचन ।
केचित्स्वर्गे महर्लोके जने तपसि चापरे ।।
केचित्सत्ये महाज्ञाना गच्छन्ति क्षीरसागरम् ।
तत्रापि क्रमयोगेन ज्ञानाधिक्यात् समीपगाः ।।
सालोक्यं च सरूपत्वं सामीप्यं योगमेव च ।
इमामारभ्य सर्वत्र यावत्सु क्षीरसागरे ।।
पुरुषोऽनन्तशयनः श्रीमन्नारायणाभिधः ।
मानुषा वर्णभेदेन तथैवाऽऽश्रमभेदतः ।।
क्षितिपा मनुष्यगन्धर्वा देवाश्च पितरश्चिराः ।
आजानजाः कर्मजाश्च तात्त्विकाश्च शचीपतिः ।।
रुद्रो ब्रह्मेति क्रमशस्तेषु चैवोत्तरोत्तराः ।
नित्यानन्दे च भोगे च ज्ञानैश्वर्यगुणेषु च ।
सर्वे शतगुणोद्रिक्ताः पूर्वस्मादुत्तरोत्तरम् ।।
पूज्यन्ते चावरैस्ते तु सर्वपूज्यश्चतुर्मुखः ।
स्वजगद्व्यापृतिस्तेषां पूर्ववत् समुदीरिता ।।
सयुजः परमात्मानं प्रविश्य च बहिर्गताः ।
चिद्रूपान् प्राकृतांश्चापि विना भोगांस्तु कांश्चन ।
भुञ्जते मुक्तिरेवं ते विस्पष्टं समुदाहृता' ।। इति ।। १९ ।।

**।। ॐ विकारावर्ति च तथाहि दर्शयति ॐ ।। २० ।।**

विकारावर्तिव्यापारो मुक्तानां न विद्यते ।

'इमं मानवमावर्तं नाऽवर्तन्ते' (छां.उ.४-१५-६) इति श्रुतिः ।

वाराहे च–

'स्वाधिकारेण वर्तन्ते देवा मुक्तावपि स्फुटम् ।
बलिं हरन्ति मुक्ताय विरिञ्चाय तु पूर्ववत् ।।
सब्रह्मकास्तु ते देवा विष्णवे च विशेषतः ।
न विकाराधिकारस्तु मुक्तानामन्य एव तु ।
विकाराधिकृता ज्ञेया ये नियुक्तास्तु विष्णुना' ।।
इति ।। २० ।।

।। इति जगद्व्यापाराधिकरणम् (सर्वकामाधिकरणम्) ।। ९ ।।

**स्थित्यधिकरणम् - १०**

**।। ॐ स्थितिमाह दर्शयतश्चैवं प्रत्यक्षानुमाने ॐ ।। २१ ।।**

'एतत् साम गायन्नास्ते' (तै.उ.३-१०) इत्युच्यते । तत्रानन्दादीनां वृद्धिर्ह्रासश्च न विद्यते । किन्त्वेकप्रकारेणैव सर्वदा स्थितिः । 'स एष एतस्मिन् ब्रह्मणि सम्पन्नो न जायते न म्रियते न हीयते न वर्धते स्थित एव सर्वदा भवति दर्शन्नेव ब्रह्म दर्शन्नेवाऽऽत्मानं तस्यैवं दर्शतो नाऽपत्तिर्न विपत्तिः' ।। इत्याह जाबालश्रुतौ ।

'यत्र गत्वा न म्रियते यत्र गत्वा न जायते ।
न हीयते यत्र गत्वा यत्र गत्वा न वर्धते' ॥

इति मोक्षधर्मे ॥

विद्वत्प्रत्यक्षात् कारणाभावलिङ्गाच्च ।

ब्रह्मवैवर्ते च–

'न ह्रासो न च वृद्धिर्वा मुक्तानां विद्यते क्वचित् ।
विद्वत्प्रत्यक्षसिद्धत्वात् कारणाभावतोऽनुमा ॥
हरेरुपासना चात्र सदैव सुखरूपिणी ।
न तु साधनभूता सा सिद्धिरेवात्र सा यतः' ॥

इति ॥ २१ ॥

### ॥ ॐ भोगमात्रसाम्यलिङ्गाच्च ॐ ॥ २२ ॥

न च भोगविशेषादिविरोधः । 'एतमानन्दमयमात्मानमनुविश्य न जायते न म्रियते न ह्रसते न वर्धते यथाकामं चरति यथाकामं पिबति यथाकामं रमते यथाकाममुपरमते' ॥ (तै.उ.२-८) इति भोगमात्रसाम्यलिङ्गात् ।

'अवृद्धिह्रासरूपत्वं मुक्तानां प्रायिकं भवेत् ।
कादाचित्कविशेषस्तु नैव तेषां निषिध्यते' ॥ इति कौर्मे ।

'प्रवाहतस्तु वृद्धिर्वा ह्रासो वा नैव कुत्रचित् ।
नाप्रियं किञ्चिदपि तु मुक्तानां विद्यते क्वचित् ॥
कुत एव तु दुःखं स्यात् सुखमेव सदोदितम् ।
भोगानां तु विशेषे तु वैचित्र्यं लभ्यते क्वचित्' ॥

इति नारायणतन्त्रे ॥ २२ ॥

॥ इति स्थित्यधिकरणम् ॥ १० ॥

**अनावृत्त्यधिकरणम् - ११**

॥ ॐ अनावृत्तिश्शब्दादनावृत्तिश्शब्दात् ॐ ॥ २३ ॥

'न च पुनरावर्तते न च पुनरावर्तते,' । (छां.उ.८-१५-१) 'सर्वान् कामानाप्त्वाऽमृतः समभवत् समभवत्' (ऐ.आ.२-५-१५) इत्यादिश्रुतिभ्यः ॥ २३ ॥

॥ इति अनावृत्त्यधिकरणम् ॥ ११ ॥

ज्ञानानन्दादिभिः सर्वैर्गुणैः पूर्णाय विष्णवे ।
नमोऽस्तु गुरवे नित्यं सर्वथाऽतिप्रियाय मे ॥
यस्य त्रीण्युदितानि वेदवचने रूपाणि दिव्यान्यलं
बट् तद्दर्शतमित्थमेव निहितं देवस्य भर्गो महत् ।
वायो रामवचोनयं प्रथमकं पृक्षो द्वितीयं वपु-
र्मध्वो यत्तु तृतीयकं कृतमिदं भाष्यं हरौ तेन हि ॥
नित्यानन्दो हरिः पूर्णो नित्यदा प्रीयतां मम ।
नमस्तस्मै नमस्तस्मै नमस्तस्मै च विष्णवे ॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीमद्ब्रह्मसूत्रभाष्ये चतुर्थाध्यायस्य चतुर्थः पादः ॥ ४ ॥
चतुर्थाध्यायः समाप्तः
॥ श्रीमद्ब्रह्मसूत्रभाष्यं सम्पूर्णम् ॥

।। श्रीः ।।

श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितम्

# अणुभाष्यम्

## प्रथमोऽध्यायः

।। श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मक-
श्रीलक्ष्मीहयग्रीवाय नमः ।।

ॐ नारायणं गुणैस्सर्वैरुदीर्णं दोषवर्जितम् ।
ज्ञेयं गम्यं गुरूंश्चापि नत्वा सूत्रार्थ उच्यते ।। १ ।।

विष्णुरेव विजिज्ञास्यः सर्वकर्ताऽऽगमोदितः ।
समन्वयादीक्षतेश्च पूर्णानन्दोऽन्तरः खवत् ।। २ ।।

प्रणेता ज्योतिरित्याद्यैः प्रसिद्धैरन्यवस्तुषु ।
उच्यते विष्णुरेवैकः सर्वैः सर्वगुणत्वतः ।। ३ ।।

सर्वगोऽत्ता नियन्ता च दृश्यत्वाद्युज्झितः सदा ।
विश्वजीवान्तरत्वाद्यैर्लिङ्गैः सर्वैर्युतः स हि ।। ४ ।।

सर्वाश्रयः पूर्णगुणः सोऽक्षरः सन् हृदब्जगः ।
सूर्यादिभासकः प्राणप्रेरको दैवतैरपि ।। ५ ।।

ज्ञेयो न वेदैः शूद्राद्यैः कम्पकोऽन्यश्च जीवतः ।
पतित्वादिगुणैर्युक्तस्तदन्यत्र च वाचकैः ।। ६ ।।

मुख्यतः सर्वशब्दैश्च वाच्य एको जनार्दनः ।
अव्यक्तः कर्मवाक्यैश्च वाच्य एकोऽमितात्मकः ।। ७ ।।

अवान्तरं कारणं च प्रकृतिः शून्यमेव च ।
इत्याद्यन्यत्रनियतैरपि मुख्यतयोदितः ।।
शब्दैरतोऽनन्तगुणो यच्छब्दा योगवृत्तयः ।। ८ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
अणुभाष्ये प्रथमोऽध्यायः ।। १ ।।

## द्वितीयोऽध्यायः

श्रौतस्मृतिविरुद्धत्वात् स्मृतयो न गुणान् हरेः ।
निषेद्धुं शक्नुयुर्वेदा नित्यत्वान्मानमुत्तमम् ।। १ ।।

देवतावचनादापो वदन्तीत्यादिकं वचः ।
नायुक्तवाद्यसन्नैव कारणं दृश्यते क्वचित् ।। २ ।।

असज्जीवप्रधानादिशब्दा ब्रह्मैव नापरम् ।
वदन्ति कारणत्वेन क्वापि पूर्णगुणो हरिः ।। ३ ।।

स्वातन्त्र्यात्सर्वकर्तृत्वान्नायुक्तं तद्वदेच्छ्रुतिः ।
भ्रान्तिमूलतया सर्वसमयानामयुक्तितः ।। ४ ।।

न तद्विरोधाद्वचनं वैदिकं शङ्क्यतां व्रजेत् ।
आकाशादिसमस्तं च तज्जं तेनैव लीयते ।। ५ ।।

सोऽनुत्पत्तिलयः कर्ता जीवस्तद्वशगस्सदा ।
तदाभासो हरिस्सर्वरूपेष्वपि समस्सदा ।। ६ ।।

मुख्यप्राणश्चेन्द्रियाणि देहश्चैव तदुद्भवः ।
मुख्यप्राणवशे सर्वं स विष्णोर्वशगः सदा ॥ ७ ॥

सर्वदोषोज्झितस्तस्माद् भगवान् पुरुषोत्तमः ।
उक्ता गुणाश्चाविरुद्धास्तस्य वेदेन सर्वशः ॥ ८ ॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
अणुभाष्ये द्वितीयोऽध्यायः ॥ २ ॥

## तृतीयोऽध्यायः

शुभेन कर्मणा स्वर्गं निरयं च विकर्मणा ।
मिथ्याज्ञानेन च तमो ज्ञानेनैव परं पदम् ॥ १ ॥

याति तस्माद्विरक्तः सन् ज्ञानमेव समाश्रयेत्
सर्वावस्थाप्रेरकश्च सर्वरूपेष्वभेदवान् ॥ २ ॥

सर्वदेशेषु कालेषु स एकः परमेश्वरः ।
तद्भक्तितारतम्येन तारतम्यं विमुक्तिगम् ॥ ३ ॥

सच्चिदानन्द आत्मेति मानुषैस्तु सुरेश्वरैः ।
यथाक्रमं बहुगुणैर्ब्रह्मणा त्वखिलैर्गुणैः ॥ ४ ॥

उपास्यः सर्ववेदैश्च सर्वैरपि यथाबलम् ।
ज्ञेयो विष्णुर्विशेषस्तु ज्ञाने स्यादुत्तरोत्तरम् ॥ ५ ॥

सर्वेऽपि पुरुषार्थाः स्युर्ज्ञानादेव न संशयः ।
न लिप्यते ज्ञानवांश्च सर्वदोषैरपि क्वचित् ॥ ६ ॥

गुणदोषौ सुखस्यापि वृद्धिह्रासौ विमुक्तिगौ ।
नृणां सुराणां मुक्तौ तु सुखं क्लृप्तं यथाक्रमम् ॥ ७ ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
अणुभाष्ये तृतीयोऽध्यायः ॥ ३ ॥

## चतुर्थोऽध्यायः

विष्णुर्ब्रह्म तथा दातेत्येवं नित्यमुपासनम् ।
कार्यमापद्यपि ब्रह्म तेन यात्यपरोक्षताम् ॥ १ ॥

प्रारब्धकर्मणोऽन्यस्य ज्ञानादेव परिक्षयः ।
अनिष्टस्योभयस्यापि सर्वस्यान्यस्य भोगतः ॥ २ ॥

उत्तरेषूत्तरेष्वेवं यावद्वायुं विमुक्तिगाः ।
प्रविश्य भुञ्जते भोगांस्तदन्तर्बहिरेव वा ॥ ३ ॥

वायुर्विष्णुं प्रविश्यैव भोगश्चैवोत्तरोत्तरम् ।
उत्क्रम्य मानुषा मुक्तिं यान्ति देहक्षयात्सुराः ॥ ४ ॥

अर्चिरादिपथा वायुं प्राप्य तेन जनार्दनम् ।
यान्त्युत्तमा नरोच्चाद्या ब्रह्मलोकात्सहामुना ॥ ५ ॥

यथासङ्कल्पभोगाश्च चिदानन्दशरीरिणः ।
जगत्सृष्ट्यादिविषये महासामर्थ्यमप्यृते ॥ ६ ॥

यथेष्टशक्तिमन्तश्च विना स्वाभाविकोत्तमान् ।
अनन्यवशगाश्चैव वृद्धिह्रासविवर्जिताः ॥

दुःखादिरहिता नित्यं मोदन्तेऽविरतं सुखम्　　।। ७ ।।

पूर्णप्रज्ञेन मुनिना सर्वशास्त्रार्थसङ्ग्रहः ।
कृतोऽयं प्रीयतां तेन परमात्मा रमापतिः　　।। ८ ।।

नमो नमोऽशेषदोषदूरपूर्णगुणात्मने ।
विरिञ्चिशर्वपूर्वेड्यवन्द्याय श्रीवराय ते　　।। ९ ।।

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
अणुभाष्ये चतुर्थोऽध्यायः ।। ४ ।।

## ।। अणुभाष्यं सम्पूर्णम् ।।

* * *

श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितम्

# ब्रह्मसूत्रानुव्याख्यानम्

।। श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मक-
श्रीलक्ष्मीहयग्रीवाय नमः ।।

## प्रथमाध्यायस्य प्रथमः पादः

नारायणं निखिलपूर्णगुणैकदेहं
निर्दोषमाप्यतममप्यखिलैः सुवाक्यैः ।
अस्योद्भवादिदमशेषविशेषतोऽपि
वन्द्यं सदा प्रियतमं मम सन्नमामि ।। १ ।।

तमेव शास्त्रप्रभवं प्रणम्य
जगद्गुरूणां गुरुमञ्जसैव ।
विशेषतो मे परमाख्यविद्या-
व्याख्यां करोम्यन्वपि चाहमेव ।। २ ।।

**[ब्रह्मसूत्राणां परविद्यात्वं प्रमाणतमत्वं च]**

प्रादुर्भूतो हरिर्व्यासो विरिञ्चभवपूर्वकैः ।
अर्थितः परविद्याख्यं चक्रे शास्त्रमनुत्तमम् ।। ३ ।।

गुरुर्गुरूणां प्रभवः शास्त्राणां बादरायणः ।
यतस्तदुदितं मानमजादिभ्यस्तदर्थतः ।। ४ ।।

वक्तृश्रोतृप्रसक्तीनां यदाप्तिरनुकूलता ।
आप्तवाक्यतया तेन श्रुतिमूलतया तथा ।। ५ ।।

[ ] एतच्चिह्नमध्यगतानि ग्रन्थसम्पादकवाक्यानि

युक्तिमूलतया चैव प्रामाण्यं त्रिविधं महत् ।
दृश्यते ब्रह्मसूत्राणामेकधाऽन्यत्र सर्वशः   ॥ ६ ॥

अतो नैतादृशं किञ्चित्प्रमाणतममिष्यते ।
स्वयङ्कृताऽपि तद्व्याख्या क्रियते स्पष्टतार्थतः   ॥ ७ ॥

[ॐकारस्य सूत्रावयवत्वम्]

तत्र ताराथमूलत्वं सर्वशास्त्रस्य चेष्यते ।
सर्वत्रानुगतत्वेन पृथगोङ्क्रियतेऽखिलैः   ॥ ८ ॥

**जिज्ञासाधिकरणम् - १**

**॥ ॐ अथातो ब्रह्मजिज्ञासा ॐ ॥ १-१-१ ॥**

[गुणपूर्णत्वं ॐकारार्थः]

ओतत्ववाची ह्योङ्कारो वक्त्यसौ तद्गुणोतताम् ।

[गुणपूर्णस्य जिज्ञास्यत्वम्]

स एव ब्रह्मशब्दार्थो नारायणपदोदितः   ॥ ९ ॥

स एव भर्गशब्दार्थो व्याहृतीनां च भूमतः ।
भावनाच्चैव सुत्वाच्च सोऽयं पुरुष इत्यपि   ॥ १० ॥

स एव सर्ववेदार्थो जिज्ञास्योऽयं विधीयते ।

[विष्णुप्रसादस्य मोक्षसाधनत्वम्]

'ज्ञानी प्रियतमोऽतो मे' 'तं विद्वानेव चामृतः' ॥ ११ ॥

'वृणुते यं तेन लभ्यः' इत्याद्युक्तिबलेन हि ।
जिज्ञासोत्थज्ञानजात् तत्प्रसादादेव मुच्यते   ॥ १२ ॥

'द्रव्यं कर्म च कालश्च स्वभावो जीव एव च ।
यदनुग्रहतः सन्ति न सन्ति यदुपेक्षया' ॥ १३ ॥

'नर्ते त्वत्क्रियते किञ्चने'त्यादेर्न हरिं विना ।
ज्ञानस्वभावतोऽपि स्यात् मुक्तिः कस्यापि हि क्वचित्॥१४॥

'अज्ञानां ज्ञानदो विष्णुर्ज्ञानिनां मोक्षदश्च सः ।
आनन्ददश्च मुक्तानां स एवैको जनार्दनः' ॥ १५ ॥

[ बन्धमिथ्यात्वनिरासः ]

इत्युक्तेर्बन्धमिथ्यात्वं नैव मुक्तिरपेक्षते ।
मिथ्यात्वमपि बन्धस्य न प्रत्यक्षविरोधतः ॥ १६ ॥

मिथ्यात्वं यदि दुःखादेः तद्वाक्यस्याग्रतो भवेत् ।

[ मिथ्यायाः साधकत्वासम्भवः ]

मिथ्यायाः साधकत्वं च न सिद्धं प्रतिवादिनः ॥ १७ ॥

तच्च मिथ्याप्रमाणेन सता वा साध्यते त्वया ।
सता चेद् द्वैतसिद्धिः स्यान्न सिद्धं चान्यसाधनम् ॥१८॥

साधकत्वं सतस्तेन साक्षिणा सिद्धिमिच्छता ।
स्वीकृतं हि ......... ......... .........

[ निर्विशेषस्य साधकत्वासम्भवः ]

........अविशेषस्य साध्यासाधकता पुनः ॥ १९ ॥

तच्चाविशेषमानेन साध्यमित्यनवस्थितिः ।
अनङ्गीकुर्वतां विश्वसत्यतां तन्न वादिता    ।। २० ।।

[ **व्यवहृतेः सत्यत्वम्** ]

तस्माद् व्यवहृतिः सर्वा सत्येत्येव व्यवस्थिता ।
व्यावहारिकमेतस्मात् सत्यमित्येव चागतम्    ।। २१ ।।

[ **व्यवहारसतः साधकत्वासम्भवः** ]

व्यवहारसतश्चापि साधकत्वं तु पूर्ववत् ।

[ **सत्त्रैविध्यनिरासः** ]

सत्त्रैविध्यं च मानेन सिद्ध्येत् केनेति पृच्छ्यते    ।। २२ ।।

तस्याप्युक्तप्रकारेण नैव सिद्धिः कथञ्चन ।

[ **सदसद्विलक्षणत्वनिरासः** ]

वैलक्षण्यं सदसतोरप्येतेन निषिध्यते    ।। २३ ।।

वैलक्षण्यं सतश्चापि स्वयं सद्भेदवादिनः ।
असतश्चापि विश्वस्य तेनानिष्टं कथं भवेत्    ।। २४ ।।

यद्युच्यतेऽपि सर्वस्मादिति सद्भेदसंस्थितिः ।
सन्मात्रत्वं ब्रह्मणोऽपि तस्मात् तदपि नो भवेत्  ।। २५ ।।

[ **पराभिमतज्ञानबाध्यत्वनिरासः** ]

ज्ञानबाध्यत्वमपि तु न सिद्धं प्रतिवादिनः ।

[ **स्वमते ज्ञानबाध्यत्वस्वरूपं, ख्यातिवादः** ]

विज्ञातस्यान्यथा सम्यग्विज्ञानं ह्येव तन्मतम्    ।। २६ ।।

[ असतः प्रतीतिसद्भावः ]

असद्विलक्षणज्ञप्त्यै ज्ञातव्यमसदेव हि ।
तस्मादसत्प्रतीतिश्च कथं तेन निवार्यते ॥ २७ ॥

अन्यथात्वमसत्तस्माद्भ्रान्तावेव प्रतीयते ।
सत्त्वस्यासत एवं हि स्वीकार्यैव प्रतीतता ॥ २८ ॥

तस्यानिर्वचनीयत्वे स्यादेव ह्यनवस्थितिः ।

[ अज्ञानासम्भवः ]

निर्विशेषे स्वयम्भाते किमज्ञानावृतं भवेत् ॥ २९ ॥

मिथ्याविशेषोऽप्यज्ञानसिद्धिमेव ह्यपेक्षते ।
न चावरणमज्ञानमसत्ये तेन चेष्यते ॥ ३० ॥

अप्रकाशस्वरूपत्वात् जडेऽज्ञानं न मन्यते ।
अज्ञानाभावतः शास्त्रं सर्वं व्यर्थीभविष्यति ॥ ३१ ॥

अज्ञानस्य च मिथ्यात्वमज्ञानादिति कल्पने ।
अनवस्थितिस्तथा च स्यादन्योन्याश्रयताऽथवा ॥ ३२ ॥

[ स्वभावाज्ञानवादः ]

स्वभावाज्ञानवादस्य निर्दोषत्वान्न तद्भवेत् ।

[ अविद्यादुर्घटत्वनिरासः ]

अविद्यादुर्घटत्वं चेत् स्यादात्मापि हि तादृशः ॥ ३३ ॥

[ **मायावादे विषयाद्यसम्भवः** ]

अतोऽधिकारिविषयफलयोगादिवर्जितम् ।
अनन्तदोषदुष्टं च हेयं मायामतं शुभैः   ।। ३४ ।।

[ **जीवब्रह्मणोरैक्यस्य शास्त्रविषयत्वासम्भवः** ]

सत्यत्वात्तेन दुःखादेः प्रत्यक्षेण विरोधतः ।
न ब्रह्मतां वदेद्वेदो जीवस्य हि कथञ्चन   ।। ३५ ।।

यजमानप्रस्तरत्वं यथा नार्थः श्रुतेर्भवेत् ।
ब्रह्मत्वमपि जीवस्य प्रत्यक्षस्याविशेषतः   ।। ३६ ।।

सार्वज्ञादिगुणं जीवाद् भिन्नं ज्ञापयति श्रुतिः ।
ईशं तामुपजीव्यैव वर्तते ह्यैक्यवादिनी   ।। ३७ ।।

उपजीव्यविरोधेन नास्यास्तन्मानता भवेत् ।

[ **ऐक्यश्रुतीनां सावकाशता** ]

स्वातन्त्र्ये च विशिष्टत्वे स्थानमत्यैक्ययोरपि   ।। ३८ ।।

सादृश्ये चैक्यवाक् सम्यक् सावकाशा यथेष्टतः ।
अवकाशोज्झिता भेदश्रुतिर्नातिबला कथम्   ।। ३९ ।।

अज्ञानासम्भवादेव मिथ्याभेदो निराकृतः ।

[ **बन्धस्य विष्णुप्रसादेन निवृत्तिः** ]

अतो यथार्थबन्धस्य विना विष्णुप्रसादतः   ।। ४० ।।

अनिवृत्तेस्तदर्थं हि जिज्ञासाऽत्र विधीयते ।
यथा दृष्ट्या प्रसन्नस्सन् राजा बन्धापनोदकृत् ॥ ४१ ॥

एवं दृष्टः स भगवान् कुर्याद्बन्धविभेदनम् ।

[इष्टसाधनतातिरिक्तकार्यताऽभावः]

कार्यता च न काचित् स्यादिष्टसाधनतां विना ॥ ४२ ॥

कार्यं न हि क्रियाव्याप्यं निषिद्धस्य समत्वतः ।
न भविष्यत्क्रिया कार्यं स्रक्ष्यतीश इति ह्यपि ॥ ४३ ॥

कार्यं स्यान्नैव चाकर्तुमशक्यं कार्यमिष्यते ।
साम्यादेव निषिद्धस्य तदिष्टं साधनं तथा ॥ ४४ ॥

कार्यं ........... ........... ............

[भगवत एव इष्टत्वं इष्टसाधनत्वं च]

........ साधनमिष्टस्य भगवानिष्टदेवता ।
मुख्येष्टं वा सुमनसां 'प्रेयस्तदि'ति च श्रुतिः ॥ ४५ ॥

'प्राणबुद्धिमनःखात्मदेहापत्यधनादयः ।
यत्संपर्कात् प्रिया आसन् ततः कोन्वपरः प्रियः'॥ ४६ ॥

इत्यादिवाक्यैराकाङ्क्षा सन्निधिर्योग्यता यतः ।
तस्मिन्नेव समस्तस्येति ............ .........

[इष्टे सिद्धविशेषे व्युत्पत्तिः]

........ ....... इष्टे व्युत्पत्तिरिष्यते ॥ ४७ ॥

अत्त्यपूपांस्तव भ्रातेत्यादावावापतोऽपि च ।
उद्वापाद्वर्तमानत्वात् आकाङ्क्षादिबलादपि   ।। ४८ ।।

बालो व्युत्पत्तिमप्येति नानयेत्यादिवाक्यतः ।
[**वर्तमाने अर्थे प्रथमं व्युत्पत्तिः, भविष्यति अर्थे पश्चात्तनी**]
आनीयमानदृष्ट्यैव व्युत्पत्तेः सम्भवे सति   ।। ४९ ।।

एष्यदानयनायायं कुत एव प्रतीक्षते ।
व्युत्पन्नो वर्तमाने तु क्रियाशब्दे भविष्यति   ।। ५० ।।

पुनर्दृष्ट्यैव शब्दश्रुत् पश्चाद्व्युत्पत्तिमेष्यति ।
[**पराभ्युपगते कार्ये न कदाचिद् व्युत्पत्तिः**]
वर्तमानमतीतं च भविष्यदिति च क्रमात्   ।। ५१ ।।

आकाङ्क्षादियुतं यस्माद् विधेर्व्युत्पादनं कुतः ।
दृष्ट्या ज्ञातपदार्थस्य स्यादाकाङ्क्षा भविष्यति   ।। ५२ ।।

व्युत्पत्तिः प्रथमा तस्माद्वर्तमानेऽगते ततः ।
[**इष्टस्य भगवतः मुख्यप्रयोजनत्वं, ज्ञानस्य तत्साधनत्वम्**]
इष्टमाकाङ्क्षते सर्वो न प्रवृत्तिमपेक्षते   ।। ५३ ।।

अपरोक्षं परोक्षं वा ज्ञानमिष्टस्य साधनम् ।
कापि चेष्टा तदर्था स्यात् अत्तिर्हि रसवित्तये   ।। ५४ ।।

वाक्यार्थज्ञानमात्रेण कचिदिष्टं भवेदपि ।

[**कार्यपरत्वेऽपि उपासनार्थत्वेन ब्रह्मणि तात्पर्यवत्त्वम्**]

न च स्रुक्स्रुववह्न्यादौ अतात्पर्यं श्रुतेर्भवेत् ॥ ५५ ॥

यत्किञ्चित्करणस्यापि यज्ञतैवाऽन्यथा भवेत् ।
तस्मादुपासनार्थं च स्वार्थे तात्पर्यवद्भवेत् ॥ ५६ ॥

॥ इति शब्दस्य प्रकारवाचित्वम् ॥

इति शब्दोन्नयेऽग्नावित्यप्युन्नीते स्मृतिर्भवेत् ।
इति शब्दव्यपेतानि ह्यपि सन्ति वचांस्यलम् ॥ ५७ ॥

आत्मानमेवेत्यादीनि योगेऽग्नावपि तत्समम् ।

[**वेदान्ता ब्रह्मनिष्ठा अपरो वेदभागः**
**कार्यनिष्ठ इति वाक्यभेदो न युक्तः**]

एकवाक्यत्वयोगे तु वेदस्यापि ह्यशेषतः ॥ ५८ ॥

वाक्यभेदो न युक्तस्स्यात् योगश्च स्यान्महाफले ।
इति ब्रूयादिति वचो गतमग्नौ समीपगम् ॥ ५९ ॥

कल्पनागौरवं चेत् स्यात् पृथक् तात्पर्यकल्पने ।
कल्पनागौरवादेव पदार्था न स्युरेव हि ॥ ६० ॥

प्रमाणावगतत्वं चेत्तात्पर्याणां तथैव हि ।

[**सत्यज्ञानादिपदानां पदार्थे वाक्यार्थे चेत्युभयत्र तात्पर्यम्**]

तस्मात् पदार्थे वाक्यार्थे तात्पर्यमुभयत्र च ॥ ६१ ॥

पृथगेव च वाक्यत्वं पृथगन्वयतो भवेत् ।
अवान्तरत्वाद् वाक्यानां वाक्यभेदो न दूषणम्  ॥ ६२ ॥

अङ्गीकृतत्वादपि तैः पदानां तु पृथक् पृथक् ।
क्रियापदेनान्वयस्य वाक्यभेदो हि दूषणम्  ॥ ६३ ॥

प्रत्यक्षादिविरोधे तु गौणार्थस्यापि सम्भवात् ।
अतात्पर्यं पदार्थेऽपि न कल्प्यमविरोधतः  ॥ ६४ ॥

[ 'अतः' शब्दार्थोपसंहारः ]

अतो ज्ञानफलान्येव कर्माणि ज्ञानमेव हि ।
मुख्यप्रसाददं विष्णोर्जिज्ञासायाश्च तद्भवेत्  ॥ ६५॥

कर्तव्या तेन जिज्ञासा श्रुतिप्रामाण्ययोगतः ।

[ आगमस्य स्वतःप्रामाण्यम्, प्रामाण्यं स्वतः अप्रामाण्यं परतः ]

प्रत्यक्षवच्च प्रामाण्यं स्वत एवागमस्य हि  ॥ ६६ ॥

अनवस्थाऽन्यथा हि स्यादप्रामाण्यं तथाऽन्यतः ।
मिथ्याज्ञप्तिप्रलम्भादेस्तेन वेदविरोधि यत्  ॥ ६७ ॥

न मानम् .......... ............. ........

[ वेदानामपौरुषेयत्वम् ]

................अपि वेदानामङ्गीकार्या हि नित्यता ।
न हि धर्मादिसिद्धिः स्यात् नित्यवाक्यं विना क्वचित् ॥६८॥

अविप्रलम्भस्तज्ज्ञानं तत्कृतत्वादयोऽपि च ।
कल्प्या गौरवदोषेण पुंवाक्यं ज्ञापकं न तत् ॥ ६९ ॥

प्रत्यक्षः कस्यचिद्धर्मो वस्तुत्वादिति चोदिते ।
न बुद्धो धर्मदर्शी स्यात् पुंस्त्वादित्यनुमाहतिः ॥ ७० ॥

अधर्मवादिनो वाक्यमप्रयोजनमेव हि ।
धर्माभावोऽपि नो तेन प्रत्यक्षावगतो भवेत् ॥ ७१ ॥

अतः संशयसम्पत्तौ वाक्यं प्रत्यक्षवत्प्रमा ।

[**योग्येतरान्विताभिधानवादः**]

शक्तिश्चैवान्विते स्वार्थे शब्दानामनुभूयते ॥ ७२ ॥

अतोऽन्विताभिधायित्वं गौरवं कल्पनेऽन्यथा ।
नचाशक्त्याभिधायित्वं प्रवृत्तिश्च द्विधान्यथा ॥ ७३ ॥

एतत्सर्वं तर्कशास्त्रे ब्रह्मतर्के हि विस्तरात् ।
उक्तं विद्यापृथक्त्वात्तु सङ्क्षेपेणात्र सूचितम् ॥ ७४ ॥

प्रमाणन्यायसच्छिक्षा क्रियते तर्कशास्त्रतः ।
मानन्यायैस्तु तत्सिद्धैर्मीमांसा मेयशोधनम् ॥ ७५ ॥

ब्रह्मतर्कं च भगवान् स एव कृतवान् प्रभुः ।
पञ्चाशत्कोटिविस्तारान्नारायणतनौ कृतात् ॥ ७६ ॥

उद्धृत्य पञ्चसाहस्रं कृतवान् बादरायणः ।
अतस्तदर्थं सङ्क्षेपादत इत्यभ्यसूचयत् ॥ ७७ ॥

यतोऽनुभवतः सर्वं सिद्धमेतदतोऽपि च ।
देवैश्च दुर्गमार्थेषु व्यापृतो नातिविस्तृतिम्   ॥ ७८ ॥

चकारैता ह्यवज्ञेया युक्तयः प्रतिपक्षगाः ।
प्रत्यक्षेक्षाक्षमः पक्षं कमेवात्राभिवीक्षते   ॥ ७९ ॥

तस्मादक्षमपक्षत्वात् मोक्षशास्त्रेऽभ्युपेक्षितः ।

[ब्रह्मशब्दार्थः विष्णुः, नारायणः

स्वयं भगवता विष्णुर्ब्रह्मेत्येतत्पुरोदितम्   ॥ ८० ॥

'स विष्णुराह ही'त्यन्ते देवशास्त्रस्य तेन हि ।
आद्यन्तं देवशास्त्रस्य स्वयं भगवता कृतम्   ॥ ८१ ॥

मध्यं तदाज्ञया शेषपैलाभ्यां कृतमञ्जसा ।
अतस्तत्रैव विष्णुत्वसिद्धेर्ब्रह्मेत्यसूचयत्   ॥ ८२ ॥

दोषारच्छिद्रशब्दानां पर्यायत्वं यतस्ततः ।
गुणा नारा इति ज्ञेयास्तद्वान्नारायणः स्मृतः   ॥ ८३ ॥

ब्रह्मशब्दोऽपि हि गुणपूर्तिमेव वदत्ययम् ।
अतो नारायणस्यैव जिज्ञासात्र विधीयते   ॥ ८४ ॥

सिद्धत्वाद् ब्रह्मशब्दस्य विष्णौ स्पष्टतया श्रुतौ ।
'अम्भस्यपार' इत्युक्तो नारायणपदोदितः   ॥ ८५ ॥

'आपो नारा' इति ह्याह स एवाप्स्वन्तरीरितः ।
कामतो विधिरुद्रादिपददात्र्या स्वयं श्रिया   ॥ ८६ ॥

योनित्वेनात्मनो विष्णोस्तिष्ठन्तीत्युदितस्य च ।
यस्मिन् देवा अधीत्युक्त्वा समुद्रं स्थानमेव च ॥८७॥

नाम चाक्षरमित्येव ऋच इत्युदितं तु यत् ।
यतः प्रसूतेत्युक्त्वा च तदेव ब्रह्म चाब्रवीत् ॥ ८८ ॥

॥ इति जिज्ञासाधिकरणम् ॥

**जन्माधिकरणम् - २**

**॥ ॐ जन्माद्यस्य यतः ॐ ॥ १-१-२ ॥**

[**अम्भ्रणीसूक्ताद्युक्तस्य इह सूत्रे लक्षणाभिधानम्**]

अन्तस्समुद्रगं विश्वप्रसूतेः कारणं तु यत् ।
सूक्तोपनिषदाद्युक्तं 'जन्माद्यस्ये'ति लक्ष्यते ॥ ८९ ॥

[**सृष्ट्यादिहेतुत्वं प्रत्येकं ब्रह्मलक्षणम्**]

सृष्टिः स्थितिश्च संहारो नियतिर्ज्ञानमावृतिः ।
बन्धमोक्षावपि ह्यासु श्रुतिषूक्ता हरेः सदा ॥ ९० ॥

[**सर्वाणि नामानि विष्णावेव मुख्यानि**]

यं नामानि विशन्त्यद्धा यो देवानामिति ह्यपि ।
श्रुतेर्नामानि सर्वाणि विष्णोरेव यतस्ततः ॥ ९१ ॥

अतो न मुख्यतो नाम तदन्यस्य हि कस्यचित् ।

[**विष्णोर्जन्मादिदोषो न श्रुतेरर्थः**]

गुणाः श्रुता इति ह्यस्मान्न दोषोऽर्थः श्रुतेर्भवेत् ॥ ९२ ॥

प्रीत्या मोक्षपरत्वाच्च तात्पर्यं नैव दूषणे ।
सर्वेषामपि वाक्यानां महातात्पर्यमत्र हि    ।। ९३ ।।

तद्विरोधे न मानत्वं फलं मुक्तिर्हि वाक्यतः ।

**[श्रुतिविरुद्धार्थे पुराणादीनां न प्रामाण्यम्]**

न पुराणादिमानत्वं विरुद्धार्थे श्रुतेर्भवेत्    ।। ९४ ।।

दर्शनान्तरमूलत्वान्मोहार्थं चाज्ञया हरेः ।
न सर्वनामताऽन्येषां श्रुतावुक्ता हि कुत्रचित्    ।। ९५ ।।

अदोषवचनाच्चैव नियमेन हरेः श्रुतौ ।

**[अन्येषामज्ञानादिदोषवत्त्वम्]**

अज्ञानं पारतन्त्र्यं च प्रलयेऽभाव एव च    ।। ९६ ।।

अशक्तिश्चोदिताऽन्येषां सर्वेषामपि च श्रुतौ ।

**[इदं ब्रह्मणः स्वलक्षणं न तटस्थलक्षणम्]**

'जन्माद्यस्ये'ति तेनैतद्विष्णोरेव स्वलक्षणम्    ।। ९७ ।।

अस्योद्भवादिहेतुत्वं साक्षादेव स्वलक्षणम् ।
कृष्णध्यानच्छलेनैव स्वयं भागवतेऽब्रवीत्    ।। ९८ ।।

**[अनेन लक्षणेन जीवैक्यं निराकृतम्]**

अतो जीवैक्यमपि स निराचक्रे जगद्गुरुः ।

**[अस्य लक्षणस्य जीवोऽपि व्यावर्त्यः]**

न हि जन्मादिहेतुत्वं जीवस्य जगतो भवेत्    ।। ९९ ।।

हिताक्रियादिदोषं च वक्ष्यत्येव स्वयं प्रभुः ।

[**निर्विशेषत्वं च अनेन सूत्रेण निषिद्धम्**]

निर्गुणत्वं च तेनैव निषिद्धं प्रभुणा स्वयम् ॥ १०० ॥

[**मुख्यार्थसम्भवे लक्षणा न युक्ता**]

भेदेनैव तु मुख्यार्थसम्भवे लक्षणा कुतः ।
कथं नित्यगुणस्यास्य स्यादैक्यं गुणहानतः ॥ १०१ ॥

सदैव गुणवत्त्वेऽस्य भिन्नं स्यान्निर्गुणं सदा ।
न च मिथ्यागुणत्वं स्यादनिर्वाच्यस्य दूषणात् ॥ १०२ ॥

निर्गुणत्वं तदा च स्यादासुरत्वं न चान्यथा ।

[**विशेषं विना ऐक्यस्य निरूपणप्रकाराभावः**]

लक्ष्यलक्षणयोर्भेदोऽभेदो वा यदि वोभयम् ॥ १०३ ॥

इति पृष्टे तदैक्यस्य गतिरेव न विद्यते ।
ऐक्याभेदे न शास्त्रेण ज्ञेयं तत्स्वप्रकाशतः ॥ १०४ ॥

भेदे मिथ्यात्वतो भेदसत्यत्वं स्याद्बलादपि ।
भेदाभेदौ यदि तदा स्यादेव ह्यनवस्थितिः ॥ १०५ ॥

स्वनिर्वाहकता चेत् स्याद्वाह्यं वाहकमित्यपि ।
पर्यायो भेदवान् वा स्यादनवस्थोभयत्र च ॥ १०६ ॥

[**सत्यज्ञानादिपदानामखण्डार्थत्वदूषणम्**]

सत्यज्ञानादिकेऽप्येवं न व्यावृत्त्या प्रयोजनम् ।
व्यावृत्तस्याविशेषत्वे तदखण्डं च खण्डितम् ॥ १०७ ॥

[**निर्विशेषं ब्रह्मेति स्वक्रियाविरुद्धम्**]

निर्विशेषत्वमेतेन मूकोऽहमितिवद् भवेत् ।
अभिन्नेऽपि विशेषोऽयं बलादापतति ह्यतः   ।। १०८ ।।

विशेषतद्वतोश्चैव स्वनिर्वाहकता भवेत् ।

[**विशेषस्वरूपनिरूपणम्**]

भेदहीने त्वपर्यायशब्दान्तरनियामकः   ।। १०९ ।।

विशेषो नाम कथितः सोऽस्ति वस्तुष्वशेषतः ।
विशेषास्तेऽप्यनन्ताश्च परस्परविशेषिणः   ।। ११० ।।

स्वनिर्वाहकतायुक्ताः सन्ति वस्तुष्वशेषतः ।
अतोऽनन्तगुणं ब्रह्म निर्भेदमपि भण्यते   ।। १११ ।।

'एवं धर्मान्' इति श्रुत्या तदभेदोऽप्युदीर्यते ।

।। इति जन्माधिकरणम् ।। २ ।।

**शास्त्रयोनित्वाधिकरणम् - ३**

**।। ॐ शास्त्रयोनित्वात् ॐ ।। १-१-३ ।।**

[**शैवाद्यागमैरन्येषां जगत्कारणत्वं न कल्पनीयम्**]

शैवाद्यागमसम्प्राप्तदृष्टगेन फलेन तु   ।। ११२ ।।

तद्वाक्योपमयान्यच्च प्रमाणत्वेऽनुमीयते ।
ईशवाक्यत्वत इति चेत् तद्वव्यभिचारिणा   ।। ११३ ।।

अप्रामाण्यानुमा च स्यात् ....... .........

[जगत्कारणे अनुमानस्य स्वातन्त्र्येण न प्रमाणता]

......... .............. न पृथक् चानुमेश्वरे ।
पुंस्त्वहेतुबलादेव पूर्वोक्तेनैव वर्त्मना ।। ११४ ।।

शास्त्रयोनित्वमेतेन कारणस्य बलाद्भवेत् ।
'नावेदवित्' 'न तर्केण मति'रित्यादिवाक्यतः ।।११५।।

तर्को ज्ञापयितुं शक्तो नेशितारं कथञ्चन ।
वनकृत्त्वादिरूपेण पक्षभूतस्य चेशितुः ।। ११६ ।।

किञ्चिज्ज्ञत्वं हि पुंस्त्वेन शक्यं साधयितुं सुखम् ।
'वृक्षकृन्नाखिलं वृक्षं वेत्ति पुंस्त्वाद्धि चैत्रवत्' ।। ११७ ।।

इत्याद्यनुमया स्पर्धि नानुमानं परेशितुः ।
शक्तं विज्ञापने चातिप्रसङ्गोऽनुमयेदृशा ।। ११८ ।।

वस्तुत्वात् तुरगः शृङ्गी, पुष्पवत् खं, सुतैर्युता ।
चित्रिणी च, रसः षष्ठो रसत्वात् सोत्तरो भवेत् ।।११९।।

[उपक्रमादीनां, आगमानुगृहीतानुमानस्य च साधकत्वम्]

उपक्रमादिलिङ्गेभ्यो नान्या स्यादनुमा ततः ।
।। इति शास्त्रयोनित्वाधिकरणम् ।। ३ ।।

## समन्वयाधिकरणम् - ४

## ।। ॐ तत्तु समन्वयात् ॐ ।। १-१-४ ।।

[उपक्रमादिभिः नारायणाख्यब्रह्मण एव शास्त्रप्रतिपाद्यत्वावगमः]

त एवान्वयनामानः तैः सम्यक् प्रविचारिते ॥ १२० ॥

मुख्यार्थो भगवान् विष्णुः सर्वशास्त्रस्य नापरः ।

॥ इति समन्वयाधिकरणम् ॥ ४ ॥

ईक्षत्यधिकरणम् - ५

॥ ॐ ईक्षतेर्नाशब्दम् ॐ ॥ १-१-५ ॥

[वचनवृत्त्यैव ब्रह्मणः सकलशास्त्रप्रतिपाद्यत्वम्]

ईक्षणीयत्वतो विष्णुर्वाच्य एव ...........

[ब्रह्मणः वाच्यत्वाभावे लक्ष्यत्वासम्भवः]

............ ......... ..... न चान्यथा ॥ १२१ ॥

लक्ष्यत्वं क्वापि दृष्टं हि किं तदित्यनवस्थितिः ।
माधुर्यादिविशेषाश्च तच्छब्दैरुदिताः सदा ॥ १२२ ॥

वाक्यार्थोऽपि हि वाक्यार्थशब्देनैवोदितो भवेत् ।
नावाच्यं तेन किञ्चित् स्याद् ........... .......

[ब्रह्मणः अवाच्यत्वस्य श्रुत्यर्थत्वे स्वक्रियाविरोधः]

........... ....... यत इत्यादिकैर्वदन् ॥ १२३ ॥

अवाच्यत्वं कथं ब्रूयात् मूकोऽहमितिवत् सुधीः ।
येन लक्ष्यमिति प्रोक्तं लक्ष्यशब्देन सोऽवदत् ॥ १२४ ॥

[**मुख्यार्थे सम्भवति जघन्यवृत्त्याश्रयणमनुचितम्**]

एकस्यापि हि शब्दस्य गौणार्थस्वीकृतौ सताम् ।
महती जायते लज्जा यत्र तत्राखिला रवाः ॥ १२५ ॥

अमुख्यार्था इति वदन् यस्तन्मार्गानुवर्तिनाम् ।
कथं न जायते लज्जा वक्तुं शाब्दत्वमात्मनः ॥ १२६ ॥

**॥ ॐ गौणश्चेन्नात्मशब्दात् ॐ ॥ १-१-६ ॥**

[**सगुणब्रह्मणो वाच्यत्वमिति न युक्तम्**]

आत्मब्रह्मादयः शब्दाः साक्षात् पूर्णाभिधायिनः ।

**॥ ॐ तन्निष्ठस्य मोक्षोपदेशात् ॐ ॥ १-१-७ ॥**

[**ब्रह्मणो लक्ष्यत्वे श्रुतपरित्यागः अश्रुतकल्पना च**]

जन्मादिकारणं ब्रह्म लक्षितं च यदा तदा ॥ १२७ ॥

वन्ध्यापुत्रोपमं मायाशबलं वाच्यमित्यपि ।
कल्पयित्वा विना मानं लक्ष्यं शुद्धं वदन् पदैः ॥ १२८ ॥

आत्मशब्दोदितस्यैव ज्ञानं मुक्तावसाधनम् ।
आह श्रुतपरित्यागः स्याच्चास्याश्रुतकल्पना ॥ १२९ ॥

स्यात् सर्वत्र च यत्रैकमपि लोको जुगुप्सते ।
नियमेनोभयं स्याद्धि यस्य स्वपरयोर्मते ॥ १३० ॥

अलङ्कृतः सदैवायं दुर्घटैरेव भूषणैः ।

[श्रौतस्य परमात्मनः परित्यागे महान् प्रत्यवायः]

अन्धन्तमो नित्यदुःखं तस्य स्याद् वसनद्वयम् ।। १३१ ।।

'अनन्दा नाम ते लोका अन्धेन तमसाऽऽवृताः ।
तांस्ते प्रेत्याभिगच्छन्ति येऽविद्वांसो बुधो जनाः'।। १३२ ।।

'असुर्या नाम ते लोका अन्धेन तमसा वृताः ।
तांस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः'।। १३३ ।।

इत्यादिश्रुतयो मानं शतशोऽत्र समन्ततः ।

**।। ॐ हेयत्वावचनाच्च ॐ ।। १-१-८ ।।**

[गौणस्य हेयत्वात् न श्रौतत्वम्]

हेयत्वावचनाच्चैव नात्मा गौणः श्रुतौ श्रुतः ।। १३४ ।।

'तमेवैकं जानथान्या वाचो मुञ्चथ' चेति ह ।
उक्त आत्मा कथं गौणो हेयपक्षे ह्यसौ श्रुतः ।। १३५ ।।

[ब्रह्मादिदेवतानां परिवारतया उपादेयत्वम्]

परिवारतया ग्राह्या अपि हेयाः प्रधानतः ।

**।। ॐ स्वाप्ययात् ॐ ।। १-१-९ ।।**

[पराभिमतसगुणस्य स्वाप्ययत्वपूर्णत्वानुपपत्तिः]

'पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते' ।। १३६ ।।

इति स्वस्यैव पूर्णस्य पूर्णेऽप्यय उदाहृतः ।
कथं मायाव्यवच्छिन्नः पूर्णो मुख्यतया भवेत् ।। १३७ ।।

**।। ॐ गतिसामान्यात् ॐ ।। १-१-१० ।।**

**।। ॐ श्रुतत्वाच्च ॐ ।। १-१-११ ।।**

[**केवलो निर्गुणश्चेति श्रुतौ निर्गुणस्य वाच्यत्वं श्रुतम्**

पदं च निर्गुण इति कथं गौणं वदिष्यति ।

गुणाभावोपलक्ष्यं चेत् पदं तदपि वाचकम् ।। १३८ ।।

[**अवाच्यत्वनिरासोपसंहारः**]

अतोऽनवस्थितिमुखसर्वदोषमहास्पदम् ।

कथमेतन्मतं सद्भिराद्रियेत विचक्षणैः ।। १३९ ।।

[**एतेषां सूत्राणां साङ्ख्यमतनिराकरणपरतया व्याख्यानमयुक्तम्**]

न च साङ्ख्यनिराकृत्यै सूत्राण्येतान्यचीक्लृपत् ।

भगवान्न ह्यशब्दत्वं प्रधानेऽङ्गीकरोत्यसौ ।। १४० ।।

समन्वये प्रतिज्ञाते शब्दगोचरतैव हि ।

प्रथमप्रतिपाद्या स्यात्तदभावे कुतोऽन्वयः ।। १४१ ।।

[**सूत्रे समन्वयशब्दप्रयोगेण ब्रह्मणः वाच्यत्वमेव स्फुटीकृतम्**]

कथं च लक्षणावादी ब्रूयाद्ब्रह्मसमन्वयम् ।

योऽसौ शब्दस्य मुख्यार्थस्तत्रैव स्यात् समन्वयः ।।१४२।।

[**पराभिमतनिर्गुणे समन्वयो न प्रतिज्ञातः**]

जन्मादिकारणे साक्षाद् आह देवः समन्वयम् ।

उक्तं तदेव जिज्ञास्यं क्वावकाशोऽत्र निर्गुणे ।। १४३ ।।

कथं चासम्भवस्तस्य मुख्यार्थस्य निराकृतौ ।

**[अवाच्ये अमेये निर्गुणे समन्वयप्रतिज्ञा व्यर्था स्यात्]**

मानेन केन विज्ञेयमवाच्याज्ञेयनिर्गुणम्    ।। १४४ ।।

अमेयं चेन्न शास्त्रस्य तत्र वृत्तिः कथञ्चन ।

**[अनन्तगुणार्णवस्यैव जिज्ञास्यत्वम्]**

तस्माच्छास्त्रेण जिज्ञास्यमस्मदीयं गुणार्णवम्    ।। १४५ ।।

वासुदेवाख्यमद्वन्द्वं परं ब्रह्माखिलोत्तमम् ।

**[पराभिमतनिर्गुणस्य प्रमाणागोचरत्वं, स्वप्रकाशत्वे शास्त्राविषयत्वम्]**

विज्ञेयवाच्यलक्ष्यत्वपूर्वाशेषविशेषतः    ।। १४६ ।।

निर्गतं मनसो वाचो यदि तत्स्यादगोचरम् ।
अस्तु तन्मा वदेद्वादी न चास्मच्छास्त्रगं तु तत्    ।।१४७।।

अवाच्यं वाच्यमित्युक्त्वा किमित्युन्मत्तवन्मृषा ।
अस्मच्छास्त्रस्य चौर्याय यतते स्वोक्तिदूषकः    ।। १४८ ।।

**[श्रुतिसूत्रयोरनन्तगुणप्रतिपादकत्वेनैकार्थत्वम्]**

जन्मादिकारणं यत्तत् साक्षान्नारायणाभिधम् ।
वदन्ति श्रुतयो ब्रह्म शास्त्रं चैतत्तदर्थतः    ।। १४९ ।।

प्रवृत्तमस्तु .......... ............. ..........

[सर्वशब्दावाच्यस्य शास्त्रविषयत्वोक्तौ व्याहतिः]

............. अवाच्यं ते नैवं ब्रूयाः कथञ्चन ।
सर्वशब्दैरवाच्यं तदुक्त्वा तद्विषयं पुनः ॥ १५० ॥

शास्त्रं वदन्तमुन्मत्तं कथं लोको न वारयेत् ।
मा वदो मा विजानीहि त्यजास्मच्छास्त्रचोरताम् ॥१५१॥

वयं त्वां श्रुतियुक्तिभ्यां बद्ध्वास्मच्छास्त्रमञ्जसा ।
विचारयामः श्रुतिभिर्युक्तिभिश्चैव सादरम् ॥ १५२ ॥

[श्रुतिस्मृतिषु लोके च अवाच्यत्वादिपदानामर्थोपन्यासः]

'अद्भुतत्वादवाच्यं तदतर्क्याज्ञेयमेव च ।
अनन्तगुणपूर्णत्वादि'त्यूदे पैङ्गिनां श्रुतिः ॥ १५३ ॥

अवाच्यमिति लोकोऽपि वक्त्याश्चर्यतमं भुवि ।

॥ इतीक्षत्यधिकरणम् ॥ ५ ॥

## आनन्दमयाधिकरणम् - ६

### ॐ ॥ आनन्दमयोऽभ्यासात् ॐ ॥ १-१-१२ ॥

[समन्वयारम्भः]

एवं शास्त्रावगम्यत्वे विभागेन समन्वयम् ॥ १५४ ॥

'आनन्दमय' इत्यादिनाध्यायेन वदत्यजः ।

[प्रथमाध्यायस्य प्रथमपादे अन्यत्र प्रसिद्धनामात्मकशब्दानां समन्वयः]

तत्रान्यत्र प्रसिद्धानां विष्णावेव समन्वयम् ॥ १५५ ॥

शब्दानां प्रथमे पादे ......... ..............

[आनन्दमयाधिकरणे गुणिसामान्यवाचिनां गुणवाचिनां च समन्वयः]

......... .............. गुणिसामान्यवाचिनाम् ।
गुणवाचिनां च प्रथमम् आह देवः समन्वयम् ॥ १५६ ॥

[आनन्दमयादिपञ्चकस्य विष्णुवाचकत्वम्]

समुद्रशायिनं सर्वप्रसूतिप्रभवं श्रुतिः ।
'तदेव ब्रह्म परमम्' इति सावधृतिर्जगौ ॥ १५७ ॥

यतोऽतो ब्रह्मशब्दस्य तत्रैव नियतत्वतः ।
'येऽन्नं ब्रह्मे'त्यादिरूपादभ्यासात्तैत्तिरीयके ॥ १५८ ॥

अन्यासु चैतद्रूपासु शाखास्वपि सहस्रशः ।
आनन्दमय इत्याद्यैः शब्दैर्वाच्यो हरिः स्वयम् ॥ १५९ ॥

[आनन्दमयशब्दस्य अन्नमयाद्युपलक्षणत्वम्]

उपलक्षणत्वं शब्दानामानन्दमयपूर्विणाम् ।

[यथाश्रुतग्रहणे सूत्राणां सर्वतोमुखत्वानुपपत्तिः]

सूत्रस्याल्पाक्षरत्वेन सर्वशाखाविनिर्णये ॥ १६० ॥

पुनश्च प्रापकाद्धेतोस्तत्राधिकरणान्तरम् ।

[सर्वेषां वेदानां ब्रह्मनिष्ठता]

'सर्वे वेदा आमनन्ति यत्पदन्त्वि'ति हि श्रुतिः ॥ १६१ ॥

[सूत्रे आनन्दमयस्यैव निर्देशे कारणम्]

आनन्दमयरूपे तु ब्रह्मणः पुच्छतोक्तितः ।
समस्ताब्रह्मताप्राप्तेरानन्दमयनाम हि ॥ १६२ ॥

[आनन्दमयशब्दस्य अन्नमयाद्युपलक्षणत्वे कारणान्तरम्]

ब्रह्मशब्दस्य चाभ्यासात् पञ्चरूपादिषु स्फुटम् ।

[पुच्छत्वाभिधानेऽपि पूर्णत्वावयवित्वाविरोधः]

ब्रह्मतावयवेऽपि स्यात्तथावयविनि स्वतः ॥ १६३ ॥

यथैव कृष्णकेशस्य कृष्णस्य ब्रह्मताखिला ।
दर्शिता चैव पार्थाय निःसीमाः शक्तयोऽस्य हि ॥ १६४ ॥

[पूर्वोत्तरार्धयोः भिन्नविषयत्वात् तापनीयवाक्ये न रुद्रस्य परब्रह्मत्वोक्तिः]

'ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम्' ।
विष्णवाख्यमुक्तमन्यत्र ह्यूर्ध्वरेतं च तत्प्रति ॥ १६५ ॥

विरूपाक्षाख्यमपरं ब्रह्मोक्तं तद्व्रते स्थितम् ।
समानाधिकृतत्वं चेदुत्तरं नीललोहितम् ॥ १६६ ॥

कृष्णपिङ्गलरूपेण पुनरुक्तं भविष्यति ।
'ब्रह्माधिपतिरि'त्यत्र तापनीयश्रुतौ पुरः ॥ १६७ ॥

स्वरितब्रह्मशब्दान्तं बहुव्रीहित्वमेष्यति ।
स्वाहेन्द्रशत्रुर्वर्धस्व यद् बहुव्रीहितामगात् ॥ १६८ ॥

तस्मादस्येन्द्र एवाभूच्छत्रुरित्युत्तरश्रुतेः ।
पूर्वान्तस्वरिते पुंसोर्बहुव्रीहित्वमेष्यति ॥ १६९ ॥

महाव्याकरणे सूत्रमिति स्वरविनिर्णये ।
'ऋतं सत्यं परं ब्रह्मे'त्याद्युद्देश्यद्वितीयका ॥ १७० ॥

विभक्तिरूर्ध्वरेतादिः प्रथमा रुद्रगोचरा ।
तस्माद्विष्णुं परं ब्रह्म प्रति रुद्रो व्रते स्थितः ॥ १७१ ॥

ऊर्ध्वरेता इति ह्येव श्रुत्यर्थोऽवसितो भवेत् ।

[उक्तार्थे नीलग्रीवश्रुतिसमाख्यानम्]

ऋतं सत्यं परं ब्रह्म प्रति विष्णुं सदाशिवः ॥ १७२ ॥

ऊर्ध्वरेता ध्यायति ह शङ्करो नीललोहितः ।
इत्यर्थमेतमेवाह नीलग्रीवश्रुतिः परा ॥ १७३ ॥

आथर्वणी परं ब्रह्म तस्मादेको हरिः श्रुतौ ।

[रुद्रस्य परब्रह्मत्वे 'तदेवर्तमि'ति श्रुतिविरोधः]

'तदेवर्तमि'ति प्राह कथमेवान्यथा श्रुतिः ॥ १७४ ॥

अवधारयन्ती तस्यैव ह्यृतत्वादिकमञ्जसा ।
'एको नारायण आसीन्न ब्रह्मा न च शङ्करः' ॥ १७५ ॥

[रुद्रादीनां प्रलयेऽभावाच्च न परब्रह्मत्वम्]

'वासुदेवोऽग्र एवासीन्न ब्रह्मा न च शङ्करः ।
नेन्द्रसूर्यौ न च गुहो न सोमो न विनायकः' ॥ १७६ ॥

इत्यादिवाक्यतो ............ ..............

[विष्णोरुत्पत्तिवाक् प्रादुर्भावविषया]

............ विष्णोरुत्पत्तिरवतारगा ।

मुख्यं ब्रह्म हरिस्तस्मात् ............

['ब्रह्मविदाप्नोति परमि'ति प्रस्तावात्
अन्नमयादीनां मुख्यब्रह्मत्वम्]

............ प्रस्तावः परमित्यपि ॥ १७७ ॥

मुख्यब्रह्मग्रहे युक्ते नामुख्यं युज्यते क्वचित् ।
असम्भवे हि मुख्यस्य गौणार्थाङ्गीकृतिर्भवेत् ॥ १७८ ॥

**॥ ॐ विकारशब्दान्नेति चेन्न प्राचुर्यात् ॐ ॥ १-१-१३ ॥**

[मयटः पञ्चसु प्राचुर्यार्थत्वम्

प्राचुर्यार्थाश्च मयटः सर्वेऽत्र प्रतिपादिताः ।

[अन्नमयादिपञ्चानामपि भगवद्वाचकत्वम्]

भोग्यत्वमत्र चाद्यत्वमुपजीव्यतया हरेः ॥ १७९ ॥

महाभोक्ता महाभोग्य इत्यर्थोऽन्नमये भवेत् ।
महाप्राणो महाबोधो महाविज्ञानवानपि ॥ १८० ॥

[मनोविज्ञानयोर्विशेषसामान्यविषयत्वम्]

विशेषसामान्यतया विज्ञानं मन इत्यपि ।

[अभेदेऽपि भेदप्रतिनिधिविशेषबलेनानेकत्वोक्तिः]

एकस्य ज्ञानरूपस्य हरेरुक्तिर्विभागतः ॥ १८१ ॥

अभेदेऽपि विशेषेणैवान्य इत्युदितो हरिः ।
भेदशब्दा विशेषं तु हरावन्यत्र भिन्नताम्    ।। १८२ ।।

ब्रूयुर्हरेर्जीवजडैरपि भेदं हि मुख्यतः ।
ब्रह्मतर्कवचोऽप्येवं ............. .........

[एकस्यापि हरेः पञ्चधा कथनं युक्तमित्युपसंहारः]

............. अत एकः स पञ्चधा    ।। १८३ ।।

उक्तोऽन्नमय इत्यादि ..................

[भृगुवल्लीसंवादः]

............. .........भृगोश्चैतद्वदिष्यति ।
प्राप्यत्वेन मयट्प्रोक्तेर्न तत्राप्यन्यदुच्यते    ।। १८४ ।।

प्रचुरान्नादिरेवातो ह्यन्नमन्नमयेत्यपि ।
उच्यते ह्यविशेषेण नान्यत्किञ्चिदिहोच्यते    ।। १८५ ।।

**।। ॐ तद्धेतुव्यपदेशाच्च ॐ ।। १-१-१४ ।।**

[लोकचेष्टान्यथाऽनुपपत्त्या विष्णोरानन्दमयत्वसिद्धिः]

महानन्दत्व एवास्य हेतुः 'कोऽन्यादि'ति स्फुटम् ।
उक्तः श्रुत्यन्तरे यस्मात्सुखं लब्ध्वा करोत्ययम् ।। १८६ ।।

करोति नासुखी 'भूमा सुखं नाल्पे सुखं भवेत्' ।
इत्युक्तं यत्प्रवृत्तिश्च नृत्तगानादिका सुखात्    ।। १८७ ।।

दुःखाद्रोदादिका चैव सर्वकर्तृत्वतोऽस्य च ।
सर्वशक्तेर्न दुःखं स्यादतः केवललीलया    ।। १८८ ।।

प्रवर्तको न चेदेष प्राण्यादन्याच्च कः पुमान् ।

**।। ॐ मान्त्रवर्णिकमेव च गीयते ॐ ।। १-१-१५ ।।**

[सत्यं ज्ञानमनन्तं ब्रह्मेति मन्त्रवर्णे उक्तमेव
अन्नमयादिवाक्यपञ्चके गीयते]

'ब्रह्मविद् परमाप्नोती'ति यत्प्रथमसूचितम् ।। १८९ ।।

तदेव मन्त्रवर्णेन सत्यं ज्ञानमनन्तवत् ।
लक्षितं तत्र सत्यत्वं सृष्ट्यान्नप्राणयोरपि ।। १९० ।।

उक्तं ज्ञानं तु मनसा विज्ञानेनाप्युदीरितम् ।
अनन्तत्वं तथाऽऽनन्दमयवाचाप्युदाहृतम् ।। १९१ ।।

सद्भावं यापयेद् यस्मात् सत्यं तत्तेन कथ्यते ।
इति सृष्टिरिह प्रोक्ता जगत्सद्भावयापकम् ।। १९२ ।।

ब्रह्मेति स्थापनायैव सत्त्वं जीवनमेव च ।
विशीर्णता च सत्त्वं स्यात्सन्नमित्याहुरेव यत् ।। १९३ ।।

अतोऽयताऽत्तृताऽन्नत्वं सत्यशब्दार्थ एव हि ।
'प्राणं देवा अनुप्राणन्ति मनुष्याः पशवश्च ये ।। १९४ ।।

आयुः प्राणो हि भूतानाम्' इति यद्गतिजीवने ।
उक्ते सदिति धात्वर्थो गतिश्चातो हि सत्यता ।। १९५ ।।

प्राणत्वमवबोधार्थो मनुधातुः प्रकीर्तितः ।
'नाल्पे सुखमि'ति प्रोक्तयैवानन्दमयतोक्तितः ।। १९६ ।।

अनन्तत्वं सुनिर्णीतं पूर्णानन्दो हि नाल्पके ।
अतो हि मन्त्रवर्णोक्तविस्तृतिस्तु समस्तया ॥ १९७ ॥

क्रियते परया यस्मात् ............. .........

**॥ ॐ नेतरोऽनुपपत्तेः ॐ ॥ १-१-१६ ॥**

[**जीवादेः न अन्नमयादिप्रकरणप्रतिपाद्यत्वम्**]

............. ......... ..... इतरोऽत्र न कथ्यते ।

[**अन्नमयादीनां जीवादिवाचित्वे तज्ज्ञानान्मोक्षानुपपत्तिः**]

पुरुषं वेत्ति यो मुच्येत् 'नान्यः पन्था हि विद्यते' ॥१९८॥

इति श्रुतेरन्यवेदी कथं मुक्तिं प्रयास्यति ।

[**पुरुषादिशब्दानां नारायणवाचित्वम्**]

पुरुषः पर आत्माऽजो ब्रह्म नारायणः प्रभुः ॥ १९९ ॥

महानानन्द उद्विष्णुर्भग ओम इतीर्यते ।
स्वयं नारायणो देवो नान्यस्यैतानि कस्यचित् ॥ २०० ॥

'तस्मादोमित्युदाहृत्य यज्ञदानादि कुर्वते' ।
सूक्तेन पौरुषेणैनं यजन्त्यध्यात्मकोविदाः ॥ २०१ ॥

इति पैङ्गिश्रुतिस्तेन नान्यज्ज्ञानाद्विमुच्यते ।

[**चतुर्विधाकाशसृष्टिनिरूपणम्, हरेराकाशशब्दमुख्यवाच्यत्वम्**]

ब्रह्मशब्दोदिते तस्मिन्नात्मशब्दं प्रयुज्य च ॥ २०२ ॥

तस्मादाकाशसृष्टिं च प्रोवाचात्र चतुर्विधाम् ।
भूतं भूताभिमानी च तद्देहोऽन्तर्नियामकः ॥ २०३ ॥

हरिश्चाकाशशब्दोक्तो मुख्यतो हरिरेव च ।
आ समन्तात् काशते यदाकाशो मुख्यतो हरिः ॥ २०४ ॥

**[चतुर्विधवाय्वग्न्यादिसृष्टिनिरूपणं,
हरेर्वाय्वादिशब्दमुख्यवाच्यत्वम्]**

बलज्ञानस्वरूपत्वाद् वायुरग्निरगं नयन् ।
आप आपालनाच्चैव पृथिवी प्रथितो यतः ॥ २०५ ॥

उष्टानामाश्रयत्वेन स एवौषधिनामकः ।
ओषधीषु स्थितो विष्णुः क्षुधितैराश्रितो भवेत् ॥ २०६ ॥

**[पुरुषशब्दस्य मुख्यतो हरिवाचकत्वम्]**

पुरि शेते यतः सोऽथ पुरुषश्चेति गीयते ।

**[जनिस्वरूपनिरूपणम्]**

क्रियाप्रवर्तकत्वेन प्रादुर्भावो हरेर्जनिः ॥ २०७ ॥

आकाशादिषु नान्योऽस्ति ह्यभिमानोऽभिमानिनः ।
अभिमानिशरीरस्य साक्षाद्भूतस्य चोद्भवः ॥ २०८ ॥

**['स वा एष' इति श्रुत्यर्थः]**

एवं देहादिपर्यन्तमागतं हरिमेव तु ।
परामृशति तस्यैव पञ्चरूपत्ववित्तये ॥ २०९ ॥

त्यक्त्वा भूतादिकं सर्वं 'स वा एष' इति श्रुतिः ।
स इत्यात्मपदोद्दिष्ट एष जीवशरीरगः ॥ २१० ॥

सारान्नमय एवायं न लोकान्नमयः प्रभुः ।
इति तं रसशब्देन विशिनष्टि शरीरगम्  ॥ २११ ॥

['तस्येदमेव शिरः' इत्यादिश्रुत्यर्थः]

इदमित्येव निर्देशो वस्त्रप्रावृतवद्विभोः ।
शिर आदेर्भवेज्जीवशिर आदौ व्यवस्थितेः  ॥ २१२ ॥

[प्राणमयज्ञानान्मोक्षकथनात् प्राणमयो नान्यः]

तं विदित्वास्य मुक्तिः स्यान्नान्यज्ञानात् कथञ्चन ।

**॥ ॐ भेदव्यपदेशाच्च ॐ ॥ १-१-१७ ॥**

[जीवब्रह्मणोरभेदो नात्र विवक्षितः]

आदित्ये पुरुषे चायमिति भेदोपदेशतः  ॥ २१३ ॥

नास्याभेदोऽस्ति जीवेन .............

**॥ ॐ कामाच्च नानुमानापेक्षा ॐ ॥ १-१-१८ ॥**

[प्रत्यक्षागमविरुद्धस्यानुमानस्य नाभेदसाधकत्वम्]

.......................... नानुमा कामचारिणी ।
'विमतानि शरीराणि मद्भोगायतनानि यत्  ॥ २१४ ॥

शरीराणी'त्यादिका तु तत्त्वज्ञाने ह्यपेक्षते ।
प्रत्यक्षादिविरुद्धत्वात् अक्षागमभयोज्झिता  ॥ २१५ ॥

अनुमा कामवृत्ता हि कुत्र नावसरं व्रजेत् ।
'जड आत्मैव वस्तुत्वात्' 'प्रमेयत्वाज्जडं चितिः' ॥२१६॥

'घन आकाश' इत्याद्या वार्यन्ते केन हेतुना ।

[तात्पर्यभेदात् भेदसूत्राणां न पुनरुक्तता]

न जीवभेदसूत्राणां शङ्क्याऽत्र पुनरुक्तता ।। २१७ ।।

वाक्यान्तरद्योतकत्वात् पृथगित्यत्र पूर्णता ।

**।। ॐ अस्मिन्नस्य च तद्योगं शास्ति ॐ ।। १-१-१९ ।।**

[अन्नमयादीनां कोशपरत्वनिरासः]

योगमन्नमयाद्यैर्यत् फलत्वेनास्य शंसति ।। २१८ ।।

स्थानद्वयेऽप्यतः कोशा एत इत्यतिसाहसम् ।
उपसङ्क्रमणं चैव द्वितीयोद्देशितं प्रति ।। २१९ ।।

अतिक्रमं वदन्तं तमुपशब्दो निवारयेत् ।
अश्रुतस्यातिशब्दस्य स्थानं दद्यात्कथं पुनः ।। २२० ।।

श्रुताश्रुतपरित्यागकल्पने विगतह्रियाम् ।
मृतावेव परित्यागः कृतो ह्यन्नमयस्य च ।। २२१ ।।

'योऽन्नं ब्रह्मे'त्याद्युपासां सामानाधिकरण्यतः ।
उक्त्वा पञ्चस्वरूपाणां पुनस्तत्प्राप्तिवादिनी ।। २२२ ।।

स्थानद्वयगता वेदवाणी तदपलापिनाम् ।
तमसोऽन्यत्र संस्थानं कथमेव सहेत सा ।। २२३ ।।

[भृगुवल्ल्युक्तान्नादयोऽपि ब्रह्मैव]

'अधीहि भगवो ब्रह्मे'त्युक्तोऽन्नप्राणपूर्वकम् ।

आह ब्रह्म कथं तन्न द्वारं तदितिवादिनः ॥ २२४ ॥

उपसत्तिं कथं विद्युरुपसन्नाय हि त्रिशः ।
वक्तव्यं ब्रह्म गुरुणा चतुर्वारमथापि वा ॥ २२५ ॥

सकृद्वेत्यागमा ब्रूयुः सम्प्रदायविदोऽपि च ।
तद्यत्किञ्चित्कथं ब्रूयादुपसन्नाय दिक्पतिः ॥ २२६ ॥

न वदेद् ब्रह्म च कथं मायावी नहि वारिराट् ।

**[चक्षुरादिशब्दा अपि ब्रह्मवाचिनः]**

चष्ट इत्येव तच्चक्षुः श्रवणाच्छ्रोत्रमुच्यते ॥ २२७ ॥

वचनादेव वाग् ब्रह्म सृष्टिस्थित्यादिकारणम् ।

**[वल्लीद्वयेऽपि ब्रह्मणः अष्टरूपोपदेशः]**

तच्च वाधूलशाखायाम् अष्टरूपमुदाहृतम् ॥ २२८ ॥

विज्ञानानन्दसहितं पृथक् सृष्ट्यादिलक्षणैः ।
आवापोद्वापतः शाखा यत आहुः परं पदम् ॥ २२९ ॥

**[लब्धोपदेशस्य भृगोः पुनःपुनरुपसर्पणं भगवद्रूपान्तरसाक्षात्कारार्थम्]**

'यतो भूतानि जायन्त' इत्याद्यैर्लक्षणैः स्वयम् ।
लक्षितं गुरुणा पश्चात् तपसैवापरोक्षितम् ॥ २३० ॥

दृष्ट्वैकैकस्वरूपं तु समस्तोक्तानुदर्शनम् ।
इच्छताज्ञां गुरोः प्राप्य तपसैवापरोक्षितम् ॥ २३१ ॥

[अन्नादीनामब्रह्मत्वे श्रुतहानिरश्रुतग्रहः]

अब्रह्मेत्येव वदतां श्रुतहान्यश्रुतग्रहौ ।
साक्षाल्लक्षणतां प्राप्ताविति लज्जा तदुक्तिषु ।। २३२ ।।

[मोक्षे उपदिष्टो भेदः न मिथ्या]

समीपे सहभोगस्य मुक्तित्वेनोक्तितोऽसकृत् ।
भेदो जीवेशयोर्मिथ्येत्येव मिथ्या स्वयं भवेत् ।। २३३ ।।

[अन्नमयादिचतुर्णां कोशत्ववादिनां भास्करादीनां मतनिरासः]

एतेन मयटश्चैव द्वैविध्येनार्थकल्पनात् ।
तदन्येषां मतमपि सत्संसत्सु न भासते ।। २३४ ।।

[अधिकरणार्थोपसंहारः]

अतो नारायणो देवो निःशेषगुणवाचकैः ।
गुणिसामान्यवचनैरपि मुख्यतयोदितः ।। २३५ ।।

अध्यात्मगैश्च प्राणाद्यैस्तथैव ह्यधिभूतगैः ।
अन्नादिशब्दैर्भगवान् एको मुख्यतयोदितः ।। २३६ ।।

[सकलशब्दानां भगवत्येव समन्वयः]

'जन्माद्यस्ये'ति सूत्रेण गुणसर्वस्वसिद्धये ।
ब्रह्मणो लक्षणं प्रोक्तं शास्त्रमूलं यतस्ततः ।। २३७ ।।

अन्वयः सर्वशब्दानां गुणसर्वस्ववेदकः ।

[सर्वशब्दानामीश्वरे महायोगः अन्यत्र योगमात्रम्]

शब्दप्रवृत्तिहेतूनां तस्मिन् मुख्यसमन्वयात् ।। २३८ ।।

अन्यार्थेष्वल्पताहेतोस्तन्निमित्तत्वतस्तथा ।
तद्वाचकत्वं शब्दानां बहुलातिप्रयोगतः   ।। २३९ ।।

[**विद्वदविद्वद्रूढी**]

रूढमित्येव साध्यं स्यात् रूढिर्हि द्विविधा मता ।
अविद्वद्विद्वदाख्यैव मुख्या हि विदुषां तु सा   ।। २४० ।।

विद्वद्रूढिर्वैदिका स्यात् सा योगादेव लभ्यते ।
तस्मान्मुख्यार्थता विष्णोरिति कृत्वा हृदि प्रभुः ।। २४१ ।।

समन्वयं साधयति ........... ..............

।। इत्यानन्दमयाधिकरणम् ।। ६ ।।

**अन्तस्थत्वाधिकरणम् - ७**

[**अधिदैवगतशब्दसमन्वयः**]

**।। ॐ अन्तस्तद्धर्मोपदेशात् ॐ ।। १-१-२० ।।**

[**इन्द्रादिशब्दानामिन्द्रादिषु महायोगविद्वद्रूढी इत्यभ्यधिकाशङ्कया पूर्वपक्षः**]

........... .............. देवानां तत्र शक्तताम् ।
आशङ्क्य तत्र रूढिं च ........... ..............

[**निरवकाशविष्णुलिङ्गैः इन्द्रादिशब्दा विष्णुवाचकाः, विष्णावेव विद्वद्रूढिः महायोगश्च**]

........... .........तच्छब्दानामपि स्वयम्   ।। २४२ ।।

समुद्रान्तस्थितत्वाद्यैस्तद्धर्मैर्विष्णुरूढताम् ।
साधयित्वा .......... .................

**॥ ॐ भेदव्यपदेशाच्चान्यः ॐ ॥ १-१-२१ ॥**

**[अन्तःप्रविष्टस्य इन्द्रादिदेवेभ्यो न अभेदः]**

.......... अभिदां तैश्च पुनरेव न्यवारयत् ॥ २४३ ॥

॥ इति अन्तस्थत्वाधिकरणम् ॥ ७ ॥

**आकाशाधिकरणम् - ८**

**[अधिभूतविषयशब्दसमन्वयः]**

**॥ ॐ आकाशस्तल्लिङ्गात् ॐ ॥ १-१-२२ ॥**

**[आकाशशब्दप्रवृत्तिनिमित्तस्य भगवदधीनत्वाभावान्नाकाशशब्दवाच्यो हरिरित्याक्षेपः]**

चेष्टा हि चेतनानां या सा भवेत्तत्प्रसादतः ।
अचेतनस्वभावस्तु विवरादिः कथं ततः ॥ २४४ ॥

इति शङ्कानिवृत्त्यर्थं .......... ..........

**[निरवकाशविष्णुलिङ्गैः आकाशशब्दवाच्यो हरिरेव]**

.............. आकाश इति नाम च ।
'परतोऽपि वरीयस्त्व'पूर्वाल्लिङ्गाद्धरेर्भवेत् ॥ २४५ ॥

**[आकाशस्य अवकाशदातृत्वमीश्वरायत्तम्]**

'नभो ददाति श्वसतां मार्गं यन्नियमाददः ।'

इत्यादिवाक्यैः ........... .............

।। इति आकाशाधिकरणम् ।। ८ ।।

**प्राणाधिकरणम् - ९**

**[प्राणाद्याध्यात्मिकशब्दसमन्वयः]**

**।। ॐ अत एव प्राणः ॐ ।। १-१-२३ ।।**

**[अन्वयव्यतिरेकाभ्यां मुख्यप्राणस्य जीवनहेतुत्वदृष्टेः स एव प्राणशब्दवाच्य इत्यभ्यधिकाशङ्का]**

........... अध्यात्ममन्वयव्यतिरेकतः ।। २४६ ।।

प्राणादिहेतुतादृष्टेः ........... ...........

**[प्रबलविष्णुलिङ्गैः प्राणादिवाच्यो हरिरेव]**

........... ........ अतिदेशो हि तादृशः ।
लिङ्गं बलवदेव स्यात्प्रेरकोऽस्यापि यद्धरिः ।। २४७ ।।

।। इति प्राणाधिकरणम् ।। ९ ।।

**ज्योतिरधिकरणम् - १०**

**।। ॐ ज्योतिश्चरणाभिधानात् ॐ ।। १-१-२४ ।।**

।। इति ज्योतिरधिकरणम् ।। १० ।।

**गायत्र्यधिकरणम् - ११**

**[गायत्र्याद्यधिवेदगताशेषनामसमन्वयः]**

**।। ॐ छन्दोऽभिधानान्नेति चेन्न तथा चेतोऽर्पणनिगदात्तथाहि दर्शनम् ॐ ।। १-१-२५ ।।**

[नित्यस्य शब्दस्य तत्स्वभावस्य च ईश्वरानधीनत्वात्
गायत्र्यादिशब्दानां न विष्णुवाचकतेत्यभ्यधिकाशङ्का]

नित्यत्वादेव शब्दस्य तत्स्वभावः कथं हरेः ।
कथं प्रसिद्धबहुलशब्दानामन्यथार्थता ।। २४८ ।।

इति चेत् ........... ........... ..........

[श्रुतिलिङ्गबाहुल्यात् गायत्र्यादिवाच्यः हरिरेव]

........... तद्धरेरेव बाहुल्याच्छ्रुतिलिङ्गयोः ।

**।। ॐ भूतादिपादव्यपदेशोपपत्तेश्चैवम् ॐ ।। १-१-२६ ।।**

**।। ॐ उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात् ॐ ।। १-१-२७ ।।**

[नित्यस्यापि ईश्वरशक्त्यधीनत्वम्
तादृशत्वाच्च तच्छक्तेः]

।। इति गायत्र्यधिकरणम् ।। ११ ।।

**अन्तिमप्राणाधिकरणम् - १२**

**।। ॐ प्राणस्तथानुगमात् ॐ ।। १-१-२८ ।।**

[श्रुतिलिङ्गबाहुल्यात् प्राणशब्दमुख्यवाच्यः
इन्द्रादिरिति पूर्वपक्षः

........... ........... बाहुल्ये श्रुतिलिङ्गयोः ।। २४९ ।।

अन्यस्य मुख्यवाच्यत्वमिति........... ...........

[एतानि श्रुतिलिङ्गानि विष्णौ सावकाशानि]

........... ........... ..........तन्मात्रगस्य हि ।
विष्णोरेव तु लिङ्गानि प्राणस्थानि तु सर्वशः ॥ २५० ॥

**॥ ॐ न वक्तुरात्मोपदेशादिति चेदध्यात्मसम्बन्धभूमाह्यस्मिन् ॐ ॥ १-१-२९ ॥**

प्राणसंवादपूर्वाणि मुख्यतो जीवगानि च ।
अभ्यार्चच्छतवर्षाणि प्राणवंशत्वमित्यपि ॥ २५१ ॥

**॥ ॐ शास्त्रदृष्ट्या तूपदेशो वामदेववत् ॐ ॥ १-१-३० ॥**

**॥ ॐ जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात् ॐ ॥ १-१-३१ ॥**

॥ इति अन्तिमप्राणाधिकरणम् ॥ १२ ॥

[**पादार्थोपसंहारः**]

तस्मादन्यत्रगैः शब्दैरुक्तन्यायैः समन्ततः ।
एको नारायणो देवो भण्यते नात्र संशयः ॥ २५२ ॥

वासुदेवादिरूपेण चतुर्मूर्तिश्च सर्वशः ।
अथवा पञ्चमूर्तिः स प्रोक्तोऽधिकरणं प्रति ॥ २५३ ॥

प्रतिसूत्रं प्रतिपदं प्रत्यक्षरमथापि वा ।
तैस्तैर्युक्तिश्रुतिन्यायविशेषैर्योग्यता यथा ॥ २५४ ॥

बृहत्तन्त्रप्रमाणेन बह्वर्थमपि सङ्ग्रहात् ।
उच्यते नरबुद्धीनामपि किञ्चिद्ब्रहार्थतः ॥ २५५ ॥

ग्रन्थोऽयमपि बह्वर्थो भाष्यं चात्यर्थविस्तरम् ।
बहुज्ञा एव जानन्ति विशेषेणार्थमेतयोः ॥ २५६ ॥

तस्मान् महागुणो विष्णुर्नाम्नामपुनरुक्तितः ।

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीमद्ब्रह्मसूत्रानुव्याख्याने प्रथमाध्यायस्य प्रथमः पादः ॥

***

## प्रथमाध्यायस्य द्वितीयः पादः

**[अन्यत्र प्रसिद्धलिङ्गात्मकशब्दसमन्वयारम्भः]**

लिङ्गात्मकानां शब्दानां वृत्तिर्नारायणे परे ॥ २५७ ॥

चिन्त्यते ........... ........... ...........

### सर्वगतत्वाधिकरणम् - १

**॥ ॐ सर्वत्र प्रसिद्धोपदेशात् ॐ ॥ १-२-१ ॥**

**॥ ॐ विवक्षितगुणोपपत्तेश्च ॐ ॥ १-२-२ ॥**

**[सत्तालिङ्गसमन्वयः]**

........... सर्वगत्वं तु प्रथमं प्रविचार्यते ।
तत्र तत्र स्थितो विष्णुस्तत्तच्छक्तिप्रबोधकः ॥ २५८ ॥

दूरतोऽप्यतिशक्तः स लीलया केवलं प्रभुः ।
इति ज्ञापयितुं ........... ...........

**॥ ॐ अनुपपत्तेस्तु न शारीरः ॐ ॥ १-२-३ ॥**

**॥ ॐ कर्मकर्तृव्यपदेशाच्च ॐ ॥ १-२-४ ॥**

**॥ ॐ शब्दविशेषात् ॐ ॥ १-२-५ ॥**

**॥ ॐ स्मृतेश्च ॐ ॥ १-२-६ ॥**

**॥ ॐ अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च ॐ ॥ १-२-७ ॥**

**॥ ॐ संभोगप्राप्तिरितिचेन्न वैशेष्यात् ॐ ॥ १-२-८ ॥**

[कर्तृकर्मभावस्य उत्सर्गतः भेदव्याप्तत्वम्]

........... कर्मकर्त्रोरुत्सर्गतो भिदा ॥ २५९ ॥

[अपवादे सति अभेदः, प्रकृते न अपवादः]

अभेदोऽपि विशेषे स्यात् बली सोऽप्यनपोदितः ।

[एतत्पादीयाधिकरणोपाधयः]

एतद्भावाभिधं लिङ्गं क्रियालिङ्गे ततः परम् ॥ २६० ॥

अन्तर्याम्यन्तरश्चेति क्रियाभावाख्यमुच्यते ।
अदृश्यत्वाद्यभावाख्यं श्रुतिर्लिङ्गाधिका परा ॥ २६१ ॥

॥ इति सर्वगतत्वाधिकरणम् ॥ १ ॥

**अत्तृत्वाधिकरणम् - २**

**॥ ॐ अत्ता चराचरग्रहणात् ॐ ॥ १-२-९ ॥**

**॥ ॐ प्रकरणाच्च ॐ ॥ १-२-१० ॥**

[**क्रियालिङ्गसमन्वयः, अदनादिक्रियायाः अनित्यत्वेन परमेश्वरस्वरूपत्वं कथमित्याक्षेपः**]

अनित्यत्वात्क्रियाणां तु कथमेव स्वरूपता ।

[**परमेश्वरक्रियायाः नित्यत्वसमर्थनेन परिहारः**]

इति चेत् स विशेषोऽपि क्रियाशक्त्यात्मना स्थिरः।। २६२ ।।

शक्तिता व्यक्तिता चेति ........... ...........

[**विशेषस्य स्वनिर्वाहकत्वम्**]

............. ......... विशेषोऽपि विशेषवान् ।

अभिन्नोऽपि ........... ................

[**परमेश्वरक्रियाया नित्यत्वे पराऽस्य शक्तिरित्यादिश्रुतिः प्रमाणम्**]

........ क्रियादिश्च स्वभाव इति हि श्रुतिः ।। २६३ ।।

[**तत्रैव स्पष्टश्रुतिः**]

''ज्ञानं नित्यं क्रिया नित्या बलं शक्तिः परात्मनः ।
नित्यानन्दोऽव्ययः पूर्णो भगवान् विष्णुरच्युतः'' ।।२६४।।

इति पैङ्गिश्रुतिश्चाह ........... ...........

[**ईश्वरक्रियाया नित्यत्वं अन्यक्रियाया अनित्यत्वमित्यत्र प्रमाणम्**]

........... .......... ''शक्तिसद्भाव एव तु ।
क्रियादिनित्यता ज्ञेया तदन्यत्र त्वनित्यता'' ।। २६५ ।।

इति सत्तत्ववचनम् ........... ...........

।। इति अत्तृत्वाधिकरणम् ।। २ ।।

**गुहाधिकरणम् - ३**

**।। ॐ गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ॐ ।। १-२-११ ।।**

**[फलभोगरूपक्रियालिङ्गसमन्वयः]**

........... ........... द्वित्वं चैकस्य युज्यते ।

**।। ॐ विशेषणाच्च ॐ ।। १-२-१२ ।।**

यः सेतुरिति चैकत्ववचनेन विशेषणात् ।। २६६ ।।

।। इति गुहाधिकरणम् ।। ३ ।।

**अन्तराधिकरणम् - ४**

**।। ॐ अन्तर उपपत्तेः ॐ ।। १-२-१३ ।।**

**।। ॐ स्थानादिव्यपदेशाच्च ॐ ।। १-२-१४ ।।**

**[क्रियाभावरूपलिङ्गसमन्वयः]**

अन्तःस्थित्वा रमणकृदन्तरः स उदाहृतः ।
रमणं चात्मशब्देनाऽऽदेयं मातीति चोच्यते ।। २६७ ।।

**।। ॐ सुखविशिष्टाभिधानादेव च ॐ ।। १-२-१५ ।।**

**।। ॐ श्रुतोपनिषत्कगत्यभिधानाच्च ॐ ।। १-२-१६ ।।**

[पूर्णसुखाभिधानात् चक्षुरन्तस्थः विष्णुरेव]

विशिष्टसुखवत्वाच्च ब्रह्मत्वं च विशिष्टता ।

**।। ॐ अनवस्थितेरसम्भवाच्च नेतरः ॐ ।। १-२-१७ ।।**

**[परमेश्वरप्रेरणयैव इतरेषां नियम्यनियामकभावः, अन्यथा अनवस्थित्यसम्भवौ स्याताम्]**

अन्योन्यनियतिश्चेशनियमे नान्यथा भवेत् ।। २६८ ।।

चेतनानां विशेषो यः स्वभावोऽपीश्वरार्पितः ।
अन्योन्यनियमे तस्मादनवस्थित्यसम्भवौ ।। २६९ ।।

**[अक्ष्यादित्यस्थः ईश्वर एव]**

ईश्वरश्चेन्नियन्ता स्यात्स एव प्रथमागतः ।
किमित्यपोद्यते कस्माद्वृथाऽवस्थितिकल्पना ।। २७० ।।

दोषवत्येव तस्मात्सा नैव कार्या कथञ्चन ।

।। इति अन्तराधिकरणम् ।। ४ ।।

**अन्तर्याम्यधिकरणम् - ५**

**।। ॐ अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात् ॐ ।। १-२-१८ ।।**

**।। ॐ न च स्मार्तमतद्धर्माभिलापात् ॐ ।। १-२-१९ ।।**

**।। ॐ शारीरश्चोभयेऽपि हि भेदेनैनमधीयते ॐ ।। १-२-२० ।।**

**[जगतः ईश्वराधीनसत्ताकत्वात् सर्वनियामकत्वेऽपि न रमणविरोधः]**

रमणं नातियत्नस्य विक्षेपादेव युज्यते ।। २७१ ।।

इति चेत्सर्वनियमो यस्य कस्मान्न शक्यते ।
स्वात्मनाऽनियतं वस्तु प्रतीपं ह्यात्मनो भवेत् ।। २७२ ।।

स्वाधीनसत्ताशक्त्यादि कथमात्मप्रतीपकम् ।
।। इति अन्तर्याम्यधिकरणम् ।। ५ ।।

**अदृश्यत्वाधिकरणम् - ६**

**।। ॐ अदृश्यत्वादिगुणको धर्मोक्तेः ॐ ।। १-२-२१ ।।**

**।। ॐ विशेषणभेदव्यपदेशाभ्यां च नेतरौ ॐ ।।१-२-२२।।**

**।। ॐ रूपोपन्यासाच्च ॐ ।। १-२-२३ ।।**

**[अदृश्यत्वादीनामभावत्वात् ब्रह्मणाऽभेदो न युज्यत इत्याक्षेपः]**

गुणक्रियादयो भावा यदि वा स्युरभेदिनः ।। २७३ ।।

अभेदोऽभावधर्माणां ब्रह्मणा युज्यते कथम् ।

**[अदृश्यत्वादिशब्दैः दृश्यत्वाद्यन्योन्याभावाभिधानम्, अन्योन्याभावस्य धर्मिस्वरूपत्वमिति परिहारः]**

नाभावो भाव इति च विशेषः प्रायशो भवेत् ।। २७४ ।।

अतद्भावोऽन्यता चेति न विशेषोऽस्ति कश्चन ।
दोषाभावो गुण इति प्रसिद्धो लौकिकेष्वपि ।। २७५ ।।

**[अदृश्यत्वादयो गुणाः]**

अदृश्यत्वादिकांस्तस्माद् गुणानाह स्वयं प्रभुः ।

**[भावाभावयोरैक्ये तयोर्विरोधाभाव इति शङ्कायाः परिहारः]**

भावाभावविरोधोऽपि न तु सर्वत्र विद्यते ॥ २७६ ॥

तदभावो हि तद्भावविरोधी न ततोऽपरः ।

**[पृथक्त्वान्योन्याभावस्वरूपभेदानामैक्यम्]**

पृथक्त्वाभावतद्रूपान् भेदांस्त्रीन् कल्पयन्ति चेत् ॥ २७७ ॥

कल्पनागौरवाद्यास्तु दोषास्तत्र विरोधिनः ।
पृथक्त्वान्यत्वभेदास्तु पर्यायेणैव लौकिकैः ॥ २७८ ॥

व्यवह्रियन्ते सततं वैदिकैरपि सर्वशः ।
दृष्टहानिरदृष्टस्य कल्पनेत्येव दूषणम् ॥ २७९ ॥

यदा तदधिको दोषो विद्यते को नु वादिनाम् ।
भावाभावस्वरूपास्तु विशेषा एव वस्तुनः ॥ २८० ॥

अभिन्ना एव सङ्ग्राह्या व्यवहारप्रसिद्धये ।

**[गुणक्रियादीनां द्रव्यस्य च अत्यन्तभेदवादिभिः भेदाभेदवादिभिश्च विशेषोऽङ्गीकार्यः]**

यथैकः समवायोऽपि भेदाभेदौ च वस्तुनि ॥ २८१ ॥

अङ्गीकार्या विशेषेण स्थानेषु व्यवहर्तृभिः ।

**[अखण्डवादिनापि विशेषोऽङ्गीकार्यः]**

अखण्डवादिनोऽपि स्याद्विशेषोऽनिच्छतोऽप्यसौ ॥ २८२ ॥

व्यावृत्ते निर्विशेषे तु किं व्यावर्त्यबहुत्वतः ।
।। इति अदृश्यत्वाधिकरणम् ।। ६ ।।

**वैश्वानराधिकरणम् - ७**

**।। ॐ वैश्वानरः साधारणशब्दविशेषात् ॐ ।। १-२-२४ ।।**

**।। ॐ स्मर्यमाणमनुमानं स्यादिति ॐ ।। १-२-२५ ।।**

[**पादद्वयार्थोपसंहारः**]

बहुलिङ्गसमायुक्तैर्बहुभी रूढनामभिः ।। २८३ ।।

प्रसिद्धैरन्यगत्वेन वाच्यः साक्षाज्जनार्दनः ।

[**वैश्वानराधिकरणतात्पर्यम्**]

वैश्वानरादयः शब्दा अपि तद्वाचिनस्ततः ।। २८४ ।।

**।। ॐ शब्दादिभ्योऽन्तःप्रतिष्ठानान्नेति चेन्न तथा दृष्ट्युपदेशादसम्भवात् पुरुषविधमपि चैनमधीयते ॐ ।। १-२-२६ ।।**

**।। ॐ अत एव न देवता भूतं च ॐ ।। १-२-२७ ।।**

**।। ॐ साक्षादप्यविरोधं जैमिनिः ॐ ।। १-२-२८ ।।**

**।। ॐ अभिव्यक्तेरित्याश्मरथ्यः ॐ ।। १-२-२९ ।।**

**।। ॐ अनुस्मृतेर्बादरिः ॐ ।। १-२-३० ।।**

**।। ॐ सम्पत्तेरिति जैमिनिस्तथा हि दर्शयति ॐ ।। १-२-३१ ।।**

**।। ॐ आमनन्ति चैनमस्मिन् ॐ ।। १-२-३२ ।।**

[**'शब्दादिभ्यः' इति सूत्रतात्पर्यम्,**
**अन्यादिश्रुतिहोमाधिकरणत्वादिलिङ्गानि विष्णुपराण्येव**]

तानि लिङ्गानि ते शब्दा अपि तद्वा हि सर्वशः ।
बहुलाऽप्यङ्गरूढिस्तत् प्राङ्गरूढिं न बाध्यते ।। २८५ ।।

।। इति वैश्वानराधिकरणम् ।। ७ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीमद्ब्रह्मसूत्रानुव्याख्याने प्रथमाध्यायस्य द्वितीयः पादः ।।

## प्रथमाध्यायस्य तृतीयः पादः

[**तत्र अन्यत्र च प्रसिद्धानां लिङ्गनां नाम्नां च समन्वयः**]

तत्रान्यत्र प्रसिद्धानां लिङ्गनाम्नां पुनर्हरिः ।
विशेषान्मुख्यतो वृत्तिं स्वस्मिन्नेवात्र वक्त्यजः ।। २८६ ।।

**द्युभ्वाद्यधिकरणम् - १**

**।। ॐ द्युभ्वाद्यायतनं स्वशब्दात् ॐ ।। १-३-१ ।।**

**।। ॐ मुक्तोपसृप्यव्यपदेशात् ॐ ।। १-३-२ ।।**

**।। ॐ नानुमानमतच्छब्दात् ॐ ।। १-३-३ ।।**

**।। ॐ प्राणवच्च ॐ ।। १-३-४ ।।**

**।। ॐ भेदव्यपदेशात् ॐ ।। १-३-५ ।।**

**।। ॐ प्रकरणात् ॐ ।। १-३-६ ।।**

**।। ॐ स्थित्यदनाभ्यां च ॐ ।। १-३-७ ।।**

[**'यस्मिन् द्यौः' इत्यादिश्रुतौ आत्मशब्दः विष्णावेव प्रसिद्धः**]

विष्णावेवात्मशब्दस्य रूढत्वान्न शिवादिकान् ।
श्रुतिर्वक्ति .............. ...............

।। इति द्युभ्वाद्यधिकरणम् ।। १ ।।

**भूमाधिकरणम् - २**

**।। ॐ भूमा सम्प्रसादादध्युपदेशात् ॐ ।। १-३-८ ।।**

**।। ॐ धर्मोपपत्तेश्च ॐ ।। १-३-९ ।।**

[**पूर्णसुखरूपत्वाभिधानात् भूमा विष्णुरेव**]

........अखिलेशत्वात् भूमा विष्णुः सुखाधिकः ।। २८७ ।।

।। इति भूमाधिकरणम् ।। २ ।।

**अक्षराधिकरणम् - ३**

**।। ॐ अक्षरमम्बरान्तधृतेः ॐ ।। १-३-१० ।।**

**।। ॐ सा च प्रशासनात् ॐ ।। १-३-११ ।।**

**।। ॐ अन्यभावव्यावृत्तेश्च ॐ ।। १-३-१२ ।।**

[**'अस्थूलमनणु' इत्यादिविरुद्धधर्माणां ब्रह्मणि अविरोधेनैव सहावस्थानम्**]

अतो विरुद्धवद्भातमपि व्याख्याय तत्त्वतः ।
योजनीयं हरौ वाक्यं विरुद्धैर्लक्षणैर्युतम्   ।। २८८ ।।

ब्रह्मैव तानि लिङ्गानि तदन्यत्र त्वसन्त्यपि ।
अविरोधेन गोविन्दे सन्त्यस्थूलादिकानि च ॥ २८९ ॥

**[ब्रह्मणः न निस्स्वभावत्वम्]**

अन्यवस्तुस्वभावानां स्थौल्यादीनामपाकृतिम् ।
नारायणे श्रुतिर्वक्ति न तु तस्यास्वभावताम् ॥ २९० ॥

सर्वधर्मा सर्वनामा सर्वकर्मा गुणाः श्रुताः ।
दोषाः श्रुताश्च नेत्याद्या प्रमाणं श्रुतिरत्र च ॥ २९१ ॥

॥ इति अक्षराधिकरणम् ॥ ३ ॥

**सदधिकरणम् - ४**

**॥ ॐ ईक्षतिकर्मव्यपदेशात् सः ॐ ॥ १-३-१३ ॥**

॥ इति सदधिकरणम् ॥ ४ ॥

**दहराधिकरणम् - ५**

**॥ ॐ दहर उत्तरेभ्यः ॐ ॥ १-३-१४ ॥**

**॥ ॐ गतिशब्दाभ्यां तथाहि दृष्टं लिङ्गं च ॐ ॥ १-३-१५ ॥**

**॥ ॐ धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः ॐ ॥१-३-१६॥**

**॥ ॐ प्रसिद्धेश्च ॐ ॥ १-३-१७ ॥**

**॥ ॐ इतरपरामर्शात् स इति चेन्नासम्भवात् ॐ ॥ १-३ -१८ ॥**

**।। ॐ उत्तराच्चेदाविर्भूतस्वरूपस्तु ॐ ।। १-३-१९ ।।**

**।। ॐ अन्यार्थश्च परामर्शः ॐ ।। १-३-२० ।।**

**।। ॐ अल्पश्रुतेरिति चेत्तदुक्तम् ॐ ।। १-३-२१ ।।**

।। इति दहराधिकरणम् ।। ५ ।।

**अनुकृत्यधिकरणम् - ६**

**।। ॐ अनुकृतेस्तस्य च ॐ ।। १-३-२२ ।।**

**।। ॐ अपि स्मर्यते ॐ ।। १-३-२३ ।।**

।। इति अनुकृत्यधिकरणम् ।। ६ ।।

**वामनाधिकरणम् - ७**

**।। ॐ शब्दादेव प्रमितः ॐ ।। १-३-२४ ।।**

**।। ॐ हृद्यपेक्षया तु मनुष्याधिकारत्वात् ॐ ।। १-३-२५ ।।**

**[एतत्पादाधिकरणविषयपूर्वपक्षसिद्धान्तन्यायसङ्ग्रहः]**

लिङ्गं साधारणं शब्दौ स्थानं लिङ्गमनुग्रहः ।
पुनः शब्दा लिङ्गशब्दौ विचार्या द्विःस्थिता इह ।। २९२ ।।

बाहुल्यं लिङ्गशब्दानाम् अनुक्तिश्च विरुद्धता ।
अदृष्टिरन्वयाभावो विपरीतश्रुतिभ्रमः ।। २९३ ।।

लिङ्गावकाशराहित्यभ्रमस्तादृग्द्वयं तथा ।
बहुतादृक्त्वमुक्तस्य विरोधोऽर्थात्तथागतिः ।। २९४ ।।

समस्तमेतदित्यत्र पूर्वपक्षेषु युक्तयः ।
ता एव बलवत्यस्तु गत्यन्तरविवर्जिताः ॥ २९५ ॥

सिद्धान्तयुक्तयो ज्ञेया दृश्यन्ते ताश्च सर्वशः ।
**[सूत्रेषु साक्षादुक्ताः सिद्धान्तन्यायाः]**
मुक्तोपसृप्यता प्राणादाधिक्यं सर्वतस्तथा ॥ २९६ ॥

वैलक्षण्यं स्वभावस्य प्रेक्षापूर्वा क्रिया तथा ।
अरस्य ण्यस्य चेशत्वं सूर्याद्यनुकृतिस्तथा ॥ २९७ ॥

वामनाख्या सर्वकम्पस्तच्छब्दानन्यसिद्धता ।
अनामरूपता भेदस्योपजीव्यप्रमाणता ॥ २९८ ॥

सर्वैश्वर्यादिकाद्यास्ता वेदेशेन प्रदर्शिताः ।
**[देवताऽधिकरणापशूद्राधिकरणयोः समन्वयसमर्थनार्थत्वाभावेऽपि देवादीनामधिकारसमर्थनार्थत्वेन त्रैवर्णिकव्यतिरिक्तानां तदभावसमर्थनार्थत्वेन च प्रसङ्गादुपन्यासः]**
अधिकारश्च तद्धानिः प्रसङ्गादेव चिन्तितौ ॥ २९९ ॥

॥ इति वामनाधिकरणम् ॥ ७ ॥

### देवताधिकरणम् - ८

**॥ ॐ तदुपर्यपि बादरायणः सम्भवात् ॐ ॥ १-३-२६ ॥**

**॥ ॐ विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात् ॐ ॥ १-३-२७ ॥**

**।। ॐ शब्द इति चेन्नातः प्रभवात् प्रत्यक्षानुमानाभ्याम् ॐ ।। १-३-२८ ।।**

**।। ॐ अत एव च नित्यत्वम् ॐ ।। १-३-२९ ।।**

**।। ॐ समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात् स्मृतेश्च ॐ ।। १-३-३० ।।**

**।। ॐ मध्वादिष्वसम्भवादनधिकारं जैमिनिः ॐ ।। १-३-३१ ।।**

**।। ॐ ज्योतिषि भावाच्च ॐ ।। १-३-३२ ।।**

**।। ॐ भावं तु बादरायणोऽस्ति हि ॐ ।। १-३-३३ ।।**

**[देवानामधिकारविषये जैमिनिबादरायणमतयोर्भिन्नविषयत्वेनाविरोधः]**

तत्फलाय विधिः सिद्धे चोपासाया निराकृतिः ।
यतो जैमिनिनाऽन्यार्थम् असिद्धेऽर्थे विधिस्तथा ।। ३०० ।।

विद्याधिराजस्य मतमविरोधस्तयोस्ततः ।

**[देवानामुपासनाविधानोपपत्तिः]**

मोक्षे फलविशेषोऽस्ति न च सर्वं प्रकाशते ।। ३०१ ।।

सर्वदा तेन देवानामपि युक्ता ह्युपासना ।

**[परमेश्वरव्यतिरिक्तानां न सर्वज्ञत्वम्]**

नित्यं वृद्धिक्षयापेतं विष्णोः पूर्णं तु वेदनम् ।। ३०२ ।।

स्पष्टातिस्पष्टविशदं ब्रह्मणोऽशेषवस्तुगम् ।
अन्येषां क्रमशो ज्ञानं मितवस्तुगतं सदा ।। ३०३ ।।

**[भगवान् बादरायणः अशेषविशेषज्ञः, जैमिनिस्तु सामान्यवेदी]**

इत्यादयो विशेषास्तु सदा विद्यापतेर्हृदि ।
जैमिन्याद्यास्तु सामान्यवेत्तृत्वात्तत्तथाऽवदन् ।। ३०४ ।।

विद्येशमतमेतस्मान्नैव सद्भिर्विरुध्यते ।

।। इति देवताधिकरणम् ।। ८ ।।

**अपशूद्राधिकरणम् - ९**

**।। ॐ शुगस्य तदनादरश्रवणात् तदाद्रवणात् सूच्यते हि ॐ ।। १-३-३४ ।।**

**।। ॐ क्षत्रियत्वावगतेश्चोत्तरत्र चैत्ररथेन लिङ्गात् ॐ ।। १-३-३५ ।।**

**।। ॐ संस्कारपरामर्शात्तदभावाभिलापाच्च ॐ ।।१-३-३६।।**

**।। ॐ तदभावनिर्धारणे च प्रवृत्तेः ॐ ।। १-३-३७ ।।**

**।। ॐ श्रवणाध्ययनार्थप्रतिषेधात् स्मृतेश्च ॐ ।।१-३-३८।।**

।। इति अपशूद्राधिकरणम् ।। ९ ।।

**कम्पनाधिकरणम् - १०**

**।। ॐ कम्पनात् ॐ ।। १-३-३९ ।।**

।। इति कम्पनाधिकरणम् ।। १० ।।

**ज्योतिरधिकरणम् - ११**

**।। ॐ ज्योतिर्दर्शनात् ॐ ।। १-३-४० ।।**

।। इति ज्योतिरधिकरणम् ।। ११ ।।

**आकाशाधिकरणम् - १२**

**।। ॐ आकाशोऽर्थान्तरत्वादिव्यपदेशात् ॐ ।।१-३-४१।।**

।। इति आकाशाधिकरणम् ।। १२ ।।

**सुषुप्त्यधिकरणम् -१३**

**।। ॐ सुषुप्त्युत्क्रान्त्योर्भेदेन ॐ ।। १-३-४२ ।।**

।। इति सुषुप्त्यधिकरणम् ।। १३ ।।

**ब्राह्मणाधिकरणम् - १४**

**।। ॐ पत्यादिशब्देभ्यः ॐ ।। १-३-४३ ।।**

।। इति ब्राह्मणाधिकरणम् ।। १४ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीमद्ब्रह्मसूत्रानुव्याख्याने प्रथमाध्यायस्य तृतीयः पादः ।।

***

# प्रथमाध्यायस्य चतुर्थः पादः

[अन्यत्रैव प्रसिद्धशब्दसमन्वयारम्भः]

## आनुमानिकाधिकरणम् - १

**।। ॐ आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च ॐ ।। १-४-१ ।।**

**।। ॐ सूक्ष्मं तु तदर्हत्वात् ॐ ।। १-४-२ ।।**

**।। ॐ तदधीनत्वादर्थवत् ॐ ।। १-४-३ ।।**

[सर्वेश्वरत्वविरोधिदुःखिबद्धादिशब्दसमन्वयः]

दुःखिबद्धावराद्यास्तु तदधीनत्वहेतुतः ।। ३०५ ।।

शब्दा ब्रह्मणि वर्तन्ते राज्ञि यद्वत्पराजयः ।
स्वातन्त्र्यं तद्गतत्वं च शब्दवृत्तेर्हि कारणम् ।। ३०६ ।।

स्वातन्त्र्यं तत्र मुख्यं स्यात् कुतो राज्ञि जयोऽन्यथा ।
न हि भृत्यस्य विजयिशब्दस्तावत्प्रयुज्यते ।। ३०७ ।।

यावद्राज्ञ्यन्यगत्वेऽपि स्वातन्त्र्याभासमात्रतः ।
भृत्यबन्धादिकं राज्ञि राज्ञो बन्धादियोग्यतः ।। ३०८ ।।

कारणं संशयस्य स्यादिति नैव प्रयुज्यते ।
अमङ्गलत्वाच्छब्दानां राज्ञो योगादमङ्गले ।। ३०९ ।।

अप्रियत्वात्तु शब्दस्य स्यात्प्रयोगनिवर्तनम् ।
गुणास्तु तादृशा यत्र प्रयुज्यन्तेऽखिला अपि ।। ३१० ।।

पूज्येष्वेव विशेषेण स्वातन्त्र्यं मुख्यकारणम् ।
अतो दोषातिदूरत्वात् संशयस्याप्यसम्भवात्  ।। ३११ ।।

दोषाणां विष्णुगत्वस्य प्राज्ञबुद्धिव्यपेक्षया ।
स्वातन्त्र्यार्थमभिप्रेत्य दोषशब्दाश्च विष्णवि  ।। ३१२ ।।

वासुदेवश्रुतिश्चाह ''नैव विष्णावमङ्गलम् ।
मङ्गलामङ्गलेऽन्यत्र ततो नामङ्गलं वदेत्  ।। ३१३ ।।

स्वातन्त्र्यापेक्षया विष्णौ दोषो नामङ्गलोक्तितः ।
बहुभुक्त्वं यथा दोषो नृषु नैव हरौ क्वचित्  ।। ३१४ ।।

एवं दुःख्यादिशब्दाश्च स्वातन्त्र्यापेक्षयोदिताः ।
नैव दोषा हरौ तद्बुद्ध्योक्ता दोषकारिणः  ।। ३१५ ।।

तस्मात्ते दोषशब्दाश्च तत्रैव गुणवाचकाः'' ।

**।। ॐ ज्ञेयत्वावचनाच्च ॐ ।। १-४-४ ।।**

**।। ॐ वदतीति चेन्न प्राज्ञो हि ॐ ।। १-४-५ ।।**

**।। ॐ प्रकरणात् ॐ ।। १-४-६ ।।**

**।। ॐ त्रयाणामेव चैवमुपन्यासः प्रश्नश्च ॐ ।। १-४-७ ।।**

**।। ॐ महद्वच्च ॐ ।। १-४-८ ।।**

**।। ॐ चमसवदविशेषात् ॐ ।। १-४-९ ।।**

।। इति आनुमानिकाधिकरणम् ।। १ ।।

ज्योतिरुपक्रमाधिकरणम् - २

।। ॐ ज्योतिरुपक्रमात्तु तथा ह्यधीयत एके ॐ ।। १-४-१० ।।

।। ॐ कल्पनोपदेशाच्च मध्वादिवदविरोधः ॐ ।।१-४-११।।

[**कर्मतदङ्गेष्वेव प्रसिद्धानां ज्योतिष्टोमादिशब्दानां हरौ समन्वयः**]

जातमोतं हरौ यस्माज्ज्योतिः, षः प्राणरूपतः ।। ३१६ ।।

आयजेतश्चायजेतो, वसन्तिश्च वसंस्ततः ।
विगतच्छादनत्वात्तु गच्छ, भूतक्षयङ्करः ।। ३१७ ।।

भुङ्क्षेत्युक्तो, हरिर्हुं च हुतमस्मिन् जगद्यतः ।
स्फुटत्वात् फडिति प्रोक्तः, कव रक्षण इत्यतः ।। ३१८ ।।

कवचं, वर्तते यस्मात् षड्गुणत्वेन सर्वदा ।
वषट्, तद्वत्वतस्तेषां वौषडित्येव कथ्यते ।। ३१९ ।।

स्वीयं स्वीकुरुते यस्मात्स्वाहेत्युक्तोजनार्दनः ।
नमन्त्यस्मिन् गुणा यस्मान्नम इत्येव कथ्यते ।। ३२० ।।

इत्यशेषक्रियानामशब्दैरेकोजनार्दनः ।
उच्यते मुख्यतो यस्मात् पदवर्णस्वरात्मभिः ।। ३२१ ।।

[**हरेरनन्तगुणत्वसिद्धिः अशेषक्रियानाम-शब्दसमन्वयस्य प्रयोजनम्**]

तस्मादनन्तगुणता श्रुतितात्पर्यतोऽस्य हि ।
विज्ञानार्थत्वतः सर्वशब्दानां नास्ति दूषणम् ।। ३२२ ।।

**[कर्मणां ब्रह्मज्ञानार्थत्वेन वाक्यसमन्वयोऽपि सङ्गच्छते]**

अङ्गीकृतेऽपि नैवास्ति दोषो वाक्यसमन्वये ।
तदर्थत्वेन कर्मादेः सम्भवादल्पबुद्धये   ।। ३२३ ।।

**[चतुर्मुखब्रह्मा योगार्थं जानाति]**

''कश्छन्दसां योगमि''ति श्रुतेर्योगार्थतत्त्ववित् ।
ब्रह्मैको नैव चान्योऽस्ति क इत्यस्योभयार्थतः   ।। ३२४ ।।

तस्यापि पूर्वसिद्धस्य ज्ञानमेवेति निश्चयात् ।
नित्ययोगोऽपि शब्दानामर्थैर्नैव निषिध्यते   ।। ३२५ ।।

।। इति ज्योतिरुपक्रमाधिकरणम् ।। २ ।।

**न सङ्ख्योपसङ्ग्रहाधिकरणम् - ३**

**।। ॐ न सङ्ख्योपसङ्ग्रहादपि नानाभावादतिरेकाच्च ॐ ।। १-४-१२ ।।**

**।। ॐ प्राणादयो वाक्यशेषात् ॐ ।। १-४-१३ ।।**

**।। ॐ ज्योतिषैकेषामसत्यन्ने ॐ ।। १-४-१४ ।।**

।। इति न सङ्ख्योपसङ्ग्रहाधिकरणम् ।। ३ ।।

**आकाशाधिकरणम् - ४**

**।। ॐ कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः ॐ ।। १-४-१५ ।।**

।। इति आकाशाधिकरणम् ।। ४ ।।

ज्योतिरुपक्रमाधिकरणम् - २

।। ॐ ज्योतिरुपक्रमात्तु तथा ह्यधीयत एके ॐ
।। १-४-१० ।।

।। ॐ कल्पनोपदेशाच्च मध्वादिवदविरोधः ॐ ।।१-४-११।।

[कर्मतदङ्गेष्वेव प्रसिद्धानां ज्योतिष्टोमादिशब्दानां हरौ समन्वयः]

जातमोतं हरौ यस्माज्ज्योतिः, षः प्राणरूपतः ।। ३१६ ।।

आयजेतश्चायजेतो, वसन्तिश्च वसंस्ततः ।
विगतच्छादनत्वात्तु गच्छ, भूतक्षयङ्करः ।। ३१७ ।।

भुङ्क्तेत्युक्तो, हरिर्हुं च हुतमस्मिन् जगद्यतः ।
स्फुटत्वात् फडिति प्रोक्तः, कव रक्षण इत्यतः ।। ३१८ ।।

कवचं, वर्तते यस्मात् षड्गुणत्वेन सर्वदा ।
वषट्, तद्गत्वतस्तेषां वौषडित्येव कथ्यते ।। ३१९ ।।

स्वीयं स्वीकुरुते यस्मात्स्वाहेत्युक्तोजनार्दनः ।
नमन्त्यस्मिन् गुणा यस्मान्नम इत्येव कथ्यते ।। ३२० ।।

इत्यशेषक्रियानामशब्दैरेकोजनार्दनः ।
उच्यते मुख्यतो यस्मात् पदवर्णस्वरात्मभिः ।। ३२१ ।।

[हरेरनन्तगुणत्वसिद्धिः अशेषक्रियानाम-
शब्दसमन्वयस्य प्रयोजनम्]

तस्मादनन्तगुणता श्रुतितात्पर्यतोऽस्य हि ।
विज्ञानार्थत्वतः सर्वशब्दानां नास्ति दूषणम् ।। ३२२ ।।

[कर्मणां ब्रह्मज्ञानार्थत्वेन वाक्यसमन्वयोऽपि सङ्गच्छते]

अङ्गीकृतेऽपि नैवास्ति दोषो वाक्यसमन्वये ।
तदर्थत्वेन कर्मादिः सम्भवादल्पबुद्धये   ।। ३२३ ।।

[चतुर्मुखब्रह्मा योगार्थं जानाति]

''कश्छन्दसां योगमि''ति श्रुतेर्योगार्थतत्त्ववित् ।
ब्रह्मैको नैव चान्योऽस्ति क इत्यस्योभयार्थतः   ।। ३२४ ।।

तस्यापि पूर्वसिद्धस्य ज्ञानमेवेति निश्चयात् ।
नित्ययोगोऽपि शब्दानामर्थैर्नैव निषिध्यते   ।। ३२५ ।।

।। इति ज्योतिरुपक्रमाधिकरणम् ।। २ ।।

## न सङ्ख्योपसङ्ग्रहाधिकरणम् - ३

**।। ॐ न सङ्ख्योपसङ्ग्रहादपि नानाभावादतिरेकाच्च ॐ ।। १-४-१२ ।।**

**।। ॐ प्राणादयो वाक्यशेषात् ॐ ।। १-४-१३ ।।**

**।। ॐ ज्योतिषैकेषामसत्यन्ने ॐ ।। १-४-१४ ।।**

।। इति न सङ्ख्योपसङ्ग्रहाधिकरणम् ।। ३ ।।

## आकाशाधिकरणम् - ४

**।। ॐ कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः ॐ ।। १-४-१५ ।।**

।। इति आकाशाधिकरणम् ।। ४ ।।

समाकर्षाधिकरणम् - ५

।। ॐ समाकर्षात् ॐ ।। १-४-१६ ।।

।। ॐ जगद्वाचित्वात् ॐ ।। १-४-१७ ।।

।। ॐ जीवमुख्यप्राणलिङ्गादिति चेत्तद्व्याख्यातम् ॐ ।। १-४-१८ ।।

।। ॐ अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके ॐ ।। १-४-१९ ।।

।। ॐ वाक्यान्वयात् ॐ ।। १-४-२० ।।

।। ॐ प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः ॐ ।। १-४-२१ ।।

।। ॐ उत्क्रमिष्यत एवम्भावादित्यौडुलोमिः ॐ ।। १-४-२२ ।।

।। ॐ अवस्थितेरिति काशकृत्स्नः ॐ ।। १-४-२३ ।।

।। इति समाकर्षाधिकरणम् ।। ५ ।।

प्रकृत्यधिकरणम् - ६

।। ॐ प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ॐ ।।१-४-२४।।

।। ॐ अभिध्योपदेशाच्च ॐ ।। १-४-२५ ।।

।। ॐ साक्षाच्चोभयाम्नानात् ॐ ।। १-४-२६ ।।

।। ॐ आत्मकृतेः परिणामात् ॐ ।। १-४-२७ ।।

।। ॐ योनिश्च हि गीयते ॐ ।। १-४-२८ ।।

।। इति प्रकृत्यधिकरणम् ।। ६ ।।

## एतेन सर्वे व्याख्याताधिकरणम् - ७

**।। ॐ एतेन सर्वे व्याख्याता व्याख्याताः ॐ ।।१-४-२९।।**

**[प्रकृत्यधिकरणेन एतेन सर्वेव्याख्याताधिकरणेन च प्रतिपाद्यानामर्थानां सङ्ग्रहः]**

स्त्रीशब्दाश्च निषेधार्थाः सर्वेऽपि ब्रह्मवाचकाः ।
विरोधिसर्वबाहुल्यकारणस्त्रीनिषेधिनाम्    ।। ३२६ ।।

पृथक्समन्वयार्थानि स्थानान्येतानि सर्वशः ।

**[एतत्पादीयसर्वाधिकरणपूर्वपक्षयुक्तिसङ्ग्रहः]**

सर्वमानैर्विरोधश्च व्युत्पत्तेरप्यशक्यता    ।। ३२७ ।।

परस्परविरोधश्च विरोधः कार्यतद्वतोः ।
स्त्रीलिङ्गत्वं निषेधश्च पूर्वपक्षेषु युक्तयः    ।। ३२८ ।।

**[सिद्धान्तयुक्तिसङ्ग्रहः]**

दोषात्यस्पृष्टिनियमः शब्दार्थानेकता तथा ।
बहुरूपत्वमीशस्य व्यक्त्यव्यक्तिविशेषिता    ।। ३२९ ।।

उत्पादनं स्वदेहाच्च दुर्जनाव्यक्तता तथा ।
इत्यादियुक्तयः साक्षात् सिद्धान्तस्थापिका इह    ।। ३३० ।।

**[समाकर्षाधिकरणे वाक्यान्वयप्रतिपादनस्य जैमिन्यादिमतानुवादस्य च प्रयोजनम्]**

अन्वयः सर्वशब्दानामशक्यो ज्ञातुमञ्जसा ।
इति यल्लोकवैमुख्यं जैमिन्यादिमतं वदन्    ।। ३३१ ।।

विद्याधिनाथो भगवानपाचक्रे स्वयं प्रभुः ।
स्वशिष्याणां प्रसिद्ध्यर्थं मतमात्मीयमंशतः ॥ ३३२ ॥

विज्ञातं तैर्जगादात्र तारतम्यं नृणां वदन् ।

['कल्पनोपदेशा'दिति सूत्रतात्पर्यम्]

तेषु तेषु पदार्थेषु रूढिरङ्गीकृता यतः ॥ ३३३ ॥

प्रयोजनबहुत्वेन तस्य तस्याविरोधतः ।
उपदेशादिसामर्थ्याद्विष्णौ शक्तिश्च गृह्यते ॥ ३३४ ॥

[परमेश्वरस्य सर्वोत्तमत्वादिविरोधे अन्यार्थपरित्यागः]

तथाप्येतद्विरोधे तु तद्वाचित्वमपोद्यते ।
अविरोधे तु बह्वर्था एतन्मूलतया मताः ॥ ३३५ ॥

[पुरन्दरादिषु शब्दप्रवृत्तौ परमेश्वरस्यैव उपजीव्यत्वम्, पुरन्दरादयो मुख्यार्थाः, परमेश्वरः परममुख्यार्थः]

इतो हि रूढतान्येषामुपजीव्यत्वमत्र हि ।
तत्सिद्धिस्तदपेक्षा च सापेक्षा च हरीच्छया ॥ ३३६ ॥

तस्मात् परममुख्यत्वं विष्णावन्यत्र मुख्यता ।
उपलक्षणा च गौणी च तिस्रः शब्दस्य वृत्तयः ॥ ३३७ ॥

[परममुख्यवृत्तिः – महायोगः]

प्रवृत्तिहेतोर्बाहुल्यं ज्ञेयं परममुख्यता ।

[परममुख्यवृत्तिः – महायोगरूढिः]

तत्र प्रयोगबाहुल्यं यदि तत्परता किमु ॥ ३३८ ॥

उभयं दृश्यते विष्णौ शब्दानामपि सर्वशः ।

[रूढिस्वरूपम्]

प्रयोगमात्रबाहुल्यं रूढिरित्यभिधीयते     ।। ३३९ ।।

[गौणीस्वरूपम्, लक्षणास्वरूपं च]

प्रयोगयुक्तसादृश्यं सम्बन्धो वाप्यमुख्यतः ।
वृत्तिहेतुरिति ज्ञेयः .......... ............

[न मुख्यार्थानुपपत्तिः किन्तु मुख्यार्थानुपपत्तिदर्शनं अमुख्यार्थग्रहणे हेतुः]

.......... ............ पूर्वायोगेऽपरग्रहः     ।। ३४० ।।

['एतमेव सन्त'मित्यादिश्रुतिः शतर्च्यादिसर्वशब्दानां भगवति विद्वद्रूढिं दर्शयति]

एतमेव तथा सन्तं शतर्चीत्यादिनामभिः ।
आचक्षत इति ह्यत्र सन्तमित्यवधारणात्     ।। ३४१ ।।

योगस्य रूढेः प्राबल्यं विद्वद्रूढिं च तत्रगाम् ।
बहुशो दर्शयत्यञ्जस्तात्पर्यात्सनिरुक्तिकम्     ।। ३४२ ।।

[सर्वशब्दानां ब्रह्मवाचकस्य अकारस्य व्याख्यानरूपत्वात् विष्णोः सर्वशब्दवाच्यत्वम्]

अ इति ब्रह्म कथितं तद्व्याख्यानात्मता तथा ।
शब्दानामपि सर्वेषां .......... ............

[नामविदः कृतकृत्यत्वोक्तिः विष्णोः सर्वशब्दवाच्यत्वज्ञापिका]

.......... ............ नामवित्कृतकृत्यता     ।। ३४३ ।।

[सकलवैदिकसंहितानां पूर्वोत्तरवर्णानां च विष्णुनामार्थरूपत्वात् विष्णोः सर्वशब्दवाच्यत्वम्]

विष्णुनामार्थरूपत्वं संहितादेरथाब्रवीत् ।
णकारं च षकारं च बलचेष्टात्मकं वदन् ॥ ३४४ ॥

तज्ज्ञानपूर्वकत्वेन संहिताध्ययनं तथा ।
उपसर्गत्वतो वेस्तु ताच्छील्यार्थादुनस्तथा ॥ ३४५ ॥

णकारश्च षकारश्च नामरूपतया मतौ ।
तस्मात्समन्वयो विष्णौ स्वरवर्णपदात्मनः ॥ ३४६ ॥

अपि वेदस्य किमुत वाक्यरूपेण सङ्गतिः ।

[विष्णोः सर्वशब्दवाच्यत्वे स्पष्टश्रुतिः]

घोषाः सर्वेऽपि वेदाश्च सर्वे वेदाश्च यत्पदम् ॥ ३४७ ॥

इन्द्रं मित्रं यमिन्द्रं च प्रथमः सङ्गतिस्तथा ।
नामधाः सर्वदेवानामेक इत्यादिका श्रुतिः ॥ ३४८ ॥

प्रमाणमुक्तविषये .......... ............

[ज्योतिरुपक्रमाधिकरणे भगवतैव इदमुक्तम्]

.......... ............ तदेवोक्तमुपक्रमात् ।
इति स्वयं भगवता ब्रुवताशेषमन्वयम् ॥ ३४९ ॥

[प्रधानस्य अशाब्दत्वप्रतिपादनार्थोऽयं पाद इति व्याख्यानं न युक्तं, वेदादिषु प्रधानस्य प्रतिपादनात्]

न शब्दवाच्यतैवात्र प्रधानस्य निषिद्ध्यते ।
सर्ववेदेतिहासेषु पुराणेषु च सङ्ग्रहात् ॥ ३५० ॥

''सत्त्वं रजस्तम इति गुणाः प्रकृतिसम्भवाः ।
निबध्नन्ति महाबाहो देहे देहिनमव्ययम्''   ।। ३५१ ।।

इत्यादिवाक्यरूपेण यत्रार्थो नान्य इष्यते ।
तेजोऽबन्नात्मकं वापि यद्युपादानमिष्यते   ।। ३५२ ।।

अनाद्येवापराधः कः प्रधानमिति चोदिते ।
''अजामेका''मिति प्राह श्रुतिरेतां यदा तदा   ।। ३५३ ।।

को दोषः सर्वथैवास्ति परिणामि जडं यदि ।

**[अजादिशब्दाः परममुख्यया वृत्त्या परब्रह्मपराः, मुख्यमात्रतया प्रधानस्यापि प्रतिपादकाः]**

अस्माकं परमुख्यार्थो भगवानेक एव तु   ।। ३५४ ।।

मुख्यमात्रतया रूढं सर्वमभ्युपगम्यते ।
सर्वेषामपि शब्दानां गौणाद्यं तदयोगतः   ।। ३५५ ।।

**[ग्रन्थान्तरे सूत्रकारेण ब्रह्मणोऽन्यस्य मुख्यार्थमात्रत्वमङ्गीकृतम्]**

अर्थद्वयमभिप्रेत्य प्रवृत्ते हरिरुक्तवान् ।
''कार्याणां कारणं पूर्वं वचसां वाच्यमुत्तमम्   ।। ३५६ ।।

योगानां परमां सिद्धिं परमं ते पदं विदुः'' ।
इति .......... ......................

**[निरपवादप्रतीतिबलात् सर्वेषामपि शब्दानामुभयार्थत्वम्]**

...... बुद्धौ समारोहादुभयोर्योगरूढयोः   ।। ३५७ ।।

त्यागे च कारणाभावादुभयार्थत्वमिष्यते ।
विपरीतप्रमाभावे पूर्वारोहस्तु कारणम् ॥ ३५८ ॥

सा भवेद्यत्र स व्यर्थः पूर्वारोहो भ्रमो यथा ।

**[प्रधानस्य अशाब्दत्वनिरासोपसंहारः]**

अतो जगदुपादानं प्रधानं वक्ति सा श्रुतिः ॥ ३५९ ॥

**['न सङ्ख्योपसङ्ग्रहादपी'ति सूत्रस्यापव्याख्याननिरासः]**

**[सूत्रकारेणैव भागवते पञ्चविंशतितत्त्वाङ्गीकारप्रदर्शनम्]**

''यत्तत्त्रिगुणमव्यक्तं नित्यं सदसदात्मकम् ।
प्रधानं प्रकृतिं प्राहुरविशेषं विशेषवत् ॥ ३६० ॥

पञ्चभिः पञ्चभिर्ब्रह्म चतुर्भिर्दशभिस्तथा ।
एतच्चतुर्विंशतिकं गणं प्राधानिकं विदुः'' ॥ ३६१ ॥

इति भागवते प्राह विद्याधीशः स्वयं प्रभुः ।

**[प्रकृत्यधिकरणं ब्रह्मणो जगदुपादानताप्रतिपादनार्थमिति व्याख्याननिरासः]**

न च प्रकृतिशब्देन ब्रह्मोपादानमुच्यते ॥ ३६२ ॥

''अविकारः सदा शुद्धो नित्य आत्मा सदा हरिः ।
सदैकरूपविज्ञानबल आनन्दरूपकः'' ॥ ३६३ ॥

''निर्विकारोऽक्षरः शुद्धो निरातङ्कोऽजरोऽमरः ।
अविश्वो विश्वकर्ताजो यः परः सोऽभिधीयते'' ॥ ३६४ ॥

''निर्विकारमनौपम्यं सदैकरसमक्षयम् ।
ब्रह्मेति परमात्मेति यं विदुर्वैदिका जनाः''  ।। ३६५ ।।

इति श्रुतिपुराणोक्त्या न विकारी जनार्दनः ।

**[विकारप्रकाराः, ब्रह्मणः विकारित्वं युक्तिविरुद्धम्]**

पराधीनविशेषाप्तिरनिवर्त्योऽन्यथाभवः  ।। ३६६ ।।

क्षीरादिवद् विकारः स्यान्नैव स स्याद्धरेः क्वचित् ।

**[ब्रह्माधिष्ठितं प्रधानं जगदुपादानं,
न तु ब्रह्मणः विश्वात्मना भवः]**

अपादानत्वमेवास्य यद्युपादानतेष्यते  ।। ३६७ ।।

अङ्गीकृतं तत्पितृवन्न तु विश्वात्मना भवः ।

**[चेतनस्य ऊर्णनाभ्यादेः न उपादानत्वं, तदुपभुक्तान्नादेरेव उपादानत्वम्]**

न चोर्णनाभिजनितृमातॄणां च विकारिता  ।। ३६८ ।।

चेतनत्वात्तदन्नं हि कार्यरूपतया भवेत् ।

**[श्रुतिस्मृत्यादिषु ब्रह्मणः निमित्तत्वमेवोक्तम्]**

अपादानतया विश्वकर्तृत्वं बुद्धिपूर्वकम्  ।। ३६९ ।।

उक्तं भाल्लविशाखायां ब्रह्मतर्के च सादरम् ।
''इच्छामात्रात् प्रभोः सृष्टिरविकारस्य सर्वदा  ।। ३७० ।।

स्वभावोऽयमनन्तस्य रजो येनाभवज्जगत्'' ।
''स्वदेहादिच्छया विश्वं भुक्तपूर्वं जनार्दनः  ।। ३७१ ।।

ससर्ज मातापितृवदूर्णनाभिवदेव वा ।
प्रधानं परिणाम्येशो निर्विकारः स्वयं सदा" ।। ३७२ ।।

[चेतनस्य अचेतनविकारत्वं अचेतनस्य चेतनविकारत्वं वा क्वापि न दृष्टम्]

न चेतनविकारः स्याद्यत्र क्वापि ह्यचेतनम् ।
नाचेतनविकारोऽपि चेतनः स्यात्कदाचन ।। ३७३ ।।

[जगतः ब्रह्मणोऽन्यत्वात् न ब्रह्मविकारत्वम्]

न चान्यस्यान्यरूपत्वं विकृतत्वेऽपि दृश्यते ।
न क्षीरादन्यता दध्नः केनचिद्दृश्यते क्वचित् ।। ३७४ ।।

सर्वज्ञाद्ब्रह्मणोऽन्यत्वं जगतो ह्यनुभूयते ।
अभेदः सत्वमात्रेण स्यात्खर्वस्वर्णयोरपि ।। ३७५ ।।

भागेन परिणामश्चेद्भागयोर्भेद एव हि ।
यो भागो न विकारी स्यात्स एवास्माकमीश्वरः ।। ३७६ ।।

[सदनन्तानन्दचितां समुदायस्य ब्रह्मत्वमिति पक्षेऽपि ब्रह्मोपादानता ब्रह्मनिमित्तकता च न युज्यते]

भिन्नानां समुदायस्य नाम ब्रह्मेति तद्भवेत् ।
ब्रह्मोपादानता न स्यात्तदा विश्वस्य हि क्वचित् ।। ३७७ ।।

['शृङ्गात् शर' इत्यादिदृष्टान्तैः अवधित्वमेव प्रतीयते, न तु उपादानत्वम्]

शृङ्गाच्छरोऽविलोमभ्यो दूर्वा, गोमयतस्तथा ।
वृश्चिकश्चेत्येवमाद्येष्वपादानत्वमिष्यते ।। ३७८ ।।

उपादानैकदेशत्वं यद्यप्यत्र प्रदृश्यते ।
अप्यपादानतैवात्र दृष्टान्तो ब्रह्मणो भवेत्    ।। ३७९ ।।

न ह्युपादानतैवात्र बाह्यावयवगौरवात् ।

**[अचेतनं गोमयमचेतनस्य वृश्चिकदेहस्यैव उपादानं, न तु वृश्चिकस्य]**

न चाचेतनतस्तत्र चेतनस्य समुद्भवः    ।। ३८० ।।

उपादानतया किं तर्ह्युपादानं ह्यचेतनम् ।
कार्यदेहगतस्यास्य चेतनस्य प्रदृश्यते    ।। ३८१ ।।

**['सच्च त्यच्चे'त्यादिश्रुतौ ब्रह्मणः विश्वभावः नोच्यते]**

सच्च त्यच्चाभवदिति नास्य विश्वत्वमुच्यते ।
''तत्सृष्ट्वे''ति गिरैवास्य पूर्वं विश्वस्य सिद्धितः ।। ३८२ ।।

**['सच्च त्यच्चे'त्यादिश्रुत्यर्थः]**

सत्त्वात्ततेर्वैदिकत्वात् सम्यग्वक्तुमशक्यतः ।
आश्रयत्वात् स्वाश्रयत्वात् ज्ञानत्वाद् दुर्विदत्वतः ।। ३८३ ।।

सत्ततेर्यातनाच्चैव ह्यप्राप्यत्वाच्च दुर्जनैः ।
नित्यसाधुगुणव्याप्तियन्तृरूपत्वतः सदा    ।। ३८४ ।।

जगद्गतेन रूपेण ब्रह्मैव हि तथोच्यते ।
व्यक्तिरुक्तगुणानां हि पुरुषापेक्षया नृणाम्    ।। ३८५ ।।

भवेदभवदित्याद्यः प्रयोगश्चात्र युज्यते ।

**[ब्रह्मपरिणामनिरासोपसंहारः]**

तस्मादशेषकर्तैको निर्विकारो रमापतिः    ।। ३८६ ।।

शब्दैः प्रकृतिरित्याद्यैः स्त्रीलिङ्गैरभिधीयते ।

**[‘बहु स्याम्’ इतिश्रुतावपि ब्रह्मपरिणामः नोच्यते]**

बहु स्यामिति तस्यैव ह्युक्तमार्गेण युज्यते ।। ३८७ ।।

तत्तद्गतेन रूपेण तदर्थं ह्यसृजज्जगत् ।

**[ब्रह्मणः मिथ्याप्रपञ्चारोपाधिष्ठानत्वरूपमुपादानत्वमिति प्रतिपादयतो विवर्तवादस्य निरासः]**

यच्चाविकृतमेवैकं ब्रह्म विश्वात्मना मृषा ।। ३८८ ।।

दृश्यते मन्ददृष्ट्यैव स सर्ग इति कथ्यते ।

**[भ्रमस्य ब्रह्माश्रितत्वे सार्वज्ञभङ्गः, जीवाश्रितत्वे जीवब्रह्मभेदस्य वास्तवत्वम्]**

सा मन्ददृष्टिस्तस्यैव ब्रह्मणः किं ततोऽन्यगा ।। ३८९ ।।

ब्रह्मणश्चेत्क्व सार्वज्ञमन्यगा चेत्स्वतोऽन्यता ।

**[देहेन्द्रियाद्यनात्मप्रपञ्चमात्रस्य भ्रान्तिकल्पितत्वमित्यपि न युक्तम्]**

नादेहयोगिनो दृष्टिरिति तत्कारणं स्वतः ।। ३९० ।।

देहिनः कारणयुता देहाश्च यदि न भ्रमात् ।
किं भ्रान्तिकल्पितं तत्र .......... ..........

**[जीवब्रह्मणोर्भेदस्य भ्रान्तिकल्पितत्वेऽन्योन्याश्रयता]**

.......... .......... भेदोऽपि भ्रमजो यदि ।। ३९१ ।।

भ्रान्तेरज्ञानमूलत्वात्तस्य भेदव्यपेक्षया ।
नाज्ञानकल्पकं किञ्चिदन्योन्याश्रयता यतः ।। ३९२ ।।

['नेह नाने'त्यादिश्रुतिः प्रपञ्चस्य भ्रान्तिकल्पितत्वे प्रमाणमिति न युक्तम्]

भ्रमत्वे त्वियमुक्तिश्च तदन्तःपतनान्न हि ।

[प्रपञ्चस्य व्यावहारिकता न शक्याङ्गीकारा]

व्यावहारिकता चास्य स्यादबाध्यत्व एव हि ।। ३९३ ।।

बाध्यं नार्थक्रियाकारि .......... ..........

[स्वप्नस्यापि वासनाजनितत्वेन सत्यत्वम्]

.......... .......... न च स्वप्नोऽपि नो मृषा ।

वासनाजनितत्वेन तस्याप्यङ्गीकृतत्वतः ।। ३९४ ।।

''स हि कर्ते''ति वाक्याच्च .......... ..........

[स्वप्नमायासरूपेत्यादिश्रुतौ स्वप्ने जाग्रत्त्वादिप्रतिभासस्य भ्रमत्वमुक्तम्]

.......... .......... जाग्रत्त्वमिति हि भ्रमः ।

[रज्जौ सर्पभ्रमे सत्यस्य सर्पज्ञानस्यैव भयकारणत्वं, न तु असत्यस्य सर्पस्य]

सर्पभ्रमादावपि हि ज्ञानमस्त्येव तादृशम् ।। ३९५ ।।

तदेवार्थक्रियाकारि तत्सदेवार्थकारकम् ।

[सत्यस्य ब्रह्मणः अर्थक्रियाकारित्वं मायावादिना अङ्गीकृतम्]

ब्रह्म त्वर्थक्रियाकारि परतः स्वत एव वा ।। ३९६ ।।

अङ्गीकृतं हि तेनैव परतस्त्वे न च प्रमा ।

[अमुख्यसत्यस्य प्रमाणत्वं न उभयवादिसम्प्रतिपन्नम्]

अमुख्यसत्यमानस्य साधकत्वे सदावयोः ॥ ३९७ ॥

न हि सम्प्रतिपत्तिः स्याद् अतस्तिष्ठतु सा प्रमा ।
न हि विप्रतिपन्नेन शक्यं साधयितुं क्वचित् ॥ ३९८ ॥

[सत्यस्य साक्षिणः प्रमाणत्वमुभयसम्प्रतिपन्नम्]

साधकत्वं तु सत्यस्य साक्षिणो ह्यावयोर्द्वयोः ।
सम्यक् सम्प्रतिपन्नं तन्न विवर्तमतं भवेत् ॥ ३९९ ॥

[प्रमाणप्रमेयव्यवस्थानङ्गीकारे विवादितैव न स्यात्]

यदि नाङ्गीकृतं किञ्चिदनङ्गीकृतताापि हि ।
नाङ्गीकृतेति मूकः स्यादिति नास्मद्विवादिता ॥ ४०० ॥

[विश्वसत्यत्वप्रतिपादकश्रुतयः]

'विश्वं सत्यं' 'यच्चिकेत' 'प्र घा न्वस्य' 'यथार्थतः' ।
इत्यादिश्रुतयः सर्वा विश्वसत्यत्ववाचिकाः ॥ ४०१ ॥

[विश्वसत्यत्वे प्रत्यक्षमपि प्रमाणम्,
गगनादीनां साक्षिप्रत्यक्षत्वम्]

सत्यत्वं गगनादेश्च साक्षिप्रत्यक्षसाधितम् ।

[साक्षिसिद्धस्य त्रैकालिकाबाध्यत्वम्]

साक्षिसिद्धस्य न क्वापि बाध्यत्वं तददोषतः ॥ ४०२ ॥

सर्वकालेष्वबाध्यत्वं साक्षिणैव प्रतीयते ।

[**कालस्य साक्षिप्रत्यक्षत्वं, साक्षिसिद्धत्वम्**]

कालो हि साक्षिप्रत्यक्षः सुषुप्तौ च प्रतीतितः   ।। ४०३ ।।

अतीतानागतौ कालावपि नासाक्षिगोचरौ ।

[**कालसाधने अनुमानस्य नावसरः**]

पक्षीकर्तुमशक्यत्वान्नानुमा तत्र वर्तते   ।। ४०४ ।।

तदेतदिति सर्वं च दृश्यं वा स्मृतिगोचरम् ।
साक्षिसिद्धेन कालेन खचितं ह्येव वर्तते   ।। ४०५ ।।

तस्मान्न तं विना किञ्चित्स्मर्तुं द्रष्टुमथापि वा ।
शक्यं तन्नित्यसिद्धेर्हि नानुमावसरो भवेत्   ।। ४०६ ।।

[**साक्षिसिद्धस्य सत्यत्वोपसंहारः**]

अतोऽदोषप्रतीतस्य सत्यत्वं साक्षिणा मतम् ।

[**साक्षी हि ज्ञानस्वरूपं प्रामाण्यं च स्वमहिम्नैव विषयीकरोति, परीक्षया दोषशङ्कानिरासमात्रम्**]

परीक्षादेश्च सत्यत्वं तेन ह्येव मतं भवेत्   ।। ४०७ ।।

[**साक्षिणः सर्वथा प्रामाण्याग्राहकत्वे ब्रह्मणोऽपि विनिवृत्तिः स्यात्**]

अन्यथा श्रुतियुक्त्यादिप्रमाणैश्च सहैव तु ।
अकस्माद्विनिवृत्तिश्च किं विश्वस्य न शङ्क्यते   ।। ४०८ ।।

इतः पूर्वं तथा भावाद्यदि नो संसृतेर्गतिः ।
वाक्यानुमादितश्चेत् स्यात् तत्प्रामाण्यं च साक्षितः।। ४०९ ।।

**[साक्षी ब्रह्मसत्यत्वप्रतिपादकवाक्यादेः प्रामाण्यं सर्वकालेषु आत्यन्तिकं गृह्णाति]**

तत्प्रामाण्यं यथा साक्षी स्थापयत्येवमेव हि ।
सर्वकालेष्वपि स्थैर्यात् व्यभिचारमपोह्य च ॥ ४१० ॥

**[अक्षजादिज्ञानस्य आत्यन्तिकं प्रामाण्यं गृह्णन् साक्षी विश्वसत्यतां स्थापयति]**

एवमक्षजमानत्वसिद्धां विश्वस्य सत्यताम् ।
किमिति स्थापयेन्नायं निर्दोषज्ञानशक्तितः ॥ ४११ ॥

**[विश्वस्य एकजीवाज्ञानकल्पितत्वनिरासः]**

एकाज्ञानकृतं विश्वमिति यच्चोच्यते मृषा ।
बह्वज्ञानकृतं विश्वमिति तस्योत्तरं भवेत् ॥ ४१२ ॥

परस्य सत्यतां जानन्नपि यः स्वात्मतस्करः ।
परो नास्तीति वदति किमित्युन्मत्तवद्वदेत् ॥ ४१३ ॥

पराभावेऽपि वाग्व्यर्था यदि नैवोच्यते तदा ।
कशावेत्रादिकं तस्य तस्करस्योत्तरं वदेत् ॥ ४१४ ॥

**['प्रपञ्चो यदि विद्येत' इत्यादिश्रुतिः न विश्वमिथ्यात्वसाधिका]**

''प्रपञ्चो यदि विद्येत निवर्तेत न संशयः ।
मायामात्रमिदं द्वैतमद्वैतं परमार्थतः ॥ ४१५ ॥

विकल्पो विनिवर्तेत कल्पितो यदि केनचित् ।
उपदेशादयं वादो ज्ञाते द्वैतं न विद्यते'' ॥ ४१६ ॥

इत्यत्र यदिशब्दौ च निवर्तेतेति च द्वयम् ।
विश्वस्य सत्यतामाहुः .......... ..........

[अस्याः श्रुतेः भेदपञ्चकप्रतिपादकत्वम्]

.......... .......... विद्येतोत्पत्तिमेव च   ।। ४१७ ।।

विदोत्पत्ताविति ह्यस्माद्धातोरुत्पत्तिरेव हि ।
निवृत्तिव्याप्तियुक् प्रायः प्रपञ्चो भेदपञ्चकः   ।। ४१८ ।।

'जीवेश्वरभिदा चैव जडेश्वरभिदा तथा ।
जीवभेदो मिथश्चैव जडजीवभिदा तथा   ।। ४१९ ।।

मिथश्च जडभेदोऽयं प्रपञ्चो भेदपञ्चकः ।
सोऽयं सत्यो ह्यनादिश्च सादिश्चेन्नाशमाप्नुयात्   ।। ४२० ।।

द्वैतं न विद्यत इति तस्मादज्ञानिनां मतम्' ।
इति श्रुतेः .......... ....................

['मायामात्र'मित्यस्य हरिविद्यया रचितमित्यर्थः]

........... मितं त्रातं मायाख्यहरिविद्यया   ।। ४२१ ।।

[''अद्वैतं परमार्थतः' इत्यस्य हरिरेकः सर्वोत्तम इत्यर्थः]

उत्तमोऽर्थो हरिस्त्वेकस्तदन्यन्मध्यमाधमम् ।

['वाचारम्भण'मित्यादिश्रुतेः साङ्केतिकं नाम विकृतं, वैदिकं नाम नित्यमित्यर्थः]

वाचारब्धं तु साङ्केत्यं नाम स्याद् विकृतं बहु   ।। ४२२ ।।

नित्यं तु नामधेयं यत् मृत्तिकेत्यादि वैदिकम् ।

[एकविज्ञानेन सर्वविज्ञानश्रुत्यर्थः]

प्राधान्यात्तत्परिज्ञानात् प्राकृताज्ज्ञोऽपि पूरुषः ॥ ४२३ ॥

विद्वानित्युच्यते सद्भिरेवं नित्यपरात्मवित् ।

[सत्यशब्दस्य नित्यत्वार्थकत्वम्]

सदातनं सत्यमिति नित्यमेवोच्यते बुधैः ॥ ४२४ ॥

प्रयोगश्चोत्तरत्रास्ति 'जरा यद्येनमाप्नुयात् ।
देहः प्रध्वंसते चायं किं ततोऽस्यातिशिष्यते ॥ ४२५ ॥

हन्यते न वधेनायं जरया च न जीर्यते ।
एतत्सत्यं ब्रह्मपुरं' इति नित्यत्व एव हि ॥ ४२६ ॥

[वाचारम्भणश्रुतेः मिथ्यात्वबोधकत्वेन व्याख्यानं न युक्तम्]

वाचारम्भणमित्युक्ते मिथ्येत्यश्रुतकल्पनम् ।
पुनरुक्तिर्नामधेयमितीत्यस्य निरर्थता ॥ ४२७ ॥

[एकेन मृत्पिण्डेनेत्यादिदृष्टान्तवाक्यानामपव्याख्याननिरासः]

एकः पिण्डो मणिश्चेति पदवैयर्थ्यमेव च ।
विकारित्वविवक्षायां न चैकनखकृन्तनम् ॥ ४२८ ॥

सर्वं कार्ष्णायसं च स्यादतः सादृश्य एव च ।
विवक्षात्र तु नित्यत्वे प्राधान्ये चोक्तवर्त्मना ॥ ४२९ ॥

प्राधान्यप्रतिपत्त्यर्थं सृष्ट्यादेश्चैष विस्तरः ।

**[ विवर्तवादनिरासोपसंहारः ]**

तस्मात् केनापि मार्गेण न विवर्तमतं भवेत्  ।। ४३० ।।

तदसङ्ख्यातदोषेतं हेयमेव शुभार्थिभिः ।
असङ्ख्यत्वेन दोषाणां ग्रन्थाधिक्यभयादपि  ।। ४३१ ।।

उपरम्यते ततो विष्णुरिच्छापूर्वकमश्रमः ।
करोति पितृवद् विश्वं पूर्णाशेषगुणात्मकः  ।। ४३२ ।।

।। इति एतेन सर्वे व्याख्याताधिकरणम् ।। ७ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीमद्ब्रह्मसूत्रानुव्याख्याने प्रथमाध्यायस्य चतुर्थः पादः ।।

।। प्रथमोऽध्यायः समाप्तः ।।

****

## द्वितीयाध्यायस्य प्रथमः पादः

**[ अविरोधप्रतिपादनारम्भः ]**

उक्तः समन्वयः साक्षादविरोधोऽत्र साध्यते ।

**[ चतुर्विधविरोधाभावमध्ये युक्तिविरोधाभावः प्रथमपादे साध्यते ]**

चतुर्विधस्य तस्यादौ यौक्तः ....... ......

**[ प्रथमाधिकरणे विरोधिचतुस्स्वरूपपाशुपतादिस्मृतिविरोधपरिहारः ]**

..... ...... ...... तत्रापि च स्मृतेः ।। ४३३ ।।

**[ चत्वारोऽपि पादाः पादचतुष्टयार्थवन्तः ]**

तस्याश्चतुःस्वरूपत्वात् ..... .......

**[ अध्याया अपि अध्यायचतुष्टयार्थवन्तः ]**

..... ...... प्रत्येकं चतुरात्मकाः ।
पादाः सर्वे ...... ...... ......

**[ वासुदेवादिचतुर्मूर्तिप्रतिपादकत्वेनापि ब्रह्ममीमांसाशास्त्रस्य चतुरात्मकत्वम् ]**

.... .... तदंशाश्च मूर्तीनां वर्णमागमात् ।। ४३४ ।।

**[ प्रथमपादीयाधिकरणपूर्वपक्षसिद्धान्तयुक्तयः ]**

आप्तता समतादृष्टिश्रुतिसाम्यबलोद्भवाः ।
सर्वानुसारो लघुता विशेषादर्शनाफले ।। ४३५ ।।

इष्टासिद्धिश्च नियमः पूर्वपक्षेषु युक्तयः ।
एता एव त्वतिबलाः सिद्धान्तस्य नियामिकाः ।। ४३६ ।।

## स्मृत्यधिकरणम् - १

**।। ॐ स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात् ॐ ।। २-१-१ ।।**

**[पाशुपतादिस्मृतयः शिवाद्याप्तप्रत्यक्षमूलत्वात् प्रमाणमिति पूर्वपक्षोज्जीवनम्]**

आप्तैः प्रत्यक्षतो दृष्ट्वा प्रोक्तमर्थं कथं श्रुतिः ।
पिपीलिकालिपिनिभा वारयेत् सर्वगा हि ते ।। ४३७ ।।

इति चेद् ..... ...... ...... ......

**[पञ्चरात्रादिस्मृतिप्रणेतृणां हरिमन्वादीनामाप्तत्वात् सत्प्रतिपक्षः, पञ्चरात्रादीनां समूलत्वात् प्रामाण्यम्]**

... .... यद्यशेषज्ञा रुद्राद्या हरिपूर्वकाः ।
किं नाषेषविदो मानं ह्युभयत्र समं भवेत् ।। ४३८ ।।

**।। ॐ इतरेषां चानुपलब्धेः ॐ ।। २-१-२ ।।**

**।। ॐ एतेन योगः प्रत्युक्तः ॐ ।। २-१-३ ।।**

**[परस्परविरुद्धत्वात् पाशुपतादिस्मृतीनां न आप्तमूलत्वम्]**

न चाप्तिनिश्चयस्तत्र शक्यते व्यभिचारतः ।

**[पञ्चरात्रस्य निर्दोषवाक्यमूलत्वात् क्वचित् दृष्टार्थे फलव्यभिचारेऽपि न अप्रामाण्यम्]**

न चास्या व्यभिचारेऽपि हीयते मानता क्वचित् ।। ४३९ ।।

निर्दोषवाक्यमूलत्वान्न च तद्युक्तिमूलता ।

[वेदोक्ताधिकारपाशुपतादिस्मृत्युक्ताधिकारयोर्वैलक्षण्यम्]

वेदोक्तस्याधिकारस्य दुर्निरूपत्वतः सदा ॥ ४४० ॥

नियमो व्यभिचारो वा नैव ज्ञातुं हि शक्यते ।
अधिकारो हि सुलभः कथितोऽन्यागमेष्वलम् ॥ ४४१ ॥

वेदोक्तो ह्यधिकारस्तु दुर्लभः सर्वमानुषैः ।
अन्यागमेषु विप्रत्वमपि चण्डालजन्मनाम् ॥ ४४२ ॥

मण्डलान्तःप्रवेशेन क्रमशः प्रतिपाद्यते ।

[अधिकारादिषु परस्परविसंवादेन पाशुपतादीनामप्रामाण्यम्]

अधिकारं दुरापाद्यमुक्त्वाऽतिसुलभं पुनः ॥ ४४३ ॥

अशक्यं साधनं चोक्त्वा सुशकं तत्फलाप्तये ।
उच्यतेऽतस्तदुक्तं हि व्यभिचारि फलेऽपि तु ॥ ४४४ ॥

कथं प्रमाणतां गच्छेत् ...... .......

॥ इति स्मृत्यधिकरणम् ॥ १ ॥

नविलक्षणत्वाधिकरणम् - २

॥ ॐ न विलक्षणत्वादस्य तथात्वं च शब्दात् ॐ ॥ २-१-४ ॥

॥ ॐ दृश्यते तु ॐ ॥ २-१-५ ॥

[युक्तिविरोधपरिहारारम्भः]

[फलव्यभिचारित्वात् श्रुतेरप्रामाण्यमित्याक्षेपपरिहारः नित्यत्वेन पुरुषदोषवर्जितत्वात् वेदानां प्रामाण्यम्]

............ ........ नित्यत्वात् पुरुषोद्भवैः ।
उज्झितं सर्वदोषैश्च कथं नो मानतां व्रजेत्   ।। ४४५ ।।

'विरूपनित्यया वाचा' 'नित्ययाऽनित्यया सदा' ।
इत्यादिश्रुतिभिर्वेदो नित्य इत्यवगम्यते   ।। ४४६ ।।

[वेदानां पुरुषबुद्धिपूर्वकत्वाभावेऽपि प्रमाणाविरुद्धत्वात् सम्यगनुभवसाधनत्वम्]

पिपीलिकालिपिश्चापि प्रमाणमविरोधतः ।
यथा द्रौणेरुलूकेन कृतमप्यास बोधकम्   ।। ४४७ ।।

अविरुद्धं विरुद्धं तु विरोधादेव बाधितम् ।
विरोधादर्शनात्तस्माद्वेदप्रामाण्यमिष्यते   ।। ४४८ ।।

[श्रुतिसंवादित्वात् पञ्चरात्रादिस्मृतीनां प्रामाण्यम्]

तन्मूलत्वात्स्मृतीनां तु ............ ........

[उपजीव्यप्रत्यक्षागमविरोधाभावे प्रामाण्यम्]

............ ........ विरोधो यत्र न क्वचित् ।
विरोधोऽपि स एवोक्तः प्रत्यक्षेणागमेन वा   ।। ४४९ ।।

[आगमस्य आगमान्तरेण विरोधे युक्त्या अर्थनिर्णयः]

आगमेनागमस्यैव विरोधे युक्तिरिष्यते ।

[उपजीव्यप्रत्यक्षागमविरोधे प्रतीतार्थप्रच्यावनमात्रम्]

उपजीव्यविरोधे तु वेदस्यान्यार्थकल्पना   ।। ४५० ।।

[प्रत्यक्षागमयुक्तीनां उपजीव्यत्वव्यवस्था]

प्रत्यक्षमुपजीव्यं स्यात् प्रायो युक्तिरपि क्वचित् ।
आगमैकप्रमाणेषु तस्यैव ह्युपजीव्यता ॥ ४५१ ॥

युक्तोऽयुक्तश्च यद्यर्थ आगमस्य प्रतीयते ।
स्यात्तत्र युक्त एवार्थः .... ......

[युक्तेः त्रैविध्यम्]

..... ...... युक्तिश्च त्रिविधा मता ॥ ४५२ ॥

व्याप्तिः प्रत्यक्षगा यस्या युक्तिगाऽऽगमगा तथा ।
प्रत्यक्षागममूला तु युक्तिस्तत्र बलीयसी ॥ ४५३ ॥

[प्रमाणसामान्यलक्षणम्, तच्च ज्ञाने मुख्यं, करणेषु शब्दे मुख्यं, प्रत्यक्षानुमानयोः अमुख्यम्]

याथार्थ्यमेव मानत्वं तन्मुख्यं ज्ञानशब्दयोः ।
अर्थत्वमर्यतैव स्यान्न क्रियार्थेषु सा मता ॥ ४५४ ॥

ज्ञानार्थे ज्ञेयता मुख्या शब्दार्थे तदनन्तरम् ।
यथार्थज्ञानजनका यथार्था युक्तयः स्मृताः ॥ ४५५ ॥

[यथार्थज्ञानं केवलप्रमाणम्, प्रत्यक्षानुमानागमाः अनुप्रमाणम्]

अनुप्रमाणमेतानि ह्यक्षयुक्तिवचांस्यतः ।

[स्मृत्यनुवादयोरपि प्रामाण्यम्]

प्रामाण्यं नानुवादस्य स्मृतेरपि विहीयते ॥ ४५६ ॥

याथार्थ्यमेव प्रामाण्यशब्दार्थो यद्विवक्षितः ।
अङ्गीकृतं चेत्प्रामाण्यं स्मृत्यादेः का विरुद्धता ।। ४५७ ।।

न चाफलत्वं वक्तव्यं सर्वस्मृत्यनुवादयोः ।
फलवत्त्वं न चास्माभिः प्रामाण्यं हि विवक्षितम् ।।४५८।।

तृणादिदर्शने किं च फलवत्त्वं निगद्यते ।
सुखदुःखादिकं किञ्चित् स्मृतावपि हि दृश्यते ।। ४५९ ।।

न परिच्छेदकार्येव प्रमाणमिति च प्रमा ।

[**प्रत्यक्षलक्षणं, तद्विभागाः**]

निर्दोषाक्षोद्भवं ह्यत्र प्रत्यक्षमिति गीयते ।। ४६० ।।

प्राकृतं शुद्धचैतन्यमक्षं तु द्विविधं मतम् ।
शुद्धमीशरमामुक्तेष्वन्यत्र प्राकृतैर्युतम् ।। ४६१ ।।

निर्दोषमेव चैतन्यमन्यत्रोभयमिष्यते ।
सुखदुःखादिविषयं शुद्धं संसारगेष्वपि ।। ४६२ ।।

निर्दोषत्वातिनियमात्तद्बलिष्ठतमं मतम् ।
पञ्चेन्द्रियमनोभेदात् प्राकृतं षड्विधं स्मृतम् ।। ४६३ ।।

[**अनुमास्वरूपं, परोक्तपञ्चावयवनियमनिरासः**]

अनुमा युक्तिरेवोक्ता व्याप्तिरेव तु सा स्मृता ।
प्रतिज्ञातार्थसिद्ध्यर्थं व्याप्तिरेव यदोदिता ।। ४६४ ।।

अवशिष्टं किमत्रास्ति लिङ्गं तत्र विजानतः ।
यदि लिङ्गमसिद्धं स्यात्कुत एवास्य मानता ।। ४६५ ।।

यदि स्मारकमात्रं स्यात् स्मर्तुर्नात्र प्रयोजनम् ।
न पश्चावयवोक्तौ च विवादावसितिर्भवेत् ॥ ४६६ ॥

दृष्टान्तादिषु चैवं स्यात्साधनं पुनरेव तु ।
लिङ्गोक्तावपि चैवं स्यादनुमावसितिर्ध्रुवा ॥ ४६७ ॥

[**विरोधः असङ्गतिश्चेति द्वे अनुमानस्य दूषणे**]

विरोधोऽसङ्गतिश्चैव साक्षाद्युक्तेस्तु दूषणम् ।
प्रतिज्ञायामसम्बन्धो युक्तेरुक्ता ह्यसङ्गतिः ॥ ४६८ ॥

[**त्रिविधो विरोधः**]

विरोधोऽपि त्रिधैव स्यात् प्रतिज्ञार्थविरुद्धता ।
लिङ्गराहित्यमव्याप्तिर्न्यूनाधिक्ये तु वाचिके ॥ ४६९ ॥

साध्यव्यापकवैलोम्यमव्याप्तिः साधनस्य च ।
दुर्बलेन विरोधेऽपि न प्रमाणमसाधकम् ॥ ४७० ॥

स्ववाक्येन विरोधेऽपि नैव साधकतां व्रजेत् ।

[**परनिरूपिताशेषनिग्रहस्थानानामत्रैवान्तर्भावः**]

संवादानुक्तिसंयुक्ता एत एव तु निग्रहाः ॥ ४७१ ॥

[**वादजल्पवितण्डाभेदेन कथायाः त्रैविध्यम्, तत्स्वरूपं, तत्फलञ्च**]

वादो जल्पो वितण्डेति कथास्तिस्रो विजानताम् ।
स्वार्थं परार्थमपि वा तत्त्वनिर्णयसाधिनी ॥ ४७२ ॥

केवलं तु कथा वादो जल्पोऽर्थादिव्यपेक्षया ।
सतामेव कथा ज्ञेया वितण्डा त्वसतां सताम्   ।। ४७३ ।।

अप्रकाश्य स्वसिद्धान्तमसतां पक्षदूषणम् ।
उक्ते तैः प्रथमं माने वक्तव्यं तस्य दूषणम्   ।। ४७४ ।।

विद्या परीक्षापूर्वैव वितण्डा जल्प एव च ।
उच्चनीचत्वनिर्णीतिर्यतो जयपराजयौ   ।। ४७५ ।।

विनैव तत्वनिर्णीतिं न हि जल्पादिना क्वचित् ।
उच्चनीचत्वविज्ञानमिति विद्यापरीक्षणम्   ।। ४७६ ।।

वादेन चोच्चनीचत्वविज्ञानं भवति स्फुटम् ।
इति वादस्य पूर्वत्वं तत्सिद्धौ व्यर्थताऽन्ययोः   ।। ४७७ ।।

बहुविद्यत्वसिद्धौ तु नैव वादोऽपि कारणम् ।
सभासभापप्राश्नीकपूर्वस्तु स्पर्धिनामपि   ।। ४७८ ।।

वाद एवोभयार्थः स्यान्निर्णीतिजयकारकः ।
तत्वाप्रकाश एवैको वितण्डा जल्पयोः फलम्   ।। ४७९ ।।

विना वादेन विद्याया यदि शक्यं परीक्षणम् ।
स्याज्जल्पादिरपि क्वापि वाद एवान्यथा भवेत्   ।। ४८० ।।

जल्प इत्यपि नाम स्याद्वादस्यैतादृशस्य तु ।
प्रतिज्ञामात्रसाध्यत्वमपि स्याद्याज्ञवल्क्यवत्   ।। ४८१ ।।

संवादे वादिनोः क्वापि विवादे हेतुरिष्यते ।

[सभा-सभापति-प्राश्निकानां स्वरूपम्]

सभा सभापतिश्चैव प्राश्निकाश्चैव वैष्णवाः ॥ ४८२ ॥

रागद्वेषविहीनाश्च स्युः सभ्याः सर्ववेदिनः ।
प्राश्निकाश्चैतदज्ञाने सभ्याश्चैषां च दूरगाः ॥ ४८३ ॥

प्रमाणं निर्णयाय स्युः पक्षपातविवर्जिताः ।

[वादजल्पाभ्यां वितण्डायाः वैलक्षण्यम्]

उभाभ्यां साधनं चैव दूषणं वादजल्पयोः ॥ ४८४ ॥

[वादजल्पयोः प्रमाणोपन्यासप्रकारः]

सद्भिरागम एवैकः प्रयोज्योऽभीष्टसाधकः ।
स्वसिद्धान्तानुसारेण ह्यसद्भिरनुमोच्यते ॥ ४८५ ॥

प्रत्यक्षागमवैरूप्यमाश्रित्यान्यार्थतैव तु ।
आगमे दर्शनीयाऽत्र दोषो लिङ्गविलोमता ॥ ४८६ ॥

लिङ्गानुकूल्यं स्वार्थस्य श्रुत्यादीनामनुग्रहः ।

[त्रिपञ्चावयवादिनियमकल्पकाभावात् व्याप्तिरेवानुमा]

त्रिपञ्चावयवामेव युग्मावयविनीमपि ॥ ४८७ ॥

नियमाद्योऽनुमां ब्रूयात्तं ब्रूयाद्यदि तादृशी ।
नानुमेति तदा केन साध्यावयवकल्पना ॥ ४८८ ॥

नियतावयवासिद्धौ व्याप्तिमात्रेण साधनम् ।
कर्तव्यमेव तेन स्यात्तस्मात्सैवानुमा मता ॥ ४८९ ॥

**[प्राभाकरोक्तप्रमाणसामान्यलक्षणस्य स्मृतौ अव्याप्तिः]**

अनुभूतिः प्रमाणं चेत्केन स्मृतिरपोद्यते ।
पूर्वानुभूते किं मानमित्युक्ते स्यात्किमुत्तरम् ॥ ४९० ॥

**[स्मृतेः मानसप्रत्यक्षत्वम्, संस्कारः सन्निकर्षस्थानीयः]**

मानसं तद्धि विज्ञानं तच्च साक्षिप्रमाणकम् ।
अतीतानागतं यद्वद्योगिभिर्दृश्यतेऽञ्जसा ॥ ४९१ ॥

एवं पूर्वानुभूतं च मनसैवावगम्यते ।
विज्ञातं मनसा पूर्वं मयैतत्कृतमित्यपि ॥ ४९२ ॥

साक्षादनुभवात्सिद्धं कथमेव ह्यपोद्यते ।

**[ब्रह्मादिवस्तुषु वेद एव प्रमाणं, न युक्त्यादिः]**

एवं लक्षणकं मानत्रयं ब्रह्मादिवस्तुषु ॥ ४९३ ॥

प्रमाणं वेद एवैकस्तत्प्रामाण्यं च साधितम् ।

॥ इति नविलक्षणत्वाधिकरणम् ॥ २ ॥

## अभिमान्यधिकरणम् - ३

**॥ ॐ अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम् ॐ ॥ २-१-६ ॥**

**[मृदब्रवीदित्यादिश्रुतिः युक्तिविरुद्धेत्यभ्यधिकाशङ्क्या पूर्वपक्षः]**

तथापि मृज्जलादीनां बुद्धिवागादिवाचकः ॥ ४९४ ॥

दृष्टव्याप्तिविरुद्धत्वात्तत्र मानं कथं भवेत् ।

[मृदादिशब्दानामभिमानिवाचकत्वेन न युक्तिविरोधः]

ततस्तन्नामकः कश्चित्पुमानन्यो भवेदिति ।। ४९५ ।।

युक्त्यागमविरोधेन प्राप्तमत्राभिधीयते ।
बालरूढिं विनैवापि विद्वद्रूढिसमाश्रयात् ।। ४९६ ।।

तत्तन्नामान एवैते तत्तद्वस्त्वभिमानिनः ।
सन्ति ..... ..... ....... ............

[पृथिव्याद्यभिमानिन्यो व्याप्ताः शक्तिविशेषवत्यश्च]

..... तेषां विशेषेण शक्तिरन्येभ्य उच्यते ।। ४९७ ।।

व्याप्तिश्चोक्तानुसारेण ...... ........

।। ॐ दृश्यते तु ॐ ।। २-१-७ ।।

[योगिभिः पृथिव्याद्यभिमानिन्यः दृश्यन्ते]

............... दृश्यन्ते चाधिकारिभिः ।

[शास्त्रैकसमधिगम्यवस्तुनो व्युत्पत्तिः शास्त्रलिङ्गगम्या, सा च बलवती]

शास्त्रोक्तवस्तुनश्चैव व्युत्पत्तिः शास्त्रलिङ्गतः ।। ४९८ ।।

व्युत्पत्तिः सा बलवती मूर्खव्युत्पत्तितो हि यत् ।

[एतदधिकरणन्यायनिरूपणम्]

दृढयुक्तिविरोधे तु सर्वत्र न्याय ईदृशः ।। ४९९ ।।

।। इति अभिमान्यधिकरणम् ।। ३ ।।

## असदधिकरणम् - ४

**।। ॐ असदिति चेन्न प्रतिषेधमात्रत्वात् ॐ ।। २-१-८ ।।**

**[पूर्वपक्ष्युत्प्रेक्षितयुक्त्यागमापेक्षया प्रबलयुक्त्यागमाभ्यामत्राधिकरणे वस्तुनिर्णयः]**

अल्पवाक्ययुता युक्तिर्बहुलैव विरोधिनी ।
यत्र तत्र कथं वस्तुनिर्णयः स्यादितीरिते ।। ५०० ।।

विरोधियुक्तिबाहुल्यादिति न्यायो विनिश्चितः ।
युक्तेस्तु युक्तिबाहुल्यमागमादागमस्य च ।। ५०१ ।।

कथं न निर्णयं कुर्यादिति ..... .......

**[क्वापि अनुपलब्धं अभावस्य कर्तृत्वं श्रुत्यर्थो न भवितुमर्हति]**

..... ..... ..... असत्कारणं न हि ।
श्रुत्यर्थो भवति क्वापि ..... ......

**[चतुर्थपादादस्याधिकरणस्य वैलक्षण्यम्]**

..... ..... श्रुतिप्रायोपपत्तिभिः ।। ५०२ ।।

अविरोधश्चतुर्थे तु पादे सम्यक् समर्थ्यते ।

**[निषेधैकस्वरूपत्वादभावस्य न कर्तृत्वम्]**

असत्कार्यं यथा दृष्टं वस्तुत्वात् कारणं तथा ।। ५०३ ।।

इति चेन्न निषेधैकस्वरूपस्य न कर्तृता ।
बुद्धिपूर्वप्रवृत्तिर्हि कर्तृत्वमिति निश्चितम् ।। ५०४ ।।

[सूत्रस्थमात्रपदप्रयोजनं, तदर्थश्च]

प्रतिषेधात्मकत्वं तु भावस्याभावधर्मतः ।
धर्मधर्म्यैक्यतश्चैव न तु तन्मात्रता भवेत् ॥ ५०५ ॥

अभावस्य च भावो हि धर्मोऽथापि हि धर्मिणः ।
तादृक्त्वं मात्रतेहोक्ता बुद्धिराहित्यमेव तत् ॥ ५०६ ॥

[धर्मधर्मिस्वरूपनिरूपणं, भावाभावस्वरूपनिरूपणं च]

विशेष्यतैव धर्मित्वं प्रथमप्रतिपत्तिषु ।
निषेधविधिरूपत्वं भावाभावत्वमत्र हि ॥ ५०७ ॥

**॥ ॐ अपीतौ तद्वत्प्रसङ्गादसमञ्जसम् ॐ ॥ २-१-९ ॥**

**॥ ॐ न तु दृष्टान्तभावात् ॐ ॥ २-१-१० ॥**

**॥ ॐ स्वपक्षदोषाच्च ॐ ॥ २-१-११ ॥**

[महाप्रलयरूपनाशे कस्यचित्
पुरुषस्यावशिष्टत्वमवश्यमङ्गीकर्तव्यम्]

सर्वनाशेष्वपि सदा शिष्टत्वाद्यस्य कस्य नुः ।
नाशोऽयं विमतोऽपि स्यात् नाशत्वात् कर्तृशेषवान्॥ ५०८ ॥

न चाशेषनृनाशस्तु दृष्टो दृश्योऽस्ति वा क्वचित् ।

[प्रलयकाले धर्माधर्माश्रयत्वेन जीवः,
धर्माधर्माधिष्ठातृत्वेन च परमात्मा अङ्गीकार्यः]

धर्माधर्माश्रयत्वेन स्वीकार्योऽपि नरो लये ॥ ५०९ ॥

[प्रलयकाले धर्माधर्मसंज्ञितमदृष्टमेव नास्तीति न वक्तुं शक्यते]

अनादित्वं विना दृष्टं कथं स्यात्कारणं क्वचित् ।
पूर्वदृष्टात्परादृष्टं यदि नैवोत्तरं कुतः ।। ५१० ।।

अदृष्टं कारणं नो चेल्लये मानं च किं भवेत् ।

[जगतः चेतनकर्तृकत्वे अनुमानम्]

उत्पत्तिनाशकारी च बुद्धिमान् दृश्यते क्वचित् ।। ५११ ।।

तद्दृष्टान्तेन सर्वत्र कर्ता किं नानुमीयते ।

[आगमानुगृहीतानुमानस्य प्रमाणत्वम्]

आगमानुगृहीता तु मानमेषानुमापि तु ।। ५१२ ।।

**।। ॐ तर्काप्रतिष्ठानादप्यन्यथानुमेयमिति चेदेवमप्यनिर्मोक्षप्रसङ्गः ॐ ।। २-१-१२ ।।**

[प्रत्यक्षागमानुग्रहाभाव एव तर्कस्याप्रतिष्ठितत्वम्]

आगमानुग्रहाभावे न तर्कः स्यात्प्रतिष्ठितः ।
अक्षजागममूलस्य स्यादेवास्य प्रतिष्ठितिः ।। ५१३ ।।

अन्यथास्याप्रतिष्ठा च स्ववाचा व्याहतैव हि ।

**।। ॐ एतेन शिष्टा अपरिग्रहा अपि व्याख्याताः ॐ ।। २-१-१३ ।।**

[अत्र सूत्रे न वैशेषिकादिमतनिरासः, किन्तु जीवप्रधानासत्कालादीनां जगत्कारणत्वनिरासः]

न च शिष्टागृहीतत्वं निरीशादीशवादिनः ।। ५१४ ।।

अतोऽवशिष्टजीवादिकर्तृतात्र निषिद्ध्यते ।

**[पूर्वमसतः अभावस्य जगत्कारणत्वं निराकृतमिदानीं असतः शून्यस्येति न पौनरुक्त्यम्]**

तन्मनोऽकुरुतेत्यादेरसतो मनसो जनिः ॥ ५१५ ॥

निवारिता तु पूर्वत्र ह्यकस्मादिति तद्विना ।
असतो विश्वजननमाशङ्क्यात्र निषिद्ध्यते ॥ ५१६ ॥

**[अत्र श्रुत्यनुगृहीतयुक्तिप्राप्तप्रधानादिकारणत्वनिरासः, द्वितीयपादे साङ्ख्यादिसमयप्राप्तप्रधानादिकारणत्वनिरासः]**

प्रापकं वाक्यमात्रं तु परिहारोऽविशेषितः ।

**[जीवकर्तृत्वस्य युक्तिविरुद्धत्वप्रदर्शनम्]**

क्वचिज्जीवाकृतं दृष्ट्वाऽचेतनादेव चाकृतम् ॥ ५१७ ॥

तद्वदेवानुमान्यत्र वस्तुत्वात्क्रियते श्रुतेः ।

॥ इति असदधिकरणम् ॥ ४ ॥

## भोक्त्रधिकरणम् - ५

**॥ ॐ भोक्त्रापत्तेरविभागश्चेत् स्याल्लोकवत् ॐ ॥२-१-१४॥**

**[जीवस्य मोक्षे न ब्रह्मत्वापत्तिः, ऐक्यश्रुतिस्तु लोकवत् स्थानमत्यैक्यादिनिबन्धना]**

नान्यदन्यत्वमापन्नं क्वचिदृष्टं कथञ्चन ॥ ५१८ ॥

अतो जीवस्य न ब्रह्मभावः स्याद्धि कदाचन ।
क्वचिद्भिन्नतया दृष्टं तदभिन्नतया कथम् ॥ ५१९ ॥

दृश्येन्नो दृष्टपूर्वं हि तादृशं न च दृश्यते ।

**[अत्र सूत्रे भोक्त्रापत्तिर्नाम न भोक्तृत्वापत्तिः]**

भोक्तृत्वापत्तित इति यन्मतं तत्कुतो हरिः ॥ ५२० ॥

भोक्त्रापत्तेरिति प्राह ...... .......

॥ इति भोक्त्रधिकरणम् ॥ ५ ॥

**आरम्भणाधिकरणम् - ६**

**॥ ॐ तदनन्यत्वमारम्भणशब्दादिभ्यः ॐ ॥ २-१-१५ ॥**

**॥ ॐ भावे चोपलब्धेः ॐ ॥ २-१-१६ ॥**

**[ब्रह्मपरिणामित्वात् ब्रह्मविवर्तत्वाद्वा जगतः ब्रह्मानन्यत्वमत्र सूत्रे न प्रतिपादितं, किन्तु ब्रह्मान्यस्वतन्त्रकारणाभावः प्रतिपादितः]**

......... कथं च तदनन्यता ।
जगतस्त्वविकारत्व उक्तन्यायेन साधिते ॥ ५२१ ॥

स्वतन्त्रकारणान्यत्वं तेन ह्यत्र निषिद्ध्यते ।

**॥ ॐ सत्त्वाच्चावरस्य ॐ ॥ २-१-१७ ॥**

**[ब्रह्माधीनस्य प्रकृत्यादेः कारणस्य सत्त्वम्]**

'द्रव्यं कर्म च कालश्च स्वभावश्चेतना धृतिः ॥ ५२२ ॥

यत्प्रसादादिमे सन्ति न सन्ति यदुपेक्षया' ।
इति श्रुतेः ...... ..... ......

**।। ॐ असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषात् ॐ ।। २-१-१८ ।।**

[**नासदासीदित्यत्र स्वातन्त्र्यलक्षणधर्मविशेषाभिप्रायेण असत्त्वव्यपदेशः**]

...... तद्वशस्य भावो 'न पर' इत्यतः ।। ५२३ ।।

**।। ॐ युक्तेः शब्दान्तराच्च ॐ ।। २-१-१९ ।।**

**।। ॐ पटवच्च ॐ ।। २-१-२० ।।**

**।। ॐ यथा प्राणादिः ॐ ।। २-१-२१ ।।**

[**कारणैर्विना कर्तुं शक्तोऽपि हरिः स्वेच्छया नियतैः कारणैः जगत् सृजति**]

शक्तोऽपि ह्यन्यथा कर्तुं स्वेच्छानियमतो हरिः ।
कारणैर्नियतैरेव करोतीदं जगत्सदा ।। ५२४ ।।

[**कार्यस्य निमित्तकारणेन नियमेन भेदः, उपादानकारणेन तु भेदाभेदौ**]

नित्यभेदो निमित्तेन ह्युपादानेन तु द्वयम् ।

[**सदसत्कार्यवादः**]

असद्यत्कार्यरूपेण कारणात्मतयाऽस्ति हि ।। ५२५ ।।

अनवस्थाऽन्यथा हि स्यात्सर्वत्रोत्पत्तिनाशयोः ।

[**शक्तोऽपीत्याद्युक्तार्थे श्रुतिः**]

'शक्तोऽपि भगवान् विष्णुरकर्तुं कर्तुमन्यथा ।। ५२६ ।।

स्वभिन्नं कारणाभिन्नं भिन्नं विश्वं करोत्यजः' ।
इति श्रुतेरवसित उक्तार्थोऽयमशेषतः   ।। ५२७ ।।

।। इति आरम्भणाधिकरणम् ।। ६ ।।

## इतरव्यपदेशाधिकरणम् - ७

**।। ॐ इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः ॐ ।। २-१-२२ ।।**

**।। ॐ अधिकं तु भेदनिर्देशात् ॐ ।। २-१-२३ ।।**

**।। ॐ अश्मादिवच्च तदनुपपत्तिः ॐ ।। २-१-२४ ।।**

**।। ॐ उपसंहारदर्शनान्नेति चेत्क्षीरवद्धि ॐ ।। २-१-२५ ।।**

**।। ॐ देवादिवदपि लोके ॐ ।। २-१-२६ ।।**

**।। ॐ कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा ॐ ।। २-१-२७ ।।**

**[अनंशस्यापि जीवस्य परमेश्वराचिन्त्यशक्तिवशेन कार्यानुरूपसामर्थ्यप्रयोगसम्भवान्न कृत्स्नप्रसक्तिः]**

अनंशस्यापि जीवस्य किञ्चित् सामर्थ्ययोजनाम् ।
कार्येषु यः करोत्यद्धा नमस्तस्मै स्वयम्भुवे   ।। ५२८ ।।

यदि भागेन कार्येषु जीवशक्तिं न योजयेत् ।
हरिस्तदा हि सर्वत्र कृत्स्नयत्नोऽशितापि वा   ।। ५२९ ।।

**[ पटाद्याः परस्परं भिन्नैः अंशिना भिन्नाभिन्नैः अंशैः अंशिनः, चेतनास्तु परस्परमंशिना च अत्यन्ताभिन्नैः अंशैः अंशिनः, अतः चेतनेषु अनंशिन इति श्रुतिः ]**

अंशिनो हि पटाद्या ये भिन्नैरेव परस्परम् ।
अंशैरंशिन उच्यन्ते नैवमेव हि चेतनाः ।। ५३० ।।

अतोऽनंशिन इत्येव श्रुतिरेतेषु वर्तते ।

**[ विशेषबलादनेकत्वमंशित्वं च ]**

अप्यनेकस्वरूपेषु विशेषादेव केवलम् ।। ५३१ ।।

बहुस्वरूताख्या तु तेष्वस्त्येव हि सांशता ।

**[ जीवस्य परमेश्वरानपेक्षकर्तृत्वे न कृत्स्नप्रसक्त्यादिदोषपरिहारः ]**

बहुत्वेनाविनाभावाद्भिन्नता नियमाद्भवेत् ।। ५३२ ।।

यदि नैवं नियमकृद्भगवान्पुरुषोत्तमः ।

।। इति इतरव्यपदेशाधिकरणम् ।। ७ ।।

## श्रुतेस्तु शब्दमूलत्वाधिकरणम् - ८

**।। ॐ श्रुतेस्तु शब्दमूलत्वात् ॐ ।। २-१-२८ ।।**

**।। ॐ आत्मनि चैवं विचित्राश्च हि ॐ ।। २-१-२९ ।।**

**।। ॐ स्वपक्षदोषाच्च ॐ ।। २-१-३० ।।**

**।। ॐ सर्वोपेता च तद्दर्शनात् ॐ ।। २-१-३१ ।।**

**[ ईश्वरस्य विचित्राशेषशक्तित्वात् न कृत्स्नप्रसक्त्यादिदोषः ]**

तस्य त्वशेषशक्तित्वाद्युज्यते सर्वमेव च ।। ५३३ ।।

**[ब्रह्मणः सर्वस्मात् वैलक्षण्ये अत्यन्तव्यावृत्तत्वे युक्तयादिविरोधनिरासः द्वितीयाध्यायार्थः]**

विरोधः सर्ववैशिष्ट्ये यो द्वितीये निरस्यते ।
नारायणस्य त्वध्याये तदन्ये तत्र तत्रगाः ॥ ५३४ ॥

सृष्टिसंहारवाक्यानां जीवरूपाभिधायिनाम् ।
अप्यन्योन्याविरोधस्तु द्वितीयाध्यायगोचरः ॥ ५३५ ॥

**॥ ॐ विकरणत्वान्नेति चेत्तदुक्तम् ॐ ॥ २-१-३२ ॥**

**[अत्र सूत्रे प्रमेयैक्येऽपि प्रमाणभेदसत्त्वात् न पुनरुक्तिः]**

मानमेयविशेषेण पुनरुक्तिर्न जायते ।

॥ इति श्रुतेस्तु शब्दमूलत्वाधिकरणम् ॥ ८ ॥

**न प्रयोजनाधिकरणम् - ९**

**॥ ॐ न प्रयोजनवत्त्वात् ॐ ॥ २-१-३३ ॥**

**॥ ॐ लोकवत्तु लीलाकैवल्यम् ॐ ॥ २-१-३४ ॥**

**[ईश्वरस्य सृष्ट्यादौ प्रयोजनेन विना प्रवृत्तिः]**

सदा प्रवृत्तिरीशस्य स्वभावादेव केवलम् ॥ ५३६ ॥

अङ्गचेष्टा यथा पुंसः काश्चिदुद्देशवर्जिताः ।
'देवस्यैष स्वभावोऽय'मित्याह श्रुतिरञ्जसा ॥ ५३७ ॥

**[क्रीडा प्रयोजनमिति व्याख्यानं श्रुतिविरुद्धं सूत्राक्षराननुगुणं च]**

क्रीडां प्रयोजनं कृत्वा सृष्टिः श्रुतिविरोधिनी ।
इति केवललीलैव निर्णीता प्रभुणा स्वयम् ॥ ५३८ ॥

**भगवतः स्वप्रयोजनाभावेऽपि परप्रयोजनोद्देशिता अङ्गीक्रियते]**
आत्मप्रयोजनार्थाय स्पृहां श्रुतिरवारयत् ।
न प्रयोजनवत्त्वेनेत्यत आह जगद्गुरुः ।। ५३९ ।।

**[''का स्पृहे''ति श्रुतिः इच्छालक्षणं गुणमेव न निषेधति, किन्तु प्रयोजनेच्छामात्रनिषेधपरा]**

'इच्छामात्रं प्रभोः सृष्टिरिति सृष्टौ विनिश्चिताः' ।
इति प्रशंसया कामश्रुतिभ्यश्चैव युक्तितः ।। ५४० ।।

महातात्पर्ययुक्तेश्च नेच्छामात्रं निषिद्ध्यते ।

**[ईश्वरप्रसादान्मोक्षः, प्रसादो नाम इच्छाविशेषः]**

मोक्षार्थाः श्रुतयो यस्मात् स च तस्य प्रसादतः ।। ५४१ ।।

उन्निनीषति वाक्याच्च लोकदृष्टानुसारतः ।
इच्छानिमित्तको यस्मात्तदभावे कुतः श्रुतिः ।। ५४२ ।।

महातात्पर्यरहिता प्रमाणत्वं गमिष्यति ।

**[वाक्यस्य प्रयोजनवत्त्वेनैव प्रामाण्यम्]**

याथार्थ्यमेव मानत्वमपि वाक्यं प्रयोजकम् ।। ५४३ ।।

मानत्वमेति तत्रापि यत्सम्पूर्णप्रयोजनम् ।
।। इति नप्रयोजनाधिकरणम् ।। ९ ।।

**[वैषम्यनैर्घृण्याधिकरणम् - १०**

**।। ॐ वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथा हि दर्शयति ॐ ।। २-१-३५ ।।**

**।। ॐ न कर्माविभागादिति चेन्नानादित्वात् ॐ ।। २-१-३६ ।।**

**।। ॐ उपपद्यते चाप्युपलभ्यते च ॐ ।। २-१-३७ ।।**

[**कर्माद्यनपेक्षवैषम्यनैर्घृण्ये एव दूषणे, न तु ईश्वराधीनकर्मसापेक्षे**]

वैषम्यं चैव नैर्घृण्यं वेदाप्रामाण्यकारणम् ।। ५४४ ।।

नाङ्गीकार्यमतोऽन्यत्तु न वैषम्यादिनामकम् ।

।। इति वैषम्यनैर्घृण्याधिकरणम् ।। १० ।।

## सर्वधर्मोपपत्त्यधिकरणम् - ११

**।। ॐ सर्वधर्मोपपत्तेश्च ॐ ।। २-१-३८ ।।**

[**स्वतन्त्रस्य भगवतः सर्वगुणपूर्णत्वम्, सर्वदोषविदूरत्वं च**]

यदधीना गुणाश्चैव दोषा अपि हि सर्वशः ।। ५४५ ।।

गुणास्तस्य कथं न स्युः स्युर्दोषाश्च कथं पुनः ।
सर्वधर्मोपपत्तेस्तद्वाक्यैरपि हि तादृशैः ।। ५४६ ।।

निर्दोषाशेषगुणको निर्णीतो भगवान् हरिः ।

।। इति सर्वधर्मोपपत्त्यधिकरणम् ।। ११ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्ब्रह्मसूत्रानुव्याख्याने द्वितीयाध्यायस्य प्रथमः पादः ।।

***

## द्वितीयाध्यायस्य द्वितीयः पादः

[प्रथमपादे स्मृति–युक्ति–श्रुतिसंवादियुक्ति–
बहुयुक्तिविरोधपरिहारः]

स्मृतियुक्तिश्रुतिगुणयुक्तयो बहुयुक्तयः ।। ५४७ ।।

एवं चतुर्विधा नैव विरुद्ध्यन्तेऽन्वयं प्रति ।
इति प्रथमपादेन निर्णीतेऽपि ..... .....

[इह द्वितीयपादे आग्रहतः प्रवृत्तानां प्रवाहतोऽनादीनां
समयानां विरोधपरिहारः]

................ ....... अभियोगतः ।। ५४८ ।।

दर्शनानां प्रवृत्तत्वात् मन्द आशङ्कते पुनः ।
अनादिकालतो वृत्ताः समया हि प्रवाहतः ।। ५४९ ।।

न चोच्छेदोऽस्ति कस्यापि समयस्येत्यतो विभुः ।
भ्रान्तिमूलत्वमेतेषां पृथग्दर्शयति स्फुटम् ।। ५५० ।।

तर्कैर्दृढतमैरेव वाक्यैश्चागमवादिनाम् ।
दौर्लभ्याच्छुद्धबुद्धीनां बाहुल्यादल्पवेदिनाम् ।। ५५१ ।।

तामसत्वाच्च लोकस्य मिथ्याज्ञानप्रसक्तितः ।
विद्वेषात्परमे तत्त्वे तत्त्ववेदिषु चानिशम् ।। ५५२ ।।

अनादिवासनायोगादसुराणां बहुत्वतः ।
दुराग्रहगृहीतत्वाद्वर्तन्ते समयाः सदा ।। ५५३ ।।

तथाऽपि शुद्धबुद्धीनामीशानुग्रहयोगिनाम् ।
सुयुक्तयस्तमो हन्युरागमानुगताः सदा   ।। ५५४ ।।

इति विद्यापतिः सम्यक्समयानां निराकृतिम् ।
चकार निजभक्तानां बुद्धिशाणत्वसिद्धये   ।। ५५५ ।।

**रचनानुपपत्त्यधिकरणम् -१**

**।। ॐ रचनानुपपत्तेश्च नानुमानम् ॐ ।। २-२-१ ।।**

**।। ॐ प्रवृत्तेश्च ॐ ।। २-२-२ ।।**

[**निरीश्वरसाङ्ख्यमतानुवादः**]

चेतनाचेतनं तत्त्वद्वयमेव निरीश्वराः ।
आहुस्तत्पश्चपश्चत्वविभागस्थमचेतनम्   ।। ५५६ ।।

चेतनं तदसङ्ख्यातं भिन्नमन्यद्भिदोज्झितम् ।
अचेतनस्य कर्तृत्वं स्वातन्त्र्येण निगद्यते   ।। ५५७ ।।

परस्परविभेदश्च कार्याणामालयं भवेत् ।

[**पुरुषस्य भोक्तृत्वाभोक्तृत्ववादित्वेन साङ्ख्येषु मतभेदः**]

भोक्तृतां चेतनस्याहुः केचित्तामपि नापरे   ।। ५५८ ।।

स्वरूपचैतन्यबलात् स्वप्रकाशाच्च भोगिताम् ।
प्रकृतेश्च स्वरूपस्य विवेकाग्रहमेव तु   ।। ५५९ ।।

अभोगवादिनो भोगमाहुर्भेदग्रहात्तयोः ।
भोगिनां मुक्तिरुद्दिष्टा स एवाभोगवादिनाम्   ।। ५६० ।।

[ईश्वरस्यानङ्गीकारात् मतद्वयमप्ययुक्तम्]

ईशस्यासङ्ग्रहादेव न युक्तौ तावुभावपि ।

[प्रवृत्तेश्चेति सूत्रार्थः, महदादेः चेतनेच्छाधीनत्वसाधनेन ईश्वरसाधनम्]

चेतनेच्छानुसारेण यदा दृष्टः पटोद्भवः ।। ५६१ ।।

एतादृशत्वमन्यस्य वस्तुत्वात्केन वार्यते ।

[प्रधानस्य स्वातन्त्र्येण जगत्कारणत्वे आगमः अनुमानं वा न प्रमाणम्]

न च काचित्प्रमोक्तार्थे श्रुतिरेव प्रमा हि नः ।। ५६२ ।।

आप्तत्वमुक्तमार्गेण वक्तुर्नैवोपपद्यते ।
अप्रामाण्यस्वतस्त्वस्य स्वीकारादपि मायिवत् ।। ५६३ ।।

स्वोक्ताखिलनिषेधी स्यान्न च किञ्चित्प्रसिद्ध्यति ।
'इदं नाचेतनवशं वस्तुत्वात्प्रतिपन्नवत्' ।। ५६४ ।।

इत्येव प्रतिषिद्धस्य केन मूलानुमा भवेत् ।

[अचेतनस्य स्वेच्छानुसारित्वरूपस्वातन्त्र्यं व्याहतम्]

स्वतन्त्रवृत्ती रचना सा चैवाचेतने कुतः ।। ५६५ ।।

अचेतनत्वं स्वातन्त्र्यमिति चात्मप्रमाहतम् ।
स्वेच्छानुसारितामेव स्वातन्त्र्यं हि विदो विदुः ।। ५६६ ।।

कुत इच्छाऽचेतनस्य सेच्छं चेत्किमचेतनम् ।

[अचेतनस्य स्वातन्त्र्याङ्गीकारे साक्ष्यनुभवविरोधः]

इच्छाम्यहमिति ह्येव निजानुभवरोधतः ।। ५६७ ।।

अचेतनेच्छापगता यदि भेदाग्रहोऽत्र च ।
कथं स न घटस्य स्यान्मनो म इति भेदतः   ॥ ५६८ ॥

मनसोऽपि गृहीतत्वात् ..... ...... ......

**[द्विविधः कामः—एकः आत्मधर्मः, अपरः अन्तःकरणधर्मः]**

...... ..... ...... उभयात्मकता यतः ।
कामस्य तु 'मनः कामः' प्रियाप्रियविभेदतः   ॥ ५६९ ॥

द्वैविध्यं दृश्यते चास्य तस्माद्भेदाग्रहः कुतः ।

**[सूत्रार्थमुपसंहरति]**

रचनानुपपत्तेस्तन्न सर्वज्ञानुमागतम्   ॥ ५७० ॥

अचेतनं जगत्कर्तृ....... ...... ......

**॥ ॐ पयोऽम्बुवच्चेत्तत्रापि ॐ ॥ २-२-३ ॥**

**॥ ॐ व्यतिरेकानवस्थितेश्चानपेक्षत्वात् ॐ ॥ २-२-४ ॥**

**[पयोऽम्ब्वादिदृष्टान्तेन प्रधानस्य प्रवृत्तिस्वातन्त्र्यसाधनं न शक्यं, चेतनाचेतनयोः भगवदधीनत्वस्य श्रुतिसिद्धत्वात्]**

..... ...... पयोऽम्ब्वादि च नोपमा ।
एतत्प्रशास्तिवचनात् चेतनाचेतनस्य च   ॥ ५७१ ॥

**[आत्मनः इच्छास्वामित्वं, मनसः इच्छायाः उपादानत्वं, तस्माच्चेतनस्यैव कर्तृत्वं न अचेतनस्य]**

द्वैविध्येऽपि तु कामादेः कुतः स्वामित्वमात्मनः ।
साक्षादनुभवारूढं शक्यतेऽपोदितुं क्वचित्   ॥ ५७२ ॥

इच्छास्वामित्वमेवोक्तमिच्छावत्त्वं न चापरम् ।

[**ईश्वरस्य मुख्यं स्वाम्यं कर्तृत्वं च, जीवस्य अमुख्यमेव**]

किञ्चित्तद्वशगत्वेऽपि स्वामित्वं लोकवद्भवेत् ॥ ५७३ ॥

सर्वात्मतन्त्रकामादेः किमुतैव परेशितुः ।

[**'कामः सङ्कल्पः' इत्यादिश्रुतिः मनसः कामस्वामित्वं न वदति, किन्तु कामोपादानत्वमेव वदति**]

न चानुभवगं कामस्वामित्वं वेदवागपि ॥ ५७४ ॥

शक्ताऽपवदितुं तस्मात् सा तदन्याभिधायिनी ।

[**यदि कामोऽन्तःकरणकर्तृकः स्यात् तदा मोक्षकामोऽपि अन्तःकरणस्यैव स्यात्**]

मोक्षकामो भवेदन्यो यदि मुक्ताद्भविष्यतः ॥ ५७५ ॥

[**जीवमोक्षार्थं प्रकृतिः प्रवर्तत इति न युक्तम्**]

मोक्षकामस्य किं तेन स्वनाशार्थं च को यतेत् ।

[**कर्तृत्वं प्रकृतेरेव, भोक्तृत्वमात्मनः इति साङ्ख्यैकदेशमतनिरासः**]

कर्तृत्वं यस्य तस्यैव भोक्तृत्वमुपलभ्यते ॥ ५७६ ॥

विभागे च तयोर्मानं नैव किञ्चित्कचिद्भवेत् ।

[**प्रकृतेरेव बन्धमोक्षाविति मतमविद्याया एव बन्धमोक्षाविति मतवत् श्रुतिस्मृतीतिहासपुराणानुभवविरुद्धम्**]

सर्वमानविरोधैकदुर्दीक्षादीक्षितस्त्वयम् ॥ ५७७ ॥

मयावाद्युपमां यायात् तच्च शब्दान्निराकृतः ।
।। इति रचनानुपपत्त्यधिकरणम् ।। १ ।।

## अन्यत्राभावाधिकरणम् - २

## ।। ॐ अन्यत्राभावाच्च न तृणादिवत् ॐ ।। २-२-५ ।।

**[प्रकृतिपुरुषौ स्वायत्तोपादानबीजशक्तिमन्तौ, ईश्वरस्तु प्रकृत्यनुग्रहशक्तिमानिति सेश्वरसाङ्ख्यमतानुवादः]**

साङ्ख्यस्तु सेश्वरो ब्रूते क्षेत्रानुग्रहशक्तिमान् ।। ५७८ ।।

अस्तीश्वरः स्वयम्भातः क्लेशकर्मादिवर्जितः ।
क्षेत्रशक्तिमती चैव प्रकृतिर्बीजशक्तिमान् ।। ५७९ ।।

जीवः पर्जन्यवद्दैवशक्तिमानीश्वरः स्मृतः ।
पृथिवीवत्प्रधानं तज्जीवः सन्निधिमात्रतः ।। ५८० ।।

बीजावपनकर्तैवेति ...... ............

**[प्रकृतिपुरुषयोः स्वातन्त्र्येण न शक्तिः]**

.... .... .... अत्र प्राह स्वयं प्रभुः ।
अन्यत्र काऽपि शक्तिर्न स्वातन्त्र्येण...........

**[प्रकृतिपुरुषयोः तच्छक्तीनां च सत्तास्वरूपप्रतीतयः परमात्माधीनाः]**

..... ...... ........... ईश एव हि ।। ५८१ ।।

शक्तीस्ताः प्रेरयत्यञ्जस्तदधीनाश्च सर्वदा ।
सत्ता प्रधानपुरुषशक्तीनां च प्रतीतयः ।। ५८२ ।।

प्रवृत्तयश्च ताः सर्वाः .... .....

[नित्यस्यापि नित्यता परमात्माधीना]

.... ..... नित्यं नित्यात्मना यतः ।
तथा नित्यतया नित्यं नित्यशक्त्या स्वयेश्वरः ॥ ५८३ ॥

नियामयति नित्यं च ''न ऋते त्वदि''ति श्रुतेः ।

[प्रधानादिसत्तादेः भगवदधीनत्वे श्रुतिः प्रमाणम्]

स्वभावजीवकर्माणि द्रव्यं कालः श्रुतिः क्रियाः ॥ ५८४ ॥

यत्प्रसादादिमे सन्ति न सन्ति यदुपेक्षया ।
इति श्रुतेर्न सत्ताद्या अपि नारायणं विना ॥ ५८५ ॥

तत्पतञ्जलिविन्ध्यादिमतं न पुरुषार्थदम् ।

॥ इति अन्यत्राभावाधिकरणम् ॥ २ ॥

## अभ्युपगमाधिकरणम् - ३

## ॥ ॐ अभ्युपगमेऽप्यर्थाभावात् ॐ ॥ २-२-६ ॥

[अत्राधिकरणे न साङ्ख्यमतनिरासः,
किन्तु अभ्यधिकाशङ्कानुसारेण चार्वाकमतनिरासः]

चार्वाकैरुच्यते मानमक्षजं नापरं क्वचित् ॥ ५८६ ॥

देह आत्मा, पुमर्थश्च कामार्थाभ्यां विना न हि ।
यदैवं दर्शनेनास्य कोऽर्थः प्रत्यक्षगोचरः ॥ ५८७ ॥

लब्धस्तेनैव हि नरैः शास्त्रात् किं मोहनं विना ।
स्वपरार्थविहीनत्वात् स्वमतेनैव निष्फलम् ॥ ५८८ ॥

किमित्युन्मत्तवच्छास्त्रं वृथा प्रलपति स्वयम् ।
देहादन्योऽनुभवत आत्मा भाति शरीरिणाम्   ।। ५८९ ।।

मम देह इति व्यक्तं ममार्थ इति वत्सदा ।
प्रत्यक्षस्यैव मानत्वमति केनावसीयते   ।। ५९० ।।

यदि तत्साधकं वेदप्रामाण्ये न कथं भवेत् ।
न चान्यामानता क्वापि प्रमाणेनावसीयते   ।। ५९१ ।।

स्वमतेनार्थरहित उपेक्ष्यः पक्ष ईदृशः ।

।। इति अभ्युपगमाधिकरणम् ।। ३ ।।

## पुरुषाश्माधिकरणम् - ४

### ।। ॐ पुरुषाश्मवदिति चेत्तथापि ॐ ।। २-२-७ ।।

[पुरुषोपसर्जनप्रकृतिकर्तृकत्ववादनिरासः]

सन्निधानाच्चेतनस्य वर्तते यद्यचेतनम्   ।। ५९२ ।।

तथाप्यबुद्धिपूर्वत्वादुक्तदोषः समो भवेत् ।

### ।। ॐ अङ्गित्वानुपपत्तेः ॐ ।। २-२-८ ।।

अङ्गित्वं पुरुषस्यैव सर्वैरेवानुभूयते   ।। ५९३ ।।

तदङ्गत्वोक्तितश्चैव स्यात्सर्वस्यापलापकः ।
किमु सर्वेश्वरस्यास्य ह्यपलापाद्यतोऽखिलम्   ।। ५९४ ।।

।। इति पुरुषाश्माधिकरणम् ।। ४ ।।

अन्यथानुमित्यधिकरणम् - ५

।। ॐ अन्यथानुमितौ च ज्ञशक्तिवियोगात् ॐ ।।२-२-९।।

।। ॐ विप्रतिषेधाच्चासमञ्जसम् ॐ ।। २-२-१० ।।

[प्रकृत्युपसर्जनपुरुषकर्तृत्ववादनिरासः]

अङ्गित्वं यदि तस्यैव स्वातन्त्र्यं चेन्न चाखिलम् ।
तत्प्रेरणेऽप्यशक्तत्वात् स्वतन्त्रोऽन्यो ह्यपेक्षितः ।। ५९५ ।।

न च स्वातन्त्र्यमस्यैव प्रत्यक्षादिविरोधतः ।
हिताक्रियादिदोषाच्च भद्रं नानीश्वरं मतम् ।। ५९६ ।।

संसारिणोऽन्यं सर्वेशं सर्वशक्तिमनौपमम् ।
चेतनाचेतनस्यास्य सत्त्वादेस्तदधीनताम् ।। ५९७ ।।

नाङ्गीकुर्वन्ति ये तेषां सर्वेषां च समा इमे ।

[पञ्चमतनिरासोपसंहारः]

तस्माच्छ्रुतिप्रमाणेन युक्तिभिश्च परो हरिः ।। ५९८ ।।

अङ्गीकार्यतमो नित्यः सर्वैरपि सुनिश्चितम् ।

।। इति अन्यथानुमित्यधिकरणम् ।। ५ ।।

वैशेषिकाधिकरणम् - ६

।। ॐ महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम् ॐ ।।२-२-११।।

[परमाण्वारम्भवादिवैशेषिकादिमतानुवादः]

नित्यज्ञानप्रयत्नेच्छं सङ्ख्याद्यैरपि पञ्चभिः ।। ५९९ ।।

युक्तमीशं वदन्तोऽन्ये तदिच्छादृष्टचोदिताः ।
परमाणवश्चतुर्वर्गाः संयुज्यन्ते द्विशोऽखिलाः ॥ ६०० ॥

परमाणुद्वयेनैव द्व्यणुकं नाम जायते ।
द्व्यणुकत्रयेण त्र्यणुकं तैश्चतुर्भिस्तदात्मकम् ॥ ६०१ ॥

ततस्त्वनियमेनैव खण्डावयविनां भवः ।
ततश्चानियमेनैव सर्वावयविसम्भवः ॥ ६०२ ॥

कारणं समवाय्याख्यं परमाण्वादिरत्र हि ।
ईशेच्छादृष्टकालास्तु निमित्तं कारणं मतम् ॥ ६०३ ॥

सामान्यान्त्यविशेषौ च समवायश्च तत्त्रयम् ।
नित्यं, क्रिया अनित्याश्च गुणद्रव्ये द्विरूपके ॥ ६०४ ॥

कार्ये गुणक्रियाणां तु समवाय्यन्यकारणम् ।
कारणस्था गुणाद्यास्तु संयोगो द्रव्यकारणम् ॥ ६०५ ॥

एवं स्थितेऽपि सिद्धान्ते विशेषस्तत्र कल्पितः ।
द्व्यणुके परमाणौ च ह्रस्वत्वं परिमण्डलम् ॥ ६०६ ॥

न कारणं कार्यगुणे वैरूप्यं तत्र कारणम् ।
इत्याहुः ..... ...... .............

**[उपर्युक्तवैशेषिकादिमतनिरासः द्व्यणुकपरमाणुपरिमाणादपि त्र्यणुकादौ सजातीयपरिमाणोत्पादः]**

..... तानथोवाच विद्याधीशः स्वयं प्रभुः ॥ ६०७ ॥

महत्त्वं चैव दीर्घत्वं त्र्यणुकाद्येषु कल्पितम् ।
तस्माच्च सदृशं कार्यं तत्कार्येषूपजायते ॥ ६०८ ॥

यथा तथैव ह्रस्वत्वात् पारिमाण्डिल्यतोऽपि हि ।
जायते सदृशं कार्ये परिमाणं समत्वतः ॥ ६०९ ॥

न चेन्महत्त्वतश्चैव दीर्घत्वादपि नो भवेत् ।

[अण्वोः द्व्यणुकपरमाण्वोः महत्त्वं, महत्सु त्र्यणुकादिषु अणुत्वं च अङ्गीक्रियते]

सदृशस्य हि कार्यस्य नैव योगः कथञ्चन ॥ ६१० ॥

अप्रत्यक्षत्वमेव स्याद्यतः कार्येष्वणुत्वतः ।
इति चेन्न महत्त्वं च परमाणावणावपि ॥ ६११ ॥

कथं त्र्यणुकपूर्वेषु नाणुत्वमपि कथ्यते ।
प्रत्यक्षत्वतदन्यत्वे पुरुषापेक्षयाखिले ॥ ६१२ ॥

[द्रव्यान्तरवर्त्युत्कृष्टपरिमाणापेक्षया अणुत्वमहत्वव्यवहारादेकत्र उभयाङ्गीकारे न व्याघातः]

अणुत्वं च महत्त्वं च यतो वस्तुव्यपेक्षया ।
तारतम्यस्थिता यस्मात् पदार्थाः सर्व एव च ॥ ६१३ ॥

[अणुत्वमहत्वयोः न विश्रान्तिः]

यथा महत्त्वविश्रान्तिस्तथाणुत्वस्य चेष्यते ।
परिमाणत्वतश्चेन्न महत्त्वस्यापि विश्रमः ॥ ६१४ ॥

दृश्यतेऽनन्त इत्येव तथानन्त्यमणावपि ।
न महत्तत्त्वगुणत एतावानिति हीश्वरः     ।। ६१५ ।।

परिच्छिन्नस्तथाणोश्च नैतावद्भागता क्वचित् ।
विश्रान्तो यद्यनन्तांशः कश्चिदस्तीति गम्यते     ।। ६१६ ।।

नावसाययितुं शक्यो विरोधादेव केवलम् ।

**[कालाकाशादेः परिमाणोत्कर्षस्य आनन्त्यमिव तदपकर्षानन्त्यमपि साक्षिसिद्धम्]**

केवलं साक्षिमानेन कालो देशोऽपि नान्तवान्     ।। ६१७ ।।

अपर्यवसितिश्चाणोर्दृश्यते साक्षिणा द्वयोः ।
यदि नो साक्षिगम्यं तन्महत्त्वं केन गम्यते     ।। ६१८ ।।

**[कालादेः परिमाणोत्कर्षानन्त्यं न अनुमानगम्यम्]**

विश्रान्तिस्तारतम्येन दृश्यते ह्यनुमानतः ।

**[आगमः कालादिपरिमाणोत्कर्षमिव तदपकर्षमपि प्रतिपादयति]**

यद्यागमादनन्तं तन्महत्त्वमवगम्यते     ।। ६१९ ।।

अनन्तमेव चाणुत्वं कुतो नैवावसीयते ।

**[कालादेः परिमाणोत्कर्षानन्त्यवत् तदपकर्षानन्त्यमपि वर्तते]**

महत्त्वाणुत्वयोर्नैव विश्रान्तिरुपलभ्यते     ।। ६२० ।।

**[अनन्तत्वं न अनल्पत्वं, किन्तु परिच्छेदाभावः]**

अन्यदेव ह्यनन्तत्वं महत्त्वाणुत्वयोः समम् ।

[सङ्ख्यायां बहुत्वाल्पत्वयोरानन्त्यमिव कालादेः
महत्त्वाणुत्वयोरप्यानन्त्यम्]

बहुत्वाल्पत्वयोर्यद्वत् सङ्ख्यायामुपलभ्यते ॥ ६२१ ॥

आनन्त्यमेकभागानां तावत्त्वं ह्येव गम्यते ।

[ईश्वरे परिमाणोत्कर्षापकर्षानन्त्यं
'सत्यं ज्ञानम्' इत्यादिश्रुतिराह]

अणीयांश्च महीयांश्च भगवानागमोदितः ॥ ६२२ ॥

आनन्त्यवाचकः शब्दो द्विधानन्त्येऽपि मानताम् ।
याति ..... ...... ......... ............

[ईश्वरस्य कालाल्पत्वगुणाल्पत्वशङ्का न युक्ता]

.... नैव, गुणाल्पत्वं कालाल्पत्वं च मानगम् ॥ ६२३ ॥

सर्वकालगतस्याल्पकालेऽपि स्यादवस्थितिः ।
महागुणस्य चाल्पोऽपि गुणः स्यादिति चेद्भवेत् ॥६२४॥

तावत्त्वमेव नैव स्याद्देशेऽप्येतन्न नो मतम् ।

[ब्रह्मणः गगनस्य च परिमाणोत्कर्षापकर्षानन्त्यसद्भावः
सूत्रकारेण उक्तः]

महतोऽल्पत्वमपि हि व्योमवत्प्राह वेदवित् ॥ ६२५ ॥

[कालादेः अल्पाल्पतरदेशसंस्थानाभावे
सर्वत्रावस्थानमपि न स्यात्, शून्यत्वप्रसङ्गश्च]

यद्यल्पदेशसंस्थानं न सर्वत्रापि नो भवेत् ।
स्थितस्य ह्यल्पदेशेषु सर्वगत्वं भवेद्ध्रुवम् ॥ ६२६ ॥

एकत्राप्यनवस्थस्य कुत एवाखिलस्थता ।
शून्यत्वमेव तस्य स्याद्यस्यैकत्रापि न स्थितिः ॥ ६२७ ॥

**[कालादौ परिमाणोत्कर्षापकर्षानन्त्यनिरूपणोपसंहारः, प्रकृत्यादौ सर्वगते परममहति द्रव्यान्तरेऽपि उभयानन्त्यम्]**

अतो नाणुत्वविश्रान्तिर्न महत्त्वस्य च क्वचित् ।
उभयानन्त्ययुक् तस्मात् ..... ......

**[ब्रह्म परानपेक्षया अनन्तं, देशतः कालतः गुणादितश्च अनन्तम्]**

..... ........ यदि मुख्यं महद्भवेत् ॥ ६२८ ॥

तच्च ब्रह्म परं साक्षात् सर्वानन्त्ययुतं सदा ।

**[प्रत्यक्षादिप्रामाण्यसिद्ध्यर्थं साक्षी अङ्गीकर्तव्यः]**

यदि साक्षी स्वयंभातो न मानं केन गम्यते ॥ ६२९ ॥

अक्षजादेश्च मानत्वमनवस्थान्यथा भवेत् ।

**[परमाणोरपि भागाः सन्ति, परमाणौ विभिन्नावयवेषु सत्स्वपि तेषां न विभागः]**

अतः सर्वपदार्थानां भागाः सन्त्येव सर्वदा ॥ ६३० ॥

सर्वदिक्ष्वपि सम्बन्धादविभागः पराणुता ।

**[सजातीयाभ्यामेव द्वाभ्यामेव परमाणुभ्यामेवेत्यादिनियमवत्यां वैशेषिकादिप्रोक्तसृष्टौ प्रमाणं नास्ति]**

तत्संयोगादनियतात्पदार्थानां जनिर्भवेत् ॥ ६३१ ॥

द्वयोरेव तु संयोग इति केनावसीयते ।
कारणस्य गुणास्तेन भवेयुः कार्यगा अपि ॥ ६३२ ॥

तारतम्येन सर्वेऽपि महान्तश्चाणवो यतः ।
न च तत्प्रोक्तसृष्टौ तु मानं केवलकल्पना ॥ ६३३ ॥

[परमाण्वादिभिः अनियमसृष्टौ साक्षी प्रमाणम्]

कथं साक्षिमितस्यास्य शङ्कयाद्वारणे क्वचित् ।

[परमाण्वादेः साक्ष्यवेद्यत्वे अनुमानवेद्यत्वमपि न स्यात्]

यदि साक्षिमितं नैतन्नानुमा तत्र वर्तते ॥ ६३४ ॥

पक्षीकर्तुमशक्यत्वात् कुत एवानुमा भवेत् ।
यत्र नास्ति पदन्यासः कस्तं विषयमाप्नुयात् ॥ ६३५ ॥

[आकाशादिपरिमाणोत्कर्षानन्त्यमपि न आनुमानिकम्]

देशान्तरादिशब्दाश्च शशशृङ्गादिशब्दवत् ।
सदृशं च सजातीयं नास्मत्पक्षे किमेव हि ॥ ६३६ ॥

[आगमस्य अनादरे शशशृङ्गादेरपि सिद्धिः स्यात्]

येनैव च प्रकारेणात्यसिद्धमनुमीयते ।
तेनैव शशशृङ्गादेः शक्यमस्तित्वकल्पनम् ॥ ६३७ ॥

[प्रत्यक्षागमावधृतमेव व्याप्त्यादि अनुमानप्रमाणाङ्गम्]

प्रत्यक्षमागमो वाऽपि भवेद्यत्र नियामकः ।
सैव व्याप्तिर्भवेन्मानं नान्त्या सन्दिग्धमूलतः ॥ ६३८ ॥

सहदर्शनमात्रेण न व्याप्तिरवसीयते ।
यदैवाव्यतिरेकेऽस्य ह्यक्षजं वागमो भवेत् ॥ ६३९ ॥

तन्निर्धारितयुक्तिर्वा व्याप्तिः सैवापरा न हि ।
अन्यथा सप्तमरसभावोऽप्यनुमयाऽऽपतेत्   ॥ ६४० ॥

अनिष्टानि च सर्वाणि ह्यनुमा कामचारिणी ।

**॥ ॐ उभयथाऽपि न कर्माऽतस्तदभावः ॐ ॥२-२-१२॥**

**॥ ॐ समवायाभ्युपगमाच्च साम्यादनवस्थितेः ॐ ॥ २-२-१३ ॥**

**॥ ॐ नित्यमेव च भावात् ॐ ॥ २-२-१४ ॥**

[**समवायस्य समवायान्तरकल्पनाप्रसङ्गप्रदर्शनेन समवायनिरासः**]

कार्यकारणयोश्चैव गुणादेः पञ्चकस्य च   ॥ ६४१ ॥

भिन्नस्यैव तु सम्बन्धः समवायोऽन्य ईर्यते ।
भिन्नत्वसाम्यतस्तस्य ताभ्यां योगो भवेद्ध्रुवम्   ॥ ६४२ ॥

[**समवायस्य स्वनिर्वाहकत्वकल्पने द्रव्यस्यैव तथात्वमस्तु**]

स स्वनिर्वाहकश्चेत्स्यात् द्रव्यमेव तथा न किम् ।

[**समवाये तद्गतत्वादिविशेषाङ्गीकारे गुणक्रियादिकमपि द्रव्यस्वरूपमेव सत् विशेषात्मकमस्तु**]

विशेषस्तद्गतत्वादिर्यद्यभिन्नेऽवसीयते   ॥ ६४३ ॥

गुणक्रियादिरूपस्य निषेधः केन हेतुना ।

[**द्रव्ये गुणाद्यभेदेऽपि विशेषबलाद् भेदव्यवहारः**]

द्रव्यमेव ततोऽनन्तविशेषात्मतया सदा   ॥ ६४४ ॥

नानाव्यवहृतेर्हेतुरनन्तत्वं विशेषतः ।

[**विशेषः स्वेनैव विशेषी न पुनः विशेषान्तरेण**]

विशेषश्च विशेषी स स्वेनैव समवायवत् ॥ ६४५ ॥

[**गुणगुण्यादीनां भेदे कल्पनागौरवम्**]

कल्पनागुरुतादोषात् पदार्थान्तरता न हि ।
कल्पयित्वा षट् पदार्थान् साभावानपि केवलम् ॥ ६४६ ॥

एकस्मिन् स विशेषश्चेत् किं पूर्वं तस्य विस्मृतिः ।

[**प्रत्यक्षादिप्रमाणसिद्धप्रमाणानङ्गीकारो न युक्तः**]

येन प्रत्यक्षसिद्धेन व्यवहारोऽखिलो भवेत् ॥ ६४७ ॥

भावाभावविभागेन यं विना न कथश्चन ।
एतादृशे विशेषेऽस्मिन् को द्वेषो वादिनां भवेत् ॥ ६४८ ॥

[**साक्षी अवयवावयव्यादेः सविशेषाभेदं गृह्णाति**]

अभेदेन प्रतीतिश्च कार्यकारणपूर्वके ।
अभावान्ते पदार्थेऽस्ति सविशेषाऽवसीयते ॥ ६४९ ॥

[**पदार्थधर्माणामाश्रयतः भेदस्य अत्यन्ताभेदस्य वा अनुपपत्तेः सर्वपदार्थेषु विशेषोऽङ्गीकार्यः**]

सामान्यादिपदार्थेषु तन्निष्ठत्वादयोऽखिलाः ।
कथं धर्मा निवार्यन्ते वस्त्वैक्येऽपि हि वादिभिः ॥ ६५० ॥

कार्यस्य तत्तन्निष्ठत्वं गुणादेर्व्यापितादिकः ।

कथं विशेषो नैवास्ति .... ........

[धर्माणां भेदे तेषां षट्पदार्थातिरिक्तत्वं स्यात्]

.... ...... स च धर्मोऽपरो यदि ॥ ६५१ ॥

षट्पदार्थातिरेकः स्यात् ..... ......

[षट्पदार्थनियमपरित्यागेऽपि धर्मसन्तानानवस्था स्यात्]

....... ....... पदार्थानियमेऽपि हि ।
धर्मस्य धर्मसन्तानादनवस्थाखनिर्भवेत् ॥ ६५२ ॥

[अनवस्थाभयात् सामान्यादिषु सामान्यादिकमनङ्गीकुर्वता प्रकृते अनवस्था न परिहर्तुं शक्यते]

सामान्यस्यापि सामान्यं गुणस्यापि गुणो ह्यतः ।
नाङ्गीकृतः स च यदि नानवस्था क्वचिद्भवेत् ॥ ६५३ ॥

[धर्मधर्मिणोः सविशेषाभेदवादिनामस्माकं पक्षे न अनवस्था]

अस्मत्पक्षे गुणाद्याश्च तद्वन्तो हि विशेषतः ।
अनन्यत्वान्नानवस्था ..... ..............

[अयावदाश्रयभाविनां अवयविगुणकर्मसामान्यानाम-वयवादिभिः भेदाभेदाभ्युपगमः]

....... ....... भेदो नाशे भवेत्तथा ॥ ६५४ ॥

विशेषमेव संश्रित्य ..... .......

[प्रमाणानुसारेण भेदाभेदौ उपेत्य विशेषेण विरोधाभावाभिधानम्]

..... ...... विशेषो बलवान् यतः ।
दृष्टिप्रमाणतश्चैव विरोधो दर्शने कथम् ॥ ६५५ ॥

विरोधो ह्यविरोधश्च यतो दर्शनमानकौ ।
ततो दृष्टे विरोधस्तु सद्भिरापाद्यते कथम् ॥ ६५६ ॥

[धर्मधर्मिणोः सविशेषाभेदस्य भेदाभेदयोश्च तत्र तत्र व्यवस्थाप्रदर्शनम्]

अभिन्नो भगवान् स्वेन तदन्येन विभेदवान् ।
नित्या धर्मास्तदीयास्तु सर्वेऽस्मान्नैव भेदिनः ॥ ६५७ ॥

सामस्त्योच्छेदिनोऽन्यत्र धर्मा उभयरूपिणः ।
भावे त एव चोच्छेदात्तदन्ये च समस्तशः ॥ ६५८ ॥

[अंशानामानन्त्येऽपि अंशांशिनोरभेदेन अंशसंयोग एव अंशिसंयोग इति न अनवस्था]

अंशांशिनोरभेदेन त्वंशसंयोग एव हि ।
अंशिनो नानवस्थाऽतो यद्यप्यंशेष्वविश्रमः ॥ ६५९ ॥

एकस्मिन् जात एवान्यः संयोगो जायते यदि ।
अनवस्था तदैव स्यात्संयोगैक्ये भवेत्क सा ॥ ६६० ॥

अंशे संयोगदृष्टेश्च दृष्टे का साऽनवस्थितिः ।

[संयोगस्य अंशावृत्तित्वे कार्येषु परिमाणोत्कर्षो न स्यात्]

यद्यंशगो न संयोगः कार्येषु प्रथिमा कथम् ॥ ६६१ ॥

[परमाणुपरिमाणाद् व्यणुकस्य परिमाणोत्कर्षो नास्तीति वचः स्वव्याहतम्]

परमाणोरणोर्नास्ति महत्तेत्यद्भुतं वचः ।
अणूनां प्रथिमापेक्षां विनैव त्र्यणुकेऽपि सः ॥ ६६२ ॥

परमाणोर्महत्वं च विनेत्येतद्वचः कथम् ।

[अंशिनः सर्वैरंशैः अत्यन्ताभेदः, एकैकांशेन तु भेदाभेदौ]

अंशिनोंऽशैरभेदोऽयमंशेन तु भिदाऽभिदा ।। ६६३ ।।

सर्वप्रत्यक्षविषयः कथमेव ह्यपोद्यते ।

[संयोगविभागपृथक्त्वादीनां अनेकाश्रितत्वानङ्गीकारेण अवयव्यादीनामवयवादिभिरभेदे न कश्चिदतिप्रसङ्गः]

संयोगश्च विभागश्च भेदश्चैव पृथक् पृथक् ।। ६६४ ।।

अन्योन्यप्रतियोगेन ह्युभयोरपि दृश्यते ।
भिन्ना इति तु भेदानां समुदायो हि दृश्यते ।। ६६५ ।।

यथैव च पदार्थानामनयोर्भेद इत्यपि ।
इतोऽमुष्यामुतोऽमुष्य भेदो दृष्टो द्विधर्मिकः ।। ६६६ ।।

तत्रैकवचनं यत्तद्विप्राणां भोजनं यथा ।

[नरत्वादिसामान्यमपि न अनुगतं किन्तु प्रतिव्यक्ति भिन्नम्]

नरत्वादिकमप्येवं तत्तद्धर्मतयेयते ।। ६६७ ।।

न सर्वधर्म एकोऽस्ति समुदायस्तु भिन्नगः ।

[सादृश्यमपि तत्तत्पदार्थेषु भिन्नम्

एतादृशं च सादृश्यं पदार्थेषु पृथक् पृथक् ।। ६६८ ।।

[एकस्मिन् नरे नष्टे तद्गतनरत्वादेः नाशात्, नरान्तरे दर्शनाच्च नरत्वादिकं प्रतिव्यक्ति भिन्नम्]

एकस्मिन् स विनष्टेऽपि यतोऽन्यत्रैव दृश्यते ।
कुतो भस्मत्वमाप्तस्य नरत्वं पुनरिष्यते ।। ६६९ ।।

एकत्वे नास्ति मानं च ..... .....

[सामान्यादीनां प्रत्याश्रयं भेदे श्रुतिः प्रमाणम्]

..... ...... श्रुतिरप्याह सादरम् ।
''भिन्नाश्च भिन्नधर्माश्च पदार्था निखिला अपि ।। ६७० ।।

स्वैः स्वैर्धर्मैरभिन्नाश्च स्वरूपैरपि सर्वशः ।
अनिवृत्तविनाशास्तु धर्मा उभयरूपकाः ।। ६७१ ।।

न केनचिदभिन्नोऽतो भगवान् स्वैर्गुणैर्विना'' ।

[गोत्वादिसामान्यस्य अनेकवृत्तित्वाभावे गोशब्दसङ्गतिग्रहणलक्षणव्युत्पत्तिर्न स्यादित्याक्षेपो न युक्तः, सादृश्येन व्युत्पत्तेः सम्भवात्]

इति व्युत्पत्तिरपि हि सादृश्येनैव गम्यते ।। ६७२ ।।

सर्वेषु युगपच्छब्दः सदृशेषु प्रवर्तते ।
तथापि प्राप्तितस्त्वेकवचनाच्च विशेषतः ।। ६७३ ।।

अभीष्टावगतिश्च स्याच्छक्तिः सादृश्यगा यतः ।
तादृशोऽयं च तच्छब्द इति ज्ञापयति स्फुटम् ।। ६७४ ।।

[अनुगतसामान्यस्यैव व्युत्पादकत्वे जाति-व्यक्ति-स्वरूपेत्यादिसामान्यरहितशब्दानां व्युत्पत्तिर्न स्यात्]

जातितश्चेत्कथं तासु तत्र चेदनवस्थितिः ।
तथैव व्यक्तिविज्ञानं व्यक्तित्वाभावदूषितम् ।। ६७५ ।।

यदि तच्चास्ति तस्यापि विशेषेष्वनवस्थितिः ।
कथं स्वरूपत्वमपि ज्ञायतेऽनुगतं यदि ।। ६७६ ।।

एकव्युत्पत्तिपर्यन्तमनवस्थादिदूषितम् ।

[अनुगतसामान्यदूषणोपसंहारः]

कल्पनागौरवात्तेन युक्ता नानुगकल्पना ॥ ६७७ ॥

[समवायस्य एकत्वनिरासः]

औपाधिकविशिष्टाद्यमपि तद्वस्तु किं ततः ।
अन्यत्तदेव चेदग्निमत्त्वं किं तत्र भण्यते ॥ ६७८ ॥

अग्निसंयोगमात्रं चेद्भवेत्तत्सिद्धसाधनम् ।
भूधरस्याग्निसंयोगो यदि षष्ठ्यर्थ एव कः ॥ ६७९ ॥

समवायो यदि ह्यस्य चैकत्वात्सिद्धसाधनम् ।
यद्यस्यौपाधिको भेदः कुत एकत्वमिष्यते ॥ ६८० ॥

नानिर्वाच्यं हि तेनेष्टमत औपाधिकान्ययोः ।
सत्यत्वात्को विशेषः स्यान्मायावाद्यन्यथा भवेत् ॥ ६८१ ॥

उपाधिजन्यं तद्गम्यमिति चौपाधिकं भवेत् ।
उभयत्राप्यनन्ताः स्युः समवाया इतस्ततः ॥ ६८२ ॥

भिन्नत्वं चैव तेष्वस्ति को विशेष उपाधिगे ।
अविद्यमान एवान्यः समवायोऽधिगम्यते ॥ ६८३ ॥

उपाधिना तद्गमकमनुमानं न मा भवेत् ।

[समवायस्य नित्यत्वनिरासः]

एवमेवासतः सत्तासमवायो जनिर्मता ॥ ६८४ ॥

तत्रापि ह्युक्तदोषाणां नैव किञ्चिन्निवारकम् ।

**[अस्मत्पक्षे विशिष्टादिनिरूपणे जनिनिरूपणे च नोक्तदोषप्रसङ्गः]**

अस्मत्पक्षे विशेषस्य सर्वत्राङ्गीकृतत्वतः ॥ ६८५ ॥

नास्ति दोषः कचिद्भावो ह्यभावश्च स एव हि ।

**[अभावभावयोः भावाभावधर्मवत्त्वं, निषेधविधिबुद्धिविषयत्वं च]**

अभावस्य च धर्माः स्युर्भावास्तेषां च तेऽखिलाः ॥६८६॥

प्रत्यक्षमानतः सर्वमेतन्नो वारणक्षमम् ।
सर्वे भावा अभावाश्च पदार्थास्तेन सर्वदा ॥ ६८७ ॥

तथाऽपि प्रथमं बुद्धेर्यो निषेधस्य गोचरः ।
सोऽभावो विधिबुद्धेस्तु गोचरः प्रथमं परः ॥ ६८८ ॥

तस्मात्प्रध्वस्तभेदादि सदित्येवावगम्यते ।
अस्त्यभावोऽस्ति च ध्वंसो देहाभावाश्च भस्मता ॥ ६८९ ॥

इत्यादि युज्यते सर्वं प्रत्यक्षादिप्रमाणतः ।

**[अन्योन्याभावभेदपृथक्त्वानां न परस्परं भेदः]**

अन्योन्याभावभेदौ च पृथक्त्वं च पृथक् पृथक् ॥ ६९० ॥

यत्कल्पयन्ति तच्चैव कल्पनागौरवाद्धतम् ।
पर्यायत्वेन ते शब्दा ज्ञायन्ते सर्व एव हि ॥ ६९१ ॥

**[भेदस्य धर्मिस्वरूपत्वे सर्वशून्यत्वापत्तिरित्याक्षेपनिरासः]**

भेदस्य तु स्वरूपत्वे ये वदन्ति च शून्यताम् ।
अद्भुतास्ते यतोऽन्यस्य प्रतियोगित्वमिष्यते ॥ ६९२ ॥

प्रतियोगिनो हि भेदोऽयं न तु स्वस्मात्कथञ्चन ।
विभागेनाल्पतैव स्यात्कुत एव तु शून्यता   ॥ ६९३ ॥

न शून्यानां हि संयोगाद्भावो वस्तुन इष्यते ।
विदारणार्थो धातुश्च विभागगुणवाचकः   ॥ ६९४ ॥

अविदारणेऽपि ह्यास्यस्य भिन्नावोष्ठौ च तस्य च ।
अत उन्मत्तवाक्यत्वान्मायावादो ह्युपेक्षितः   ॥ ६९५ ॥

[**ईश्वरो न अष्टगुणः, किन्तु अनन्तगुणार्णवः**]

न चामन्दसदानन्दस्यन्यनन्तगुणार्णवः ।
ईश्वरोऽष्टगुणत्वेन प्रमेयोऽप्रमितत्वतः   ॥ ६९६ ॥

''मय्यनन्तगुणेऽनन्ते गुणतोऽनन्तविग्रहे'' ।
''अनन्तगुणमाहात्म्यशक्तिज्ञानमहार्णवः   ॥ ६९७ ॥

नारायणः परोऽशेषचेतनेभ्यः परं पदम्'' ।
इत्यादिवेदतद्वाक्यैरनन्तैश्चावसीयते   ॥ ६९८ ॥

अनन्तगुणता विष्णोः कथमेव ह्यपोद्यते ।
यद्यनन्तविशेषाश्च तज्ज्ञानादेर्निवारिताः   ॥ ६९९ ॥

कथं तत्तद्विषयता सार्वज्ञार्थं विधीयते ।
औपाधिकविशेषस्तु पूर्वमेव निराकृतः   ॥ ७०० ॥

[**ईश्वरज्ञानस्य स्वप्रकाशत्वसमर्थनम्**]

स्वप्रकाशत्वमपि तु यैर्ज्ञानस्य निवारितम् ।
कथं सर्वज्ञता तस्य स्वज्ञानाधिगमं विना   ॥ ७०१ ॥

ज्ञानं विश्वाधिगं त्वेकं तज्ज्ञानविषयं परम् ।
इति ज्ञानद्वयेनैव सर्ववित्परमेश्वरः ॥ ७०२ ॥

इति चेदेष एवार्थस्तज्ज्ञानावसितो यदि ।
स्वप्रकाशत्वमेव स्याज्ज्ञानं ह्येतद्विशेषणम् ॥ ७०३ ॥

ज्ञानान्तरेण चेदत्र भवेदेवानवस्थितिः ।
स्वप्रकाशत्वमेतस्मादुर्निवारं समापतेत् ॥ ७०४ ॥

[ईश्वरे दुःखाभावेन सुखाभावसाधनं न युक्तम्]

सुखवान् दुःखवांश्च स्यादिति व्याप्तिश्च नो भवेत् ।
निर्दुःखत्वं महानन्दः श्रुत्यैवेशस्य भण्यते ॥ ७०५ ॥

योऽशनायापिपासे च शोकादींश्चातिवर्तते ।
अनन्दं ब्रह्मणो विद्वान् विपाप्मेत्यादिका च सा ॥ ७०६ ॥

ईश्वरस्य तथेष्टत्वं दुःखित्वोपाधिरित्यपि ।
उक्ते किमुत्तरं ब्रूयात् श्रुत्यनादरतत्परः ॥ ७०७ ॥

न चात्मदुःखितेच्छा स्यादत एतन्निवार्यते ।
सहदर्शनमात्रेण श्रुतीनामपलापकः ॥ ७०८ ॥

यज्ञादेरपि पापस्य हेतुत्वं हिंसया युतेः ।
नानुमाति कथं तत्र यद्युपाधिर्निषिद्धता ॥ ७०९ ॥

अदुःखित्वेन चानुक्तिः कथं नोपाधितां व्रजेत् ।
''अदुःखमितरत्सर्वं जीवा एव तु दुःखिनः ॥ ७१० ॥

तेषां दुःखप्रहाणाय श्रुतिरेषा प्रवर्तते" ।
इति श्रुतिर्हि परमा श्रुत्युक्तिर्यदि कारणम्  ।। ७११ ।।

किं कार्यमनुमानेन गलस्तनसमेन हि ।
अनुमानेन यद्यर्थः श्रुतिदृष्टोऽप्यपोद्यते  ।। ७१२ ।।

पूर्वोक्तेन प्रकारेण नेश्वरो धर्म एव च ।
स्यात्तत्फलं च तेनात्र श्रुतिरेव प्रमा भवेत्  ।। ७१३ ।।

ईशस्यानुमया सिद्धेः श्रुतिर्धर्मिप्रमा भवेत् ।
तया सर्वगुणैः पूर्ण ईश उक्तो यतस्ततः  ।। ७१४ ।।

अनानन्दानुमानस्य धर्मिग्राहिविरोधतः ।
न प्रमाणं भवेत्तस्मान्नानुमात्रोपयोगिनी  ।। ७१५ ।।

**[वैशेषिकमते कालभेदानङ्गीकारेण ईश्वरेच्छादिकारणानां सर्वदा सत्त्वेन सर्वदा कार्योत्पत्तिप्रसङ्गः]**

नित्येच्छत्वात्परेशस्य परमाणुसदात्वतः ।
अदृष्टकालयोश्चैव भावात्कार्यं सदा भवेत्  ।। ७१६ ।।

नहि कालविभेदोऽस्ति तत्पक्षे ........

**[अस्मन्मते कालविशेषे उत्पत्तेरेव ईश्वरेच्छाविषयत्वेन न सर्वदा कार्योत्पत्तिः]**

......... ...... अस्मन्मते हरेः ।
विशेषकाल एवैतत्सृष्ट्यादीच्छा सदातना  ।। ७१७ ।।

[**कालविशेषाः ईश्वरजन्याः**]

विशेषाश्चैव कालस्य हरेरिच्छावशाः सदा ।
''सर्वे निमेषा'' इति हि श्रुतिरेवाह सादरम् ॥ ७१८ ॥

उदीरयति कालाख्यां शक्तिमित्यस्य वागपि ।
कालस्य कालगत्वेन न विरोधोऽस्ति कश्चन ॥ ७१९ ॥

[**ईश्वरेच्छायाः सर्वदा विद्यमानत्वेऽपि शक्तिव्यक्तिरूपावस्थित-सिसृक्षात्वादिविशेषवत्वात् सृष्ट्यादेः समयनियमः**]

असङ्ख्यातविशेषत्वादिच्छाया अपि सर्वदा ।

[**कालः स्वगतः ईश्वराधीनश्च**]

''ईशो देशश्च कालश्च स्वगता एव सर्वदा ॥ ७२० ॥

ईशाधीनौ च तौ नित्यं तदाधारौ च तद्गतौ'' ।
इति श्रुतिरपि प्राह काले स्वोद्दिष्ट एव तु ॥ ७२१ ॥

तत्कालसृष्टिमेवातो वाञ्छतीशः सदैव हि ।
स्यात्कालः स तदैवेति कालस्य स्वगतत्वतः ॥ ७२२ ॥

[**ईश्वरेच्छायां सिसृक्षात्वादिवैचित्र्यं स्वभावादेव**]

स्वभावादेव हीच्छैषा ''देवस्यैष'' इति श्रुतेः ।

[**कारणानां कार्याणां च स्वभावोऽपि ईश्वराधीन एव**]

स्वभावोऽपि परेशेच्छावश इत्युदितः पुरा ॥ ७२३ ॥

नित्या अनित्याश्च ततस्तदधीना इति श्रुतिः ।

**॥ ॐ रूपादिमत्त्वाच्च विपर्ययो दर्शनात् ॐ ॥२-२-१५॥**

**।। ॐ उभयथा च दोषात् ॐ ।। २-२-१६ ।।**

[**वैशेषिकमते रूपादिमत्त्वेन परमाणूनामनित्यत्वमेव स्यात्**]

रूपस्पर्शादिहेतुभ्यः परमाणोरनित्यता ।। ७२४ ।।

अनुमेया ...... .........

**।। ॐ अपरिग्रहाच्चात्यन्तमनपेक्षा ॐ ।। २-२-१७ ।।**

[**'आत्मन आकाशः' इत्यादिश्रुतिविरुद्धत्वेन वैशेषिकमत-मनुपादेयमिति विष्णौ सर्वशब्दसमन्वये नास्ति तद्विरोधः**]

...... श्रुतीनां च विरुद्धत्वान्न तन्मतम् ।
उपादेयमतश्चायमविरुद्धः समन्वयः ।। ७२५ ।।

।। इति वैशेषिकाधिकरणम् ।। ६ ।।

**समुदायाधिकरणम् - ७**

**।। ॐ समुदाय उभयहेतुकेऽपि तदप्राप्तिः ॐ ।।२-२-१८।।**

[**सौगतमतनिरासः, वैभाषिकसौत्रान्तिकमतानुवादः**]

वैभाषिकाश्च सौत्रान्ताः स्वरसक्षणिकं जगत् ।
अणूनां समुदायं च कालकर्मनिमित्ततः ।। ७२६ ।।

उत्पत्तिकाले युक्तानामात्मानं च क्षणस्थितम् ।
नित्यं सन्तानमेतेषां पञ्चस्कन्धात्मना स्थितम् ।। ७२७ ।।

संस्काररूपविज्ञानसंज्ञादुःखात्मना स्थितिः ।
दुःखाभावं सुखं चाहुररूपज्ञानसन्ततिम् ।। ७२८ ।।

मोक्षं ..... ...... ........

[**परमाणुसमुदाय एव गोघटादिप्रपञ्चो, न त्ववयवी कश्चिदस्तीति तन्मतस्य निरासः**]

...... स समुदायो हि नैकस्मादेव युज्यते ।
नोभयोश्चोभयत्वं यत्समुदायव्यपेक्षया ।। ७२९ ।।

अतोऽन्योन्याश्रयत्वेन समुदायो न युज्यते ।

**।। ॐ इतरेतरप्रत्ययत्वादिति चेन्नोत्पत्तिमात्रनिमित्तत्वात् ।। ॐ २-२-१९ ।।**

अन्योन्यापेक्षया पुंसः समुदायत्ववेदनम् ।। ७३० ।।

स्यात्तत्सदातनत्वेऽपि तच्च सामीप्यहेतुकम् ।
इति चेत्कार्यसम्भूतिमात्रव्यापृतिकारणम् ।। ७३१ ।।

न तु कार्यविशेषेषु व्यापृतं कारणं भवेत् ।
अतोऽर्थेन्द्रियसंयोगिरूपकारणतात्मनः ।। ७३२ ।।

संयोगिरूपराहित्यान्नैव तज्ज्ञानतापि हि ।
विशेषकार्यजनकं यदि कारणमिष्यते ।। ७३३ ।।

कुतः समानरूपत्वं कार्याणामपि सर्वशः ।
अतोऽनियत्या यत्किञ्चिद्यस्य कस्यापि कारणम् ।। ७३४ ।।

अदृष्टमपि तस्यैव विशेषापादकं कुतः ।
यस्य कस्यापि यत्किञ्चिद्विशेषमुपपादयेत् ।। ७३५ ।।

कार्यं च कारणं चैव यत्किञ्चिद्यस्य कस्यचित् ।
भवेन्नियामकाभावादिदमस्यैव कारणम्   ।। ७३६ ।।

इति नित्यविनाशित्वे केन मानेन गम्यते ।
इदं न जायतेऽमुष्मादित्यत्रापि न कारणम्   ।। ७३७ ।।

**।। ॐ उत्तरोत्पादे च पूर्वनिरोधात् ॐ ।। २-२-२० ।।**

**।। ॐ असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा ॐ ।। २-२-२१ ।।**

**।। ॐ प्रतिसङ्ख्याऽप्रतिसङ्ख्यानिरोधाप्राप्तिरविच्छेदात् ।। ॐ २-२-२२ ।।**

**।। ॐ उभयथा च दोषात् ॐ ।। २-२-२३ ।।**

**।। ॐ आकाशे चाविशेषात् ॐ ।। २-२-२४ ।।**

**।। ॐ अनुस्मृतेश्च ॐ ।। २-२-२५ ।।**

[**सर्वक्षणिकतावादनिरासः**]

विनाशोत्पत्तयश्चैव न दृश्यन्ते सदातनाः ।
दृश्यते प्रत्यभिज्ञातः स्थिरत्वं सर्ववस्तुषु   ।। ७३८ ।।

फलादीनां विशेषेण सर्वत्राप्यनुमीयते ।
सत्त्वेन क्षणिकत्वं चेदाकाशस्याविशेषतः   ।। ७३९ ।।

अविशेषोऽखिलस्यापि सत्त्वात्किं नानुमीयते ।
यद्याकाशस्य सत्त्वं न कुत एव नरादिषु   ।। ७४० ।।

सधर्मिप्रतियोगित्वमभावस्य नियामकम् ।
तौ विना न ह्यभावश्च क्वचिद्दृष्टः कदाचन ।। ७४१ ।।

अधर्मिप्रतियोगित्वमाकाशस्यावगम्यते ।
स्वीकारत्यागतोऽदृष्टदृष्टयोः सर्ववस्तुषु ।। ७४२ ।।

गुणानुन्मत्त एवासौ विदधात्यधिकं पुनः ।
उत्तरोत्पत्तिमात्रेण विनाशात्पूर्ववस्तुनः ।। ७४३ ।।

न संस्कारार्पकत्वं च युज्यते कस्यचित्क्वचित् ।
अतो ज्ञातं मयेत्यादि न ज्ञेयमनुमा कुतः ।। ७४४ ।।

एकत्वमनुभूतिस्थं त्यक्त्वा निर्मानिका भिदा ।
कुत आत्मादिकेषु स्याद् बल्येवानुभवो यतः ।। ७४५ ।।

कार्यकारणयोश्चैककालीनत्वं विना कथम् ।
पूर्वसंस्कारयोगी स्यादुत्तरो नियमेन च ।। ७४६ ।।

सम्बद्धा एव संस्कारमन्यत्रादधतेऽखिलाः ।
असम्बद्धः कथं पूर्व उत्तरे वासनाकरः ।। ७४७ ।।

एककालतया योगं विना संस्कारतः कथम् ।
क्षणमात्रमवस्थानं स्वीकृतं सर्ववस्तुषु ।। ७४८ ।।

पूर्वमध्यापरकलाविकलः क्षण इष्यते ।
पूर्वभावभवं कार्यमुत तन्नाशसम्भवम् ।। ७४९ ।।

यौगपद्यं सति भवेदुत्पाद्यानामशेषतः ।
विनाशे चेन्न तत्कार्यं कार्योत्पत्तौ च का प्रमा ॥ ७५० ॥

अभेदेऽपि विशेषेण देहदीपफलादिषु ।
विशेषदर्शनं युक्तमस्माकमनुभूतितः ॥ ७५१ ॥

विशेषदर्शनं मानं यदि न स्थैर्यदृक्कुतः ।
दिक्सुखे च खदृष्टान्ताद्भावौ सचेत्कचिद्भवेत् ॥ ७५२ ॥

**[ज्ञानातिरिक्तः सर्वोऽपि रूपादिप्रपञ्चोऽनुमेय इति सौत्रान्तिकसिद्धान्तविशेषस्य दुर्बलत्वात् स्फुटतरानल्पदोषवत्त्वाच्च सूत्रे न निरासः]**

विश्वं प्रत्यक्षगं त्यक्त्वा तयोर्योऽनुमितं वदेत् ।
मायावादिवदेवासावुपेक्ष्यो भूतिमिच्छता ॥ ७५३ ॥

सर्वप्रमाणसिद्धं यद्बुद्धेर्भेदेन सर्वदा ।
कथं नु तस्य बुद्धित्वं विश्वमन्यच्च किं प्रमम् ॥ ७५४ ॥

सर्वलोको बिभेत्यज्ञो यस्मादनुभवात्सदा ।
तस्यापलापिनः किं न निष्प्रमाणकवादिनः ॥ ७५५ ॥

सोऽहं तदिदमेवाहं सुखी सद्गगनं दिशः ।
सत्या इत्याद्यनुभवाः सदा तत्प्रतिपक्षगाः ॥ ७५६ ॥

**[वैभाषिकसौत्रान्तिकमतनिराकरणोपसंहारः]**

अतो निर्मानमखिलप्रमाणप्रतिपक्षगम् ।
दुर्मतं कोऽनुगृह्णीयाद्विनासुरततिं क्वचित् ॥ ७५७ ॥

॥ इति समुदायाधिकरणम् ॥

## असदधिकरणम् - ८

## ।। ॐ नासतोऽदृष्टत्वात् ॐ ।। २-२-२६ ।।

**[माध्यमिकमतनिरासः । शून्यमेव तत्त्वं,
जगतः सांवृतसत्यत्वमिति तन्मतानुवादः]**

अपरः शून्यमखिलं मनोवाचामगोचरम् ।
निर्विशेषं स्वयं भातं निर्लेपमजरामरम् ।। ७५८ ।।

अशेषदोषरहितमनन्तं देशकालतः ।
वस्तुतश्च तदस्मीति नित्योपासापरोक्षितम् ।। ७५९ ।।

रागादिदोषरहितं तद्भावं योगिनं नयेत् ।
तस्यैवानादिसंवृत्या नानाभेदात्मकं जगत् ।। ७६० ।।

सदिवाभाति सत्यत्वं सांवृतं तस्य चेष्यते ।
पारमार्थिकसत्यत्वं शून्यादन्यस्य न क्वचित् ।। ७६१ ।।

सांवृतेनैव सत्त्वेन व्यवहारोऽखिलो भवेत् ।
शून्यात्संवृतियोगेन विश्वमेतत्प्रवर्तते ।। ७६२ ।।

सृष्टिकाले पुनश्चान्ते स्तिमितं शून्यतां व्रजेत् ।
इति ब्रूते ..... .... .... ............

## ।। ॐ नासतोऽदृष्टत्वात् ॐ ।। २-२-२६ ।।

**[असतः शून्यस्य जगत्कारणत्वनिरासः]**

.... .... तमुद्दिश्य जगाद जगतां गुरुः ।। ७६३ ।।

नासतो जगतो भावो न हि दृष्टाऽसतो जनिः ।
सतः क्वचित्प्रमाणं च दृष्टिरेवाखिलाद्वरम्   ।। ७६४ ।।

**।। ॐ उदासीनानामपि चैवं सिद्धिः ॐ ।। २-२-२७ ।।**

यद्येवं सप्तमरसान् मधुरादिव पीनता ।
भवेज्जनस्य मार्जारशृङ्गं गोरिव घातकम्   ।। ७६५ ।।

कार्यार्थी कारणं सच्च नोपादद्यात्कथञ्चन ।
न प्रवर्तेत चेष्टाय शून्यादेवेष्टसम्भवात्   ।। ७६६ ।।

देशकालादिनियमो न हि शून्यात् सतो भवेत् ।
पुरुषेच्छानुसारेण यदि किञ्चित्प्रजायते   ।। ७६७ ।।

किं नानुमीयते तद्वद्वस्तुत्वात्पुरुषोद्भवः ।
सर्वस्यापि ...... ...... ......

**।। ॐ नाभाव उपलब्धे ॐ ।। २-२-२८ ।।**

[**विश्वस्य असत्त्वोक्तिनिरासः**]

...... न चाभावो विश्वं सदिति गम्यते   ।। ७६८ ।।

यतोऽनुभवविरोधे तु वचनं वादिनः कुतः ।

[**विश्वस्य स्वप्नभ्रान्तिसमत्वनिरासः**]

स्वप्नभ्रान्तिवदेवेदं संवृत्यैवोपलभ्यते   ।। ७६९ ।।

यदि सत्त्वेन ....... ........

**।। ॐ वैधर्म्याच्च न स्वप्नादिवत् ॐ ।। २-२-२९ ।।**

...... ..... किश्चात्र भ्रमो नैव निवर्तते ।
अनादेरस्य विश्वस्य निवृत्तिर्यदि चेष्यते ।। ७७० ।।

निवृत्तिश्च निवर्तेत तस्या भ्रान्तित्वसम्भवात् ।
दृष्टस्य भ्रान्तितो चेत्स्याददृष्टे न भ्रमः कुतः ।। ७७१ ।।

गवामशृङ्गिभावेन न हि स्याच्छशशृङ्गिता ।

**[सतः कारणत्ववादिनां नैते दोषाः]**

अस्माकं तु प्रमाणेन प्रसादादीश्वरस्य च ।। ७७२ ।।

उक्तभङ्ग्यागमानां च प्रामाण्याद्युज्यतेऽखिलम् ।

**[मिथ्यात्वसाधकानुमाननिरासः]**

दृश्यत्वाद्विमतं मिथ्या स्वप्नवच्चेदियं च मा ।। ७७३ ।।

मिथ्या चेत्साध्यसिद्धिर्न व्यभिचारो न चेद्भवेत् ।
साधकत्वमसत्यस्य साध्यं विप्रतिपत्तितः ।। ७७४ ।।

तस्य चेत्यनवस्था स्यात्सत्त्वं चास्यानुभूतितः ।
अनुभूतिविरोधेन मिथ्यात्वे मा न काचन ।। ७७५ ।।

**[साक्षिणा प्रत्यक्षविषयस्य त्रैकालिकाबाध्यत्वरूपसत्त्वं गृह्यते]**

अतीतानागतौ कालावपि नः साक्षिगोचरौ ।
तत्सम्बन्धितया सत्त्वमपि दृष्टस्य साक्षिगम् ।। ७७६ ।।

दृढदृष्टं तु यद्दृष्टं दृष्टाभासस्ततोऽपरम् ।

**[दृश्यत्वाद्यनुमानानां सत्प्रतिपक्षत्वम्]**

भ्रान्तेः संवृतिसत्यस्य विशेषो व्यभिचारवान् ।। ७७७ ।।

तेनाप्यङ्गीकृतः सम्यक् स नः सत्यत्वमेव हि ।
विज्ञानाद्व्यभिचारोऽस्य कदाचित्स्यादिति प्रमा ।। ७७८ ।।

नैव दृष्टा प्रमा सा च न भवेत्स्वविरोधतः ।

[**अनेकभेदभिन्नस्य प्रपञ्चस्य प्रत्यक्षत्वं सम्भवति, भेदस्यापि प्रत्यक्षत्वं सम्भवति, भेदस्य धर्मिस्वरूपत्वात् न अन्योन्याश्रयदोषः, अतः प्रपञ्चस्य न सांवृतत्वम्**]

भेदो विशेषधर्म्यादिग्रहणापेक्षया यदि ।। ७७९ ।।

अन्योन्याश्रयताहेतोर्दुर्ग्राह्य इति यन्न तत् ।
स्वरूपं वस्तुनो भेदः यन्न तस्य ग्रहेऽग्रहः ।। ७८० ।।

अन्यथास्यामुना भेद इति वक्तुं न शक्यते ।
अगृहीतो यदा भेदस्तदा स्वस्मादिति ग्रहः ।। ७८१ ।।

स्यात्प्रतीतिविरोधाच्च न हि कश्चित्तथा वदेत् ।

[**भेदस्य धर्मिस्वरूपत्वमनङ्गीकुर्वतां मतेऽपि न अन्योन्याश्रयः**]

धर्मित्वप्रतियोगित्वतद्भेदा युगपद्यदि ।। ७८२ ।।

विशेषणं विशेष्यं च तद्भावश्चैव गृह्यते ।
को विरोधः स्वरूपेण गृहीतो भेद एव तु ।। ७८३ ।।

अस्यामुष्मादिति पुनर्विशेषेणैव गृह्यते ।

[**अहेतुप्रसङ्गनित्यसमजात्युत्तरेण माध्यमिकमायावादिनौ निराकरोति**]

किञ्च भेदः कथं ग्राह्य इति यः परिपृच्छति ।। ७८४ ।।

धर्म्यादिभेदग्रहणात्तेनोक्तोऽन्योन्यसंश्रयः ।
अन्यत्वाग्रहणे प्रोक्तः कथमन्योन्यसंश्रयः ।। ७८५ ।।

अन्यत्वं यदि सिद्धं स्यात्कथमन्योन्यसंश्रयः ।
एतादृशस्य वक्तारावुभौ जात्युत्तराकरौ ।। ७८६ ।।

मायी माध्यमिकश्चैव तदुपेक्ष्यौ बुभूषुभिः ।

**[शून्यवादमायावादयोः नैव वैलक्षण्यम्]**

यच्छून्यवादिनः शून्यं तदेव ब्रह्म मायिनः ।। ७८७ ।।

न हि लक्षणभेदोऽस्ति निर्विशेषत्वतस्तयोः ।
अनृतादिविरोधित्वमुभयोश्च स्वलक्षणम् ।। ७८८ ।।

**[मिथ्याभूतस्य असाधकत्वं स्फुटत्वात्सूत्रे नोक्तम्]**

स्ववाक्याभावसंवादान्न कृत्यं प्रतिवादिनः ।
तत्पक्ष इति वैधर्म्यान्न स्वप्नादिवदित्यजः ।। ७८९ ।।

अप्रयत्नान्निराचक्रे .... ..... ......

**['वैधर्म्याचे'ति चकारेण प्रपञ्चमिथ्यात्वस्य प्रत्यक्षविरुद्धत्वं निष्प्रमाणत्वं च सूचितम्]**

......... चेति दृष्टिविरुद्धताम् ।
निष्प्रमाणत्वमप्यस्य सूचयामास विश्वकृत् ।। ७९० ।।

।। इति असदधिकरणम् ।। ८ ।।

## अनुपलब्ध्यधिकरणम् - ९

### ।। ॐ न भावोऽनुपलब्धेः ॐ ।। २-२-३० ।।

[**योगाचारमतनिरासः**]

ज्ञानमेवैकमखिलज्ञेयाकारं प्रभासते ।
तत्र सन्ततिभेदश्च स्वभेदो भेद एव च   ।। ७९१ ।।

कल्पिताः प्रतिभासन्ते नानासंवृतिभूमिषु ।
इत्येतदपि नो युक्तं न हि ज्ञानतया जगत्   ।। ७९२ ।।

भासतेऽनुभवस्यैव विरुद्धत्वादपेशलम् ।
तन्मतं ..... ...... .......

### ।। ॐ क्षणिकत्वाच्च ॐ ।। २-२-३१ ।।

[**स्थिरस्य जगतः क्षणिकज्ञानेन अभेदः न युज्यते**]

.....क्षणिकत्वाच्च ज्ञानस्य स्थिररूपतः   ।। ७९३ ।।

ज्ञेयस्योक्तप्रकारेण .......................

### ।। ॐ सर्वथानुपपत्तेश्च ॐ ।। २-२-३२ ।।

[**सर्वश्रुतिविरुद्धत्वात् सर्वे बौद्धपक्षाः न युक्ताः**]

.................. सर्वश्रुतिविरोधतः ।
अनुभूतिविरुद्धत्वादपि पक्षा इमेऽशिवाः   ।। ७९४ ।।

।। इति अनुपलब्ध्यधिकरणम् ।। ९ ।।

**नैकस्मिन्नधिकरणम् - १०**

**।। ॐ नैकस्मिन्नसम्भवात् ॐ ।। २-२-३३ ।।**

**[जैनमतनिरासः]**

आह क्षपणको विश्वं सदसद्द्वयमद्वयम् ।
द्वयाद्वयमतत्सर्वं सप्तभङ्गि सदातनम् ।। ७९५ ।।

**[सप्तभङ्गीनिरासः]**

नैतत्पदार्थ एकस्मिन् युक्तं दृष्टिविरोधतः ।
भावाभावतया विश्वं येन रूपेण मीयते ।। ७९६ ।।

तद्रूपमेव तदिति नियमः केन वार्यते ।
तत्तद्दोषनिवृत्त्यर्थं स्वीकृता तत्तदात्मता ।। ७९७ ।।

यदि तैरखिलैर्दोषैर्लिप्यते चलदर्शनः ।
अतिहाय प्रमाणाप्तनियमं सदसत्तया ।। ७९८ ।।

अशेषमाविरुद्धं च निर्मानं व्याहतं सदा ।
सर्वप्रकारं वदतो दृष्टहानिरमग्रहः ।। ७९९ ।।

स्वव्याहतत्वमित्याद्या दोषाः सर्वे भवन्ति हि ।

**।। ॐ एवं चात्माकात्स्न्र्यम् ॐ ।। २-२-३४ ।।**

**।। ॐ न च पर्यायादप्यविरोधो विकारादिभ्यः ॐ ।। २-२-३५ ।।**

**[आत्मनः कायपरिमाणत्वनिरासः]**

वक्ति स्वप्रभमात्मानं देहमानं तदप्यलम्   ॥ ८०० ॥

दृष्टं नानाशरीरेषु प्रवेशादन्यथाभवात् ।

**[आत्मनः स्थूलसूक्ष्मशरीरेषु प्रवेशात्
स्थूलसूक्ष्मपरिमाणोपजनने अनित्यत्वापत्तिः]**

अन्यथाभावि यद्वस्तु तदनित्यमिति स्थितिः   ॥ ८०१ ॥

तन्मते तदनित्यत्वं पुद्गलस्यानिवारितम् ।
नानित्यतास्मत्पक्षे तु चैतन्यादेर्विशेषिणः   ॥ ८०२ ॥

लक्षणस्य निवृत्तौ तु स्यान्न तच्चेतने क्वचित् ।
ओतप्रोतात्मकत्वं तु पटे देहेऽङ्गसंस्थितिः   ॥ ८०३ ॥

इत्यादिलक्षणस्यैव निवृत्तौ स्यादनित्यता ।
भौतिकं त्वेव रूपादि व्याप्तं नाशेन नो मते   ॥ ८०४ ॥

नैवं तस्यान्यथाभावो यस्यानित्यत्वमीरितम् ।
रूपादियुक्तस्य तथा जगन्नाशित्वसिद्धये   ॥ ८०५ ॥

व्याप्त्या तयाऽन्यथाभावाद् आत्मनोऽनित्यता भवेत् ।

**॥ ॐ अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषात् ॐ
॥ २-२-३६ ॥**

**[सन्ततोर्ध्वगतेर्मुक्तित्वे आत्मनः विकृतिः अनित्यत्वं च स्यात्]**

नित्योर्ध्वगतिरप्येषा या मुक्तिरिति कथ्यते   ॥ ८०६ ॥

अलोकाकाशमाप्तस्य कथं न विकृतिश्च सा ।
कीदृशश्चान्यथाभावो नाशहेतुतयेष्यते ॥ ८०७ ॥

संस्थानापगमश्चेत्स न हि भूसागरादिषु ।
यः कश्चिदन्यथाभावो यदि मुक्तिश्च तादृशी ॥ ८०८ ॥

[स्थावराणामनात्मत्वनिरासः]

देहमाने विकारः स्यादिति स्थास्नूननात्मनः ।
आह हस्त्यादिदेहेषु ह्यपि स्यादन्यथाभवः ॥ ८०९ ॥

अणुदेहस्य जीवस्य गजत्वे विकृतिर्हि या ।
देहव्याप्तौ विशेषः कस्तस्याः स्थास्नुतनौ च नुः ॥ ८१० ॥

[वृक्षादीनां सेन्द्रियत्वं सात्मकत्वं च]

गीतात्पुष्पफलावाप्तिः स्पर्शात्कार्श्यं रसात्स्थितिः ।
अपि वृक्षस्य दृश्यन्त इति नानात्मता भवेत् ॥ ८११ ॥

एवं चात्माकात्स्न्र्यमिति तत एवाह वेदवित् ।
॥ इति नैकस्मिन्नधिकरणम् ॥ १० ॥

पत्युरधिकरणम् - ११

॥ ॐ पत्युरसामञ्जस्यात् ॐ ॥ २-२-३७ ॥

[पाशुपतमतनिरासः, तन्मतानुवादः]

सर्वज्ञत्वादिकैः सर्वैर्गुणैर्युक्तं सदाशिवम् ॥ ८१२ ॥

जगद्विचित्ररचनाकर्तारं दोषवर्जितम् ।

आहुः पाशुपताः .... .......

[**पशुपतेः दोषित्वश्रवणात् तस्य जगत्कारणत्वादिकं नोपादेयम्**]

.... ...... तच्च बहुश्रुतिविरोधतः   ।। ८१३ ।।

नोपादेयं मतं ह्यस्य देवस्य स्तुहिगर्तगम् ।
उत्पिपेष शिरस्तस्य गृणीषे सत्पतिं पदम्   ।। ८१४ ।।

यद्विष्णोरुपमं हन्तुं रुद्रमाकृष्यते मया ।
धनुर्यं कामये तं तमुग्रं मा शिश्नदेवताः   ।। ८१५ ।।

घ्नञ्छिश्नदेवानेकोऽसावासीन्नारायणः परः ।
तस्माद्रुद्रः सम्प्रसादश्चाभूतां वैष्णवं मखम्   ।। ८१६ ।।

यज्ञेन यज्ञमयजन्ताबध्नन् पुरुषं पशुम् ।
यो भूतानामधिपती रुद्रस्तन्तिचरो वृषा   ।। ८१७ ।।

इत्यादिश्रुतिसामर्थ्यात् पारतन्त्र्यं जनिर्मृतिः ।
पराधीनपदप्राप्तिरज्ञत्वं प्रलयेऽभवः   ।। ८१८ ।।

प्रतीयन्ते सदोषत्वान्नेशः पशुपतिस्ततः ।

**।। ॐ सम्बन्धानुपपत्तेश्च ॐ ।। २-२-३८ ।।**

[**तन्मते शिवस्य अशरीरत्वेन न जगत्कर्तृत्वम्**]

अशरीरत्वतस्तस्य सम्बन्धो जगता क्वचित्   ।। ८१९ ।।

कर्तृत्वेन न युज्येत देहिनो ज्ञानदृष्टितः ।

**।। ॐ अधिष्ठानानुपपत्तेश्च ॐ ।। २-२-३९ ।।**

**।। ॐ करणवच्चेन्न भोगादिभ्यः ॐ ।। २-२-४० ।।**

**[शरीराभावेऽपि कारकग्रामस्य साक्षात्**
**प्रयत्नाधिष्ठेयत्वमिति न युक्तं, भोगप्रसङ्गात्]**

न च देहादिवद्विश्वमस्य स्याद्भोगसम्भवात् ।। ८२० ।।

**[आदिसृष्टिसमये अधिष्ठानाभावात् शिवस्य न कर्तृत्वम्]**

अधिष्ठाने स्थितः कर्ता कार्यं कुर्वन् प्रतीयते ।
नास्याधिष्ठानयोगोऽस्ति भूतानां प्रलये तदा ।। ८२१ ।।

**[शिवस्य अदेहत्वे असर्वज्ञत्वं, देहित्वे अनित्यत्वम्]**

अदेहश्चेदसर्वज्ञः शिलाकाष्ठादिवत्सदा ।
देही चेदन्तवानेव यज्ञदत्तनिदर्शनात् ।। ८२२ ।।

**[श्रुतिप्रामाण्यबलात् नैते दोषाः विष्णौ सम्भवन्ति]**

न चैतदखिलं विष्णौ श्रुतिप्रामाण्यगौरवात् ।
मनोबुद्ध्यङ्गितां विष्णोर्लक्षयामो य एव सः ।। ८२३ ।।

स एव देहो विज्ञानमैश्वर्यं शक्तिरूर्जिता ।
देहो विष्णोर्न ते विष्णो वासुदेवोऽग्रतो भवेत् ।। ८२४ ।।

एको नारायण आसीन्न ब्रह्मा न च शङ्करः ।
अजस्य नाभावध्येकमर्पितं मात्रया परः ।। ८२५ ।।

सद्देहः सुखगन्धश्च ज्ञानभाः सत्पराक्रमः ।
ज्ञानज्ञानः सुखसुखः स विष्णुः परमोऽक्षरः ।। ८२६ ।।

आनन्द एक एवाग्र आसीन्नारायणः प्रभुः ।
प्रियं तस्य शिरो मोदप्रमोदौ च भुजौ हरेः   ।। ८२७ ।।

आनन्दो मध्यतो ब्रह्म पुच्छं नान्यदभूत्क्वचित् ।
मनसोऽस्याभवद्ब्रह्मा ललाटादपि शङ्करः   ।। ८२८ ।।

पक्षयोर्गरुडः शेषो मुखादासीत्सरस्वती ।
सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्   ।। ८२९ ।।

इत्यादिश्रुतिसन्दर्भबलान्नित्यगुणात्मनः ।
विष्णोर्देहाज्जगत्सर्वमाविरासीदितीयते   ।। ८३० ।।

मानवत्त्वाद्विरोधः को नामानं क्वचिदिष्यते ।
अविरोधो विरोधश्च मानेनैव हि गम्यते   ।। ८३१ ।।

अत उक्तं समस्तं च वासुदेवस्य युज्यते ।

**[शिवादिनाम्नां विष्णौ शक्तिमत्त्वात् शिवादिनामयुक्ताः श्रुतयः विष्णुविषया एव]**

शिवादिनामयुक्ताश्च श्रुतयो विष्णुवाचकाः   ।। ८३२ ।।

नामानि सर्वाणि च यमेको यो देवनामधाः ।
विष्णुनामानि नान्यस्य सर्वनामा हरिः स्वयम् ।। ८३३ ।।

न नारायणनामानि तदन्येष्वपरे हरौ ।
इत्यादिश्रुतयस्तत्र मानं चोक्तः समन्वयः   ।। ८३४ ।।

[शैवपुराणान्यपि शिवस्य जगत्कारणत्वे न प्रमाणानि]

पुराणानि पुराणाद्यैर्विरुद्धत्वान्न तत्प्रमा ।
तद्विरुद्धेषु नो मानं पूर्वापरविरोधतः ॥ ८३५ ॥

समब्राह्मविरोधाच्च नियमाद्वैष्णवेष्वपि ।
मोहार्थमुक्तितश्चैव ...... ........

[अधिकरणार्थोपसंहारः]

.................. विष्णुरेको गुणार्णवः ॥ ८३६ ॥

स्कन्दसूर्यगणेशादिमतानि न्यायतोऽमुतः ।
निराकृतान्यशेषेण सिद्धान्तस्याविशेषतः ॥ ८३७ ॥

॥ इति पत्युरधिकरणम् ॥ ११ ॥

उत्पत्त्यधिकरणम् - १२

॥ ॐ उत्पत्त्यसम्भवात् ॐ ॥ २-२-४१ ॥

[शाक्तमतनिरासारम्भः]

निराकृतौ विशेषस्य भावाच्छक्तिमतं पृथक् ।
दूष्यते .... .... ...... .......

[शाक्तमतानुवादः]

..... महती देवी ह्रीङ्कारी सर्वकारणम् ॥ ८३८ ॥

त्रिपुरा भैरवीत्यादिनामभिः साऽभिधीयते ।
तस्याः सदाशिवाद्याश्च जायन्ते देवमानवाः ॥ ८३९ ॥

भूतभौतिकमप्येतदिति ...........

[**महावाममतनिरासः**]

..................... तन्नोपपद्यते ।
दृष्टा पुम्भ्यः सदा सृष्टिः स्त्रीपुम्भ्यो वा विशेषतः।। ८४० ।।

केवलाभ्यो न हि स्त्रीभ्यस्तत उत्पत्त्यसम्भवात् ।
नार्च्यं महावाममतं ........... ...........

[**मध्यवाममतनिरासः**]

.......... ........ वामैरन्यैरुदीर्यते ।। ८४१ ।।

शिवोपसर्जना शक्तिः ससर्जेदं समन्ततः ।
इति तच्चोपपन्नं न .......... ...........

**।। ॐ न च कर्तुः करणम् ॐ ।। २-२-४२ ।।**

... ...... .... शिवस्याकरणत्वतः ।। ८४२ ।।

अदेहत्वात् .... .... .... ......

[**अणुवाममतनिरासः**]

...... अपि ह्यन्ये ब्रूयुः सर्वज्ञमीश्वरम् ।
अणुवामाः ... .............

**।। ॐ विज्ञानादिभावे वा तदप्रतिषेधः ॐ ।। २-२-४४ ।।**

....... न तद्युक्तमीशवादप्रवेशनात् ।। ८४३ ।।

सार्वज्ञादिगुणैर्युक्तं गुरुकल्पनया द्वयम् ।
न युज्यते ततस्त्वीश एक एव प्रयोजकः ।। ८४४ ।।

उक्तदोषश्च तत्पक्ष इति नैवात्र दूष्यते ।

**।। ॐ विप्रतिषेधाच्च ॐ ।। २-२-४५ ।।**

**[शाक्तमतनिरासोपसंहारः]**

श्रुतिस्मृतीतिहासानां सामस्त्येन विरोधतः ।। ८४५ ।।

सतां जुगुप्सितत्वाच्च नाङ्गीकार्यं हि तन्मतम् ।

**[उत्पत्त्यसम्भवादित्यादिचतुस्सूत्री पाञ्चरात्रमतनिराकरणपरेति व्याख्यातं न युक्तम्]**

पञ्चरात्रनिषेधार्थमेतान्याचक्षते यदि ।। ८४६ ।।

सूत्राण्यतिविरुद्धं तद्यत आह स भारते ।
''पञ्चरात्रस्य कृत्स्नस्य वक्ता नारायणः स्वयम् ।। ८४७ ।।

ज्ञानेष्वेतेषु राजेन्द्र सर्वेष्वेतद्विशिष्यते ।
पञ्चरात्रविदो ये तु यथाक्रमपरा नृप ।। ८४८ ।।

एकान्तभावोपगता वासुदेवं विशन्ति ते''
इति, गीता च तच्छास्त्रसङ्क्षेप इति हीरितम् ।। ८४९ ।।

'वेदेन पञ्चरात्रेण भक्त्या यज्ञेन चैव हि ।
दृश्योऽहं नान्यथा दृश्यो वर्षकोटिशतैरपि' ।। ८५० ।।

इति वाराहवचनं श्लोका इति वचः श्रुतौ ।
'वेदैश्च पञ्चरात्रैश्च ध्येयो नारायणः परः ।। ८५१ ।।

पञ्चरात्रं च वेदाश्च विद्यैकैव द्विधेयते' ।
इत्यादिवेदवचनैः पञ्चरात्रमपोद्यते ।। ८५२ ।।

कथमेव .... ..... ........

**[जीवोत्पत्त्यभिधानात् पञ्चरात्रस्याप्रामाण्यमिति न युक्तं, श्रुतिसूत्रेष्विव पञ्चरात्रेऽपि देहाद्युत्पत्त्यपेक्षयैवोत्पत्तिकथनात्]**

..... अत्र दोषः क उत्पत्तिर्ज्ञोऽत इत्यपि ।
इहैवोक्ता न चाभूतभावस्तत्रापि कथ्यते ॥ ८५३ ॥

''अनादिकर्मणा बद्धो जीवः संसारमण्डले ।
वासुदेवेच्छया नित्यं भ्रमति'' इति हि तद्वचः ॥ ८५४ ॥

न हि संसारसादित्वं पञ्चरात्रोदितं क्वचित् ।

**[वासुदेवात् सङ्कर्षणो नाम जीवोऽजायतेत्यत्र जनिः प्रादुर्भावः व्यूहो वा]**

जीवाभिमानिशेषस्य नाम्ना सङ्कर्षणस्य तु ॥ ८५५ ॥

वासुदेवाज्जनिः प्रोक्ता प्रद्युम्नस्य ततस्तथा ।
मनोऽभिमानिनः कामस्यैवं साक्षाद्धरेः क्वचित् ॥ ८५६ ॥

सङ्कर्षणादिनाम्नैव नित्याचिन्त्योरुशक्तितः ।
व्यूहयुक्तोऽन्यथानूद्य कथं दुष्टत्वमुच्यते ॥ ८५७ ॥

**[शाण्डिल्यवृत्तान्तकथने पञ्चरात्रस्य वेदविद्वेषः प्रतीयत इत्यस्य निरासः]**

''यदि विद्याच्चतुर्वेदान्'' इतिवद्वेदपूरणम् ।
पञ्चरात्रादिति कुतो द्वेषः शाण्डिल्यवर्तने ॥ ८५८ ॥

[अपव्याख्याननिराकरणोपसंहारः]

अतः परमशास्त्रोरुद्वेषादुदितमासुरैः ।
दूषणं पञ्चरात्रस्य वीक्षायामपि न क्षमम् ॥ ८५९ ॥

॥ इति उत्पत्त्यधिकरणम् ॥ १२ ॥

[पादार्थोपसंहारः]

अतोऽशेषजगद्धाता निर्दोषोरुगुणार्णवः ।
नारायणः श्रुतिगणतात्पर्यादवसीयते ॥ ८६० ॥

अन्धन्तमः प्रविशन्ति ये त्वविद्यामुपासते ।
ततो भूय इवायान्ति एतस्या नैव निन्दकाः ॥ ८६१ ॥

ततो विद्यामविद्यां च यो जानात्युभयं सह ।
दोषज्ञानादतीत्यैतां विद्ययाऽमृतमश्नुते ॥ ८६२ ॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीब्रह्मसूत्रानुव्याख्याने द्वितीयाध्यास्य द्वितीयः पादः ॥

****

## द्वितीयाध्यायस्य तृतीयः पादः

[अस्मिन् पादे वैदिकवचनानां परस्परविरोधाभावप्रदर्शनं, सङ्गतिश्च अन्तर्भावलक्षणा]

अथाशेषसमाम्नायविरोधापाकृतिं प्रभुः ।
करिष्यन् ..... ...... ........

[प्रथमपादे अधिदैवादिविषयवाक्यानां परस्परविरोधाभावप्रदर्शनं, चतुर्थपादे अध्यात्मविषयवाक्यानां परस्परविरोधाभावप्रदर्शनम्]

..... अधिदैवाधिभूतजीवपरात्मनाम्  ।। ८६३ ।।

स्वरूपनिर्णयायैव वचनानां परस्परम् ।
पादेनानेनाविरोधं दर्शयत्यमितद्युतिः  ।। ८६४ ।।

[एतत्पादाधिकरणपूर्वपक्षयुक्तिसङ्ग्रहः]

अनुभूतियुक्तिबहुवाग्वैलोम्यं च ततोऽधिकम् ।
एतत्सर्वं ततः साम्यं द्वारवैयर्थ्यमेव च  ।। ८६५ ।।

दृष्टयुक्त्यनुसारित्वमुक्तान्यार्थाविरोधतः ।
प्रसिद्धनामस्वीकारे बहुवाक्यानुवर्तिता  ।। ८६६ ।।

लोकदृष्टानुसारित्वं जीवसाम्यमनादिता ।
तत्र तत्र परिज्ञानं गुणसाम्यश्रुती तथा  ।। ८६७ ।।

उत्पत्तिमत्त्वं स्वगुणाननुभूत्यल्पकल्पने ।
नानाश्रुतिश्च वैचित्र्यं युक्तयः पूर्वपक्षगाः  ।। ८६८ ।।

[एतत्पादाधिकरणसिद्धान्तयुक्तिससङ्ग्रहः]

व्यवस्थानुपपत्तिश्च स्वातन्त्र्यमनुसारिता ।
मुख्यता शक्तिमत्त्वं च वैरूप्यं सर्वसङ्ग्रहः  ।। ८६९ ।।

गत्यादिरीशशक्तिश्च सर्वमानविरोधिता ।
अभीष्टासिद्धिसुव्यक्ती शास्त्रसिद्धिर्विपर्ययः  ।। ८७० ।।

विशेषकारणं चेति सिद्धान्तस्यैव साधिकाः ।

## वियदधिकरणम् - १

### ।। ॐ न वियदश्रुतेः ॐ ।। २-३-१ ।।

[**वियत्पदं न आकाशमात्रपरं, किन्तु परमात्मातिरिक्तानां प्रकृत्यादीनामुपलक्षणार्थम्**]

प्रकृतिः पुरुषः कालो वेदास्तदभिमानिनः ।। ८७१ ।।

महदाद्याश्च जायन्ते ........... ...........

[**इह अधिकरणे उक्तं जन्म न अभूत्वाभवनलक्षणं, किन्तु पराधीनविशेषावाप्तिलक्षणम्**]

....... ..... ......... पराधीनविशेषिता ।
इदं सर्वं ससर्जेति जनिमत्त्वमिहोदितम् ।। ८७२ ।।

[**आकाशस्य वैशेषिकादिवदवकाशमात्ररूपत्वे, बाह्यानामिव मूर्ताभावरूपत्वेऽपि वा अभूत्वाभवनरूपोत्पत्तिर्नैवोपपद्यते**]

अवकाशमात्रमाकाशः कथमुत्पद्यतेऽन्यथा ।
यद्यनाकाशता पूर्वं किं मूर्तनिबिडं जगत् ।। ८७३ ।।

मूर्तसम्पूर्णता चैव यद्यनाकाशता भवेत् ।
मूर्तद्रव्याणि चाकाशे स्थितान्येव हि सर्वदा ।। ८७४ ।।

[**'आत्मन आकाशः' इत्यादिश्रुतौ भूताकाशाभिमानी आकाशशब्दवाच्यः, तद्देहोत्पत्तिः पराधीनविशेषावाप्तिः**]

अत आकाशशब्दोक्तस्तद्देवोऽत्र विनायकः ।
देहोत्पत्त्या समुत्पन्न इति श्रुत्याऽभिधीयते ।। ८७५ ।।

[रूपिणः भूताकाशस्य अभूत्वाभवनात्मकोत्पत्तिरपि एतच्छ्रुत्यभिप्रेता

भूतमप्यसितं दिव्यदृष्टिगोचरमेव तु ।
उत्पद्यते ....... ..... ...... .......

[अव्याकृताकाशः साक्षिप्रत्यक्षसिद्धः नित्यः, भूताकाशाव्याकृताकाशेत्याकाशद्वयसद्भावे श्रुतिरेव प्रमाणम्]

...... अव्याकृतं हि गगनं साक्षिगोचरम्   ।। ८७६ ।।
प्रदेश इति विज्ञेयं नित्यं नोत्पद्यते हि तत् ।

[अव्याकृताकाशस्य अभूत्वाभवनलक्षणोत्पत्त्यसम्भवेऽपि पराधीनविशेषावाप्तिरूपोत्पत्तिः 'इदं सर्वमसृजत' इत्यादिश्रुतिविवक्षिता]

तथापि मूर्तसम्बन्धपरतन्त्रविशेषयुक्   ।। ८७७ ।।
खमेवोत्पत्तिमन्नाम श्रुतिशब्दविवक्षितम् ।

[प्रकृत्यादीनां पराधीनविशेषावाप्तिरूपोत्पत्तिः]

प्रकृतिः पुरुषः काल इत्येते च समस्तशः   ।। ८७८ ।।
ईशाधीनविशेषेण जन्या इत्येव शब्दिताः ।

[क्षणलवादिरूपकालविशेषस्य अभूत्वाभवनरूपोत्पत्तिः, कालप्रवाहस्य नित्यत्वम्]

कालप्रवाह एवैको नित्यो न तु विशेषवान्   ।। ८७९ ।।

[रमायाः भगवदिच्छया सिसृक्षुत्वविशेषप्राप्तिरेव सृष्टिः, न तु देहोत्पत्तिः]

पुरुषाव्यक्तकालानां रमैवैकाभिमानिनी ।
सिसृक्षुत्वविशेषं तत्साक्षाद्भगवदिच्छया ॥ ८८० ॥

प्राप्तैव सृष्टेत्युदिता .......... ..........

[प्रधानस्य ईश्वराधीनविकारेण पुरुषाणां देहसम्बन्धेन च सृष्टिः]

............. ....... प्रधानं विकृतेरपि ।
पुमांसो देहसम्बन्धात् सृष्टिमन्त इतीरिताः ॥ ८८१ ॥

**॥ ॐ अस्ति तु ॐ ॥ २-३-२ ॥**

**॥ ॐ गौण्यसम्भवात् ॐ ॥ २-३-३ ॥**

**॥ ॐ शब्दाच्च ॐ ॥ २-३-४ ॥**

**॥ ॐ स्याच्चैकस्य ब्रह्मशब्दवत् ॐ ॥ २-३-५ ॥**

**॥ ॐ प्रतिज्ञाहानिरव्यतिरेकाच्छब्देभ्यः ॐ ॥ २-३-६ ॥**

**॥ ॐ यावद्विकारं तु विभागो लोकवत् ॐ ॥ २-३-७ ॥**

॥ इति वियदधिकरणम् ॥ १ ॥

**मातरिश्वाधिकरणम् - २**

**॥ ॐ एतेन मातरिश्वा व्याख्यातः ॐ ॥ २-३-८ ॥**

[प्रतिभातपरावरत्वात् मुख्यवायुः नित्यसमः, पराधीनविशेषाप्तेः जनिमांश्च]

एवं प्रलयकालेऽपि प्रतिभातपरावरः ।
मुख्यवायुर्नित्यसमः शरीरोत्पत्तिकारणात् ॥ ८८२ ॥

पराधीनविशेषेण जनिमानेव शब्दितः ।

[जन्मनः पराधीनविशेषस्वरूपत्वे अङ्गीकृत
एव भगवदन्यस्य सर्वस्य जन्मेति युज्यते]

नैव किञ्चित्ततो जन्मवर्जितं परमादृते   ।। ८८३ ।।

पराधीनविशेषत्वे जन्मनः ........

[उपादानधर्मिणो धर्म्यन्तरात्मना परिवर्तः जन्म इत्येवाङ्गीकारे
रमायाः जीवचैतन्यस्य प्रधानस्य वेदस्य च एवंविध-
जन्माभावात् परमेश्वरादृते सर्वं जनिमदिति न सिद्ध्येत्]

............... ....... स्थूलताभवः ।
पूर्वशब्दविलोपश्च यदि जन्मेति कीर्त्यते   ।। ८८४ ।।

रमाया नैव जन्मास्ति चैतन्यस्यापि केवलम् ।
प्रधानस्य च वेदस्य ............ ...........

[वेदस्यापि ईश्वरेच्छया नियतविशिष्टानुपूर्वीकत्वेनार्थबोधकत्व-
शक्त्याविर्भावरूपपराधीनविशेषावाप्तिरस्ति]

..... ....... वेदस्यापीश्वरेच्छया   ।। ८८५ ।।

व्यक्तिर्नाम विशेषोऽस्ति तस्मात्तद्वशतैव हि ।
उत्पत्तिरत्र कथिता ...... ........

।। इति मातरिश्वाधिकरणम् ।। २ ।।

**असम्भवाधिकरणम् - ३**

**।। ॐ असम्भवस्तु सतोऽनुपपत्तेः ॐ ।। २-३-९ ।।**

[स्वतन्त्रत्वात् ब्रह्मणः न उत्पत्तिः]

...... ...... स्वतन्त्रत्वात्परात्मनः ॥ ८८६ ॥

नैवोत्पत्तिः कथमपि न स्वतन्त्रं ततोऽपरम् ।

॥ इति असम्भवाधिकरणम् ॥ ३ ॥

## तेजोऽधिकरणम् - ४

**॥ ॐ तेजोऽतस्तथा ह्याह ॐ ॥ २-३-१० ॥**

॥ इति तेजोऽधिकरणम् ॥ ४ ॥

## अबधिकरणम् - ५

**॥ ॐ आपः ॐ ॥ २-३-११ ॥**

॥ इति अबधिकरणम् ॥ ५ ॥

## पृथिव्यधिकरणम् - ६

**॥ ॐ पृथिव्यधिकाररूपशब्दान्तरादिभ्यः ॐ ॥२-३-१२॥**

॥ इति पृथिव्यधिकरणम् ॥ ६ ॥

## तदभिध्यानाधिकरणम् - ७

**॥ ॐ तदभिध्यानादेव तु तल्लिङ्गात्सः ॐ ॥ २-३-१३ ॥**

॥ इति तदभिध्यानाधिकरणम् ॥ ७ ॥

## विपर्ययाधिकरणम् - ८

**॥ ॐ विपर्ययेण तु क्रमोऽत उपपद्यते च ॐ ॥२-३-१४॥**

॥ इति विपर्ययाधिकरणम् ॥ ८ ॥

अन्तराधिकरणम् - ९

**।। ॐ अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात् ॐ ।। २-३-१५ ।।**

**।। ॐ चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशो भाक्तस्तद्भावभावित्वात् ॐ ।। २-३-१६ ।।**

।। इति अन्तराधिकरणम् ।। ९ ।।

आत्माधिकरणम् - १०

**।। ॐ नात्मा श्रुतेः नित्यत्वाच्च ताभ्यः ॐ ।।२-३-१७।।**

।। इति आत्माधिकरणम् ।। १० ।।

ज्ञाधिकरणम् - ११

**।। ॐ ज्ञोऽत एव ॐ ।। २-३-१८ ।।**

**।। ॐ युक्तेश्च ॐ ।। २-३-१९ ।।**

।। इति ज्ञाधिकरणम् ।। ११ ।।

उत्क्रान्त्यधिकरणम् - १२

**।। ॐ उत्क्रान्तिगत्यागतीनाम् ॐ ।। २-३-२० ।।**

**।। ॐ स्वात्मना चोत्तरयोः ॐ ।। २-३-२१ ।।**

**।। ॐ नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात् ॐ ।। २-३-२२ ।।**

**।। ॐ स्वशब्दोन्मानाभ्यां च ॐ ।। २-३-२३ ।।**

**।। ॐ अविरोधश्चन्दनवत् ॐ ।। २-३-२४ ।।**

**।। ॐ अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृदि हि ॐ ।। २-३-२५ ।।**

**।। ॐ गुणाद्वाऽऽलोकवत् ॐ ।। २-३-२६ ।।**

।। इति उत्क्रान्त्यधिकरणम् ।। १२ ।।

**व्यतिरेकाधिकरणम् - १३**

**।। ॐ व्यतिरेको गन्धवत्तथा च दर्शयति ॐ ।।२-३-२७।।**

[**अच्छेद्यं जीवं विभज्य भागानां भोगशक्तिं प्रदाय पुनरेकतामापादयतो हरेः सर्वं वशं, स एव स्वतन्त्रः**]

अच्छेद्यस्यापि जीवस्य विभागं बहुधा हरिः ।। ८८७ ।।

कृत्वा भोगान् प्रदायैव चैक्यमापादयेत्पुनः ।
अत ईशवशं सर्वं चेतनाचेतनं जगत् ।। ८८८ ।।

अविभागं विभागाय यदा नयति केशवः ।
किमशक्यं परेशस्य तदेति ह्यभिधीयते ।। ८८९ ।।

।। इति व्यतिरेकाधिकरणम् ।। १३ ।।

**पृथगधिकरणम् - १४**

**।। ॐ पृथगुपदेशात् ॐ ।। २-३-२८ ।।**

[**जीवात्मनः परमात्मना आत्यन्तिकभेदसमर्थनम् 'योऽहं सोऽसौ' इत्यादिश्रुतिभिः भेदमिथ्यात्वसाधकानुमानेन च जीवब्रह्मणोरभेद इत्याशङ्का**]

एवं स्थितेऽपि जीवैक्यं केचिदाहुः परात्मना ।
तद्योऽहमिति पूर्वाभिः श्रुतिभिश्चानुमाबलात् ॥ ८९० ॥

**['भिन्नोऽचिन्त्यः' इत्यादिश्रुतौ जीवपरमात्मनो-
र्भेदोपदेशात् न तयोरभेदः]**

न तद्युक्तं यतो विष्णुः पृथगेवाभिधीयते ।

**[मुक्तावपि जीवपरमात्मनोः भेदाभिधायिन्यः श्रुतिस्मृतयः]**

प्रज्ञानेत्रो लोक इति मुक्तौ भेदोऽभिधीयते ॥ ८९१ ॥

एतमानन्दमित्यन्या परमं साम्यमित्यपि ।
इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ॥ ८९२ ॥

सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च ।
उपसम्पद्यते ज्योतिः स्वरूपेणाभिपद्यते ॥ ८९३ ॥

तत्र पर्येति जक्षंश्च क्रीडन्नपि सदा सुखी ।
आचक्ष्व मे परं मोक्षं धीरा यं प्रवदन्ति तम् ॥ ८९४ ॥

इत्युक्त आह वाग्देवी परं मोक्षं प्रजापतेः ।
शाखां शाखां महानद्यः संयान्ति परितः स्रवाः ॥ ८९५ ॥

धानापूपा मांसकामाः सदा पायसकर्दमाः ।
यस्मिन्नग्निमुखा देवाः सेन्द्राः सह मरुद्गणाः ॥ ८९६ ॥

ईजिरे क्रतुभिः श्रेष्ठैस्तदक्षरमुपासते ।
प्रविशन्ति परं देवं मुक्तास्तत्रैव भोगिनः ॥ ८९७ ॥

निर्गच्छन्ति यथाकामं परेशेनैव चोदिताः ।
भेददृष्ट्याभिमानेन निःसङ्गेनापि कर्मणा ॥ ८९८ ॥

कर्तृत्वात्सगुणं ब्रह्म पुरुषं पुरुषर्षभम् ।
स सङ्गत्य पुनःकाले कालेनेश्वरमूर्तिना ॥ ८९९ ॥

जाते गुणव्यतिकरे यथापूर्वं प्रजायते ।
ऋचां त्वः पोषमास्ते च परेण प्रेरिताः सदा ॥ ९०० ॥

यत्कामस्तत्सृजत्यद्धैवात्मना तत्सृजत्यपि ।
सहैव ब्रह्मणा कामान् भुङ्क्ते निस्तीर्णतद्गुणः ॥ ९०१ ॥

दुःखादींश्च परित्यज्य जगद्व्यापारवर्जितः ।
भुङ्क्ते भोगान् सदैवोच्चानित्याद्यागममानतः ॥ ९०२ ॥

मुक्तस्य भेदावगतेः कथमेव ह्यभिन्नता ।
जीवेशयोः ....... ........ .........

[अनुमानेनापि न अभेदसिद्धिः]

...... नानुमा च तदभेदं प्रमापयेत् ॥ ९०३ ॥

मिथ्यैव भेदो विमतो भेदत्वाच्चन्द्रभेदवत् ।
इति चेत्साध्यधर्मोऽयं सन्नसन्वा न वोभयम् ॥ ९०४ ॥

यदि सन्नपसिद्धान्तः स एवासन्नितीरिते ।
नोभयं चेन्न सिद्धं तत् इति मानस्य दूषणम् ॥ ९०५ ॥

[अनिर्वचनीयत्वे अनुमानं न प्रमाणम्]

न च मानान्तरेणैतच्छक्यं साधयितुं क्वचित् ।
अनुमानेन चेत्सैव ह्यनवस्था भविष्यति ॥ ९०६ ॥

[अनिर्वचनीयत्वप्रतिपादकः आगमोऽपि नास्ति]

न चागमस्तदर्थोऽस्ति नासदासीन्न तद्वदेत् ।
परिशेषादनिर्वाच्यं यदि सिद्धेत्परात्मनः ॥ ९०७ ॥

अनिर्वाच्यत्वमेव स्यात् परिशिष्टो ह्यसौ सदा ।
न चान्य आगमस्तत्र सदसत्प्रतियोगिनि ॥ ९०८ ॥

[प्रत्यक्षमनिर्वचनीये न प्रमाणम्]

न च प्रत्यक्षमत्रास्ति ........... .........

[अर्थापत्तिरपि अनिर्वचनीये न प्रमाणम्]

... ......... न चार्थापत्तिरिष्यते ।
बाधायोगात्सत इति बाधाभावत एव हि ॥ ९०९ ॥

इष्टापत्तिर्न हि भ्रान्तावपि बाधोऽवगम्यते ।
विषयस्य कुतो बाधो विद्यमानं हि बाध्यते ॥ ९१० ॥

न हि वन्ध्यासुतो वध्यो यज्ञदत्तो हि वध्यते ।
बाधायोगात्सत इति व्याप्तिरेषा क्व दृश्यते ॥ ९११ ॥

कश्चायं बाध उद्दिष्टो न हि नाशोऽसतो भवेत् ।
निवृत्तिश्चाप्रवृत्तस्य कथमेवोपपद्यते ॥ ९१२ ॥

नासीदस्ति भविष्यच्च तदिति ज्ञानमेयता ।
यदि बाधस्तदा सत्त्वं तेनैवाङ्गीकृतं पुनः ॥ ९१३ ॥

प्रतीतिर्नासत इति वदन्नङ्गीकरोति ताम् ।
निषेधो ह्यप्रतीतस्य कथञ्चिन्नोपपद्यते ॥ ९१४ ॥

**[उपमानमनिर्वचनीये न प्रमाणम्]**

न चोपमा भवेदत्र ....... .............

**[उपलब्ध्यभावोऽपि अनिर्वचनीये न प्रमाणम्]**

.............. ..... प्रत्यक्षात् सत्त्वमेव च ।

**[ईशस्य परात्मनां च अप्रत्यक्षत्वात्
भेदोऽप्रत्यक्ष इति न युक्तं
स्वात्मनः प्रत्यक्षत्वात् शास्त्रावगतेश्वरात् भेदप्रत्यक्षसम्भवात्]**

शास्त्रगम्यपरेशानाद्भेदः स्वात्मन ईयते ॥ ९१५ ॥

**[स्वात्मनः परमात्मभेदग्राहकं साक्षिप्रत्यक्षं प्रबलं
अतः तद्विरोधेन जीवब्रह्मणोः एकत्वं नानुमातुं शक्यते]**

अनुभूतिविरोधेन कथमेकत्वमुच्यते ।
किञ्चित्कर्ता च दुःखीति सर्वैरेवानुभूयते ॥ ९१६ ॥

सर्वज्ञो भगवान् विष्णुः सर्वशक्तिरिति श्रुतः ।

**[ईश्वरं पक्षीकृत्य जीवाभेदसाधने उपजीव्यश्रुतिविरोधः]**

अनुभूताद्धि भेदेन श्रुतिरेषा वदत्यमुम् ॥ ९१७ ॥

[‘तद्योऽहम्’ इत्यादिश्रुतिरपि उपजीव्यप्रत्यक्षागम-विरोधादभेदे न प्रमाणम्]

उपजीव्यविरुद्धं तु कथमैक्यं श्रुतिर्वदेत् ।

[उपजीव्यप्रत्यक्षागमयोरप्रामाण्ये धर्मिण एवासिद्ध्या आगमैः अनुमानेन च धर्मिबोधनं न स्यात्]

अप्रामाण्यं यदा भेदवाचकस्य भविष्यति ॥ ९१८ ॥

स एव धर्मिणो ग्राही तदभेदः कथं भवेत् ।

[‘यः सर्वज्ञः’ इत्यादिश्रुतिः ब्रह्मस्वरूपमात्रे प्रमाणं, सार्वज्ञादिभेदकधर्मवैशिष्ट्यांशे अप्रमाणमिति न युक्तम्]

यत्स्वरूपग्रहे मानं तद्धर्मे न कथं भवेत् ॥ ९१९ ॥

एकविज्ञानविज्ञप्त्या द्वयं मानं भविष्यति ।
न चेदेकं प्रमाणं तद्द्वयमप्यत्र नो भवेत् ॥ ९२० ॥

[उपजीव्यविरोधेन अभेदप्रमाणस्य दुष्टत्वनिरूपणोपसंहारः]

धर्मिग्राहिविरोधस्तु तस्मान्मानस्य दूषणम् ।

[निरपेक्षभेदश्रुतेः सापेक्षाभेदप्रमाणबाधकत्वम्]

नोपजीव्यो ह्यभेदोऽत्र क्वचिद्भेदश्रुतेर्बलात् ॥ ९२१ ॥

[भेदश्रुतिः न अनुवादिनी, ब्रह्मणः शास्त्रैकयोनित्वात्]

न च मानान्तरोपेयं ब्रह्म तद्भवति क्वचित् ।

[ब्रह्मणः प्रमाणान्तरवेद्यत्वेऽपि तेनैव प्रमाणेन अभेदानुमानादेः उपजीव्यप्रमाणविरोधः]

येन मानेन चोपेयं भेदस्तेनावगम्यते ॥ ९२२ ॥

सर्वज्ञानुमयैवेशो यद्युपेयः कथञ्चन ।
सर्वज्ञत्वगुणेनैव तया भेदोऽवगम्यते ।। ९२३ ।।

[अभेदानुमानागमयोः उपजीव्यप्रमाणविरोधपरिहाराय "अहं दुःखी" इत्याद्यनुभवस्य मिथ्यात्वकथनस्य निरासः]

न दुःखानुभवः क्वापि मिथ्यानुभवतां व्रजेत् ।
न हि बाधः क्वचिद्दृष्टो दुःखाद्यनुभवस्य तु ।। ९२४ ।।

यदि दुःखानुभूतिश्च भ्रान्तिरित्यवसीयते ।
अदुःखिताश्रुतिः केन न भ्रान्तिरिति गम्यते ।। ९२५ ।।

श्रुतिस्वरूपमर्थश्च मानेनैवावसीयते ।
तच्चेन्मानं गृहीतं ते किं दुःखानुभवे भ्रमः ।। ९२६ ।।

न च बाधविशेषोऽस्ति यदबाधितमेव तत् ।
बाधो यद्यनुभूतेऽर्थे कथं निर्णय ईयते ।। ९२७ ।।

कोऽपि ह्यर्थो न निश्चेतुं शक्यते भ्रमवादिना ।
भ्रमत्वमभ्रमत्वं च यदैवानुभवोपगम् ।। ९२८ ।।

एकस्य भ्रमता तत्र परस्याभ्रमता कुतः ।
भ्रमत्वमभ्रमत्वं च सर्वं वेद्यं हि साक्षिणा ।। ९२९ ।।

स चेत् साक्षी क्वचिद्दुष्टः कथं निर्णय ईयते ।
विशेषाः सर्व एवैते साक्षिप्रत्यक्षगोचराः ।। ९३० ।।

ऊरीकृत्य च तान् सर्वान् व्यवहारः प्रवर्तते ।
साक्षिणो व्यवसायी तु व्यवहारोऽभिधीयते ।। ९३१ ।।

तस्मात्सर्वप्रसिद्धस्य व्यवहारस्य सिद्धये ।
साक्षी निर्दोष एवैकः सदाङ्गीकार्य एव नः ॥ ९३२ ॥

शुद्धः साक्षी यदा सिद्धो दुःखित्वं वार्यते कथम् ।
उपजीव्यप्रमाणं तद्भेदग्राहकमेव हि ॥ ९३३ ॥

[''पृथगुपदेशात्'' इति सूत्रार्थोपसंहारः]

अतो जीवेशयोर्भेदः श्रुतिसामर्थ्यसुस्थिरः ।

**॥ ॐ तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत् ॐ ॥ २-३-२९ ॥**

[जीवब्रह्मणोर्भेदेऽपि अभेदवदुपन्यासे श्रुतेराशयवर्णनम्]

तथापि तु चिदानन्दपूर्वास्तत्सदृशा गुणाः ॥ ९३४ ॥

सारः स्वरूपमस्यापि मुक्तावप्यवशिष्यते ।
अतोऽभेदवदेवैताः श्रुतयः प्रवदन्ति हि ॥ ९३५ ॥

पौराणानि च वाक्यानि सादृश्याभेदसंश्रयात् ।
सादृश्याच्च प्रधानत्वात् स्वातन्त्र्यादपि चाभिदाम् ॥ ९३६ ॥

आहुरीशेन जीवस्य न स्वरूपाभिदां क्वचित् ।
स्थानैक्यमैकमत्यं च मुक्तस्य तु विशिष्यते ॥ ९३७ ॥

सादृश्यं च विशेषेण ...... .......

[जडानां क्वचिदेवाभेदव्यपदेशे हेतुः]

..... ...... जडानां द्वयमेव तु ।
भवेत्सादृश्यमत्यल्पं तृतीयं परमात्मना ॥ ९३८ ॥

[ईशस्य स्वगतरूपाद्यभेदोपदेशो मुख्य एव]

ईशरूपक्रियाणां च गुणानामपि सर्वशः ।
तथैवावयवानां तत्स्वरूपैक्यं तु मुख्यतः ॥ ९३९ ॥

''यथोदकं दुर्गे वृष्टं पर्वतेषु विधावति ।
एवं धर्मान् पृथक्पश्यंस्तानेवानुविधावति'' ॥ ९४० ॥

इति श्रुतेः ..... ............

[ईशधर्माणां न भेदाभेदौ स्तः]

...... नोभयं च भेदाभेदाख्यमिष्यते ।
''एकमेवाद्वितीयं तन्नेह नानास्ति किञ्चन ॥ ९४१ ॥

मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति'' ।
इति श्रुताविवेत्यस्माद् भेदाभेदनिराकृतिः ॥ ९४२ ॥

इवोभये च सादृश्य इति वाक् शब्दनिर्णये ।
॥ इति पृथगधिकरणम् ॥ १४ ॥

## यावदधिकरणम् - १५

**॥ ॐ यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात् ॐ ॥ २-३-३० ॥**

॥ इति यावदधिकरणम् ॥ १५ ॥

## पुंस्त्वाधिकरणम् - १६

**॥ ॐ पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात् ॐ ॥ २-३-३१ ॥**

**।। ॐ नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतरनियमो वान्यथा ॐ ।। २-३-३२ ।।**

।। इति पुंस्त्वाधिकरणम् ।। १६ ।।

**कर्तृत्वाधिकरणम् - १७**

**।। ॐ कर्ता शास्त्रार्थवत्त्वात् ॐ ।। २-३-३३ ।।**

**।। ॐ विहारोपदेशात् ॐ ।। २-३-३४ ।।**

**।। ॐ उपादानात् ॐ ।। २-३-३५ ।।**

**।। ॐ व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः ॐ ।। २-३-३६ ।।**

**।। ॐ उपलब्धिवदनियमः ॐ ।। २-३-३७ ।।**

**।। ॐ शक्तिविपर्ययात् ॐ ।। २-३-३८ ।।**

**।। ॐ समाध्यभावाच्च ॐ ।। २-३-३९ ।।**

**।। ॐ यथा च तक्षोभयथा ॐ ।। २-३-४० ।।**

**।। ॐ परात्तु तच्छ्रुतेः ॐ ।। २-३-४१ ।।**

**।। ॐ कृतप्रयत्नापेक्षस्तु विहितप्रतिषेधावैयर्थ्यादिभ्यः ॐ ।। २-३-४२ ।।**

।। इति कर्तृत्वाधिकरणम् ।।

### अंशाधिकरणम् - १८

### ।। ॐ अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके ॐ ।। २-३-४३ ।।

**[जीवब्रह्मणोः न मुख्यः अभेदः, नापि स्वाभाविकौ भेदाभेदौ, किन्तु सादृश्यादिलक्षणः अमुख्यः अभेदः, मुक्तौ श्रुतिस्मृतिभिः भेदोपदेशात्]**

भेदस्य मुक्तौ वचनादपि तत्पक्षनिग्रहः ।। ९४३ ।।

चेतनत्वादिसादृश्यं यद्यभेद इतीष्यते ।
अङ्गीकृतं तदस्माभिर्न स्वरूपैकता क्वचित् ।। ९४४ ।।

न केनचिदभेदोऽस्ति भेदाभेदोऽपि वा क्वचित् ।
समुदायमृते विष्णोः स्वगुणादीन्विनापि वा ।। ९४५ ।।

इति श्रुतेर्न तस्यास्ति भेदाभेदोऽपि केनचित् ।

**[अभेदश्रुतयः भेदश्रुतयश्च अंशत्वाभिप्रायाः, जीवस्य परमेश्वरांशता तु तत्सादृश्यं तदधीनसत्तादिमत्त्वं च]**

अभेदश्रुतयोंऽशत्वात् सादृश्यं चांशतास्य तु ।। ९४६ ।।

**[मत्स्याद्यवताराः हरेः स्वरूपांशाः, जीवाः विभिन्नांशाः]**

अंशस्तु द्विविधो ज्ञेयः स्वरूपांशोऽन्य एव च ।
विभिन्नांशोऽल्पशक्तिः स्यात् किञ्चित्सादृश्यमात्रयुक् ।। ९४७ ।।

अंशिनो यत्तु सामर्थ्यं यत्स्वरूपं यथा स्थितिः ।
स एव चेत् स्वरूपांशः प्रादुर्भावा हरेर्यथा ।। ९४८ ।।

**।। ॐ मन्त्रवर्णात् ॐ ।। २-३-४४ ।।**

**।। ॐ अपि स्मर्यते ॐ ।। २-३-४५ ।।**

**।। ॐ प्रकाशादिवन्नैवं परः ॐ ।। २-३-४६ ।।**

**।। ॐ स्मरन्ति च ॐ ।। २-३-४७ ।।**

[**स्वरूपांशे दृष्टान्ताः**]

सूर्यमण्डलमान्येकस्तत्प्रकाशाभिमानवान् ।
सूर्योऽथ सप्तमाब्धेश्च बाह्योदस्य च वारिपः ।। ९४९ ।।

कठिनत्वेन मेर्वादिः पृथिव्या अपि देवता ।
धरादेव्येवमेवैको भगवान् विष्णुरव्ययः ।। ९५० ।।

नानावताररूपेण स्थितः पूर्णगुणः सदा ।

[**भिन्नांशे दृष्टान्ताः**]

विण्मूत्राद्यभिमानिन्यो यथापभ्रष्टदेवताः ।। ९५१ ।।

सूर्यादिभ्यस्तथैवायं संसारी परमात् पृथक् ।

**।। ॐ अनुज्ञापरिहारौ देहसम्बन्धाज्ज्योतिरादिवत् ॐ ।। २-३-४८ ।।**

देहदोषैश्च दुष्टत्वादपभ्रष्टाख्यदेवताः ।। ९५२ ।।

अन्याः सूर्यादिदेवेभ्यो ह्यनुग्राह्याश्च तैः सदा ।
एवमेव पराद्विष्णोः पृथक् संसारिणो मताः ।। ९५३ ।।

अनुग्राह्याश्च तेनैव तत्प्रसादाच्च मोक्षिणः ।
न तु मत्स्यादिरूपाणामनुग्राह्यत्वमिष्यते ।। ९५४ ।।

**।। ॐ असन्ततेश्चाव्यतिकरः ॐ ।। २-३-४९ ।।**

**[गुणपरिपूर्णत्वात् मत्स्यादीनां स्वरूपांशत्वं, अपरिपूर्णत्वात् जीवानां भिन्नांशत्वम्]**

गुणैरशेषैः पूर्णत्वात् मुख्याभेदो परैर्न च ।

**।। ॐ आभास एव च ॐ ।। २-३-५० ।।**

**[जीवाः अंशाभासाः, न तु मुख्यांशाः]**

अंशाभासाश्च सर्वेऽपि परस्यांशा न मुख्यतः ।। ९५५ ।।

यथैषा पुरुषे छाया एतस्मिन्नेतदाततम् ।
न तु पुम्पादवत्पादा जीवा एते परात्मनः ।। ९५६ ।।

पूर्णास्तस्य गुणा एव प्रादुर्भावतया स्थिताः ।
एवं जगाद परमा श्रुतिर्नारायणं परम् ।। ९५७ ।।

**[एतत्पादार्थसङ्ग्रहः]**

अक्षयो भगवान् विष्णुर्लक्ष्म्यावासो लये स्थितः ।
मुक्तैः सदा चिन्त्यमानो ब्रह्माद्यैस्तारतम्यगैः ।। ९५८ ।।

प्रकृतिः पुरुषः कालो वेदाश्चेति चतुष्टयम् ।
नित्यं स्वरूपतो विष्णोर्विशेषावाप्तिमात्रतः ।। ९५९ ।।

उत्पत्तिमदिति प्रोक्तं लक्ष्मीस्तदभिमानिनी ।
ततो जातः पुमान्नाम ब्रह्मास्यां वासुदेवतः ।। ९६० ।।

सूत्रात्मा प्राणनामा च देव्यौ प्रकृतिमानिनी ।
ततो रूपं महन्नाम ब्रह्मणोऽहङ्कृतिः शिवः ।। ९६१ ।।

ब्रह्मणो बुद्धिनाम्नोमा तत इन्द्रो मनोऽभिधः ।
स्कन्दश्च तत एवान्ये सर्वे देवाः प्रजज्ञिरे ॥ ९६२ ॥

तत्र पूर्वतनः श्रेयान् गुणैः सर्वैः समस्तशः ।
तेभ्यश्च भगवान् विष्णुस्तदधीना इमे सदा ॥ ९६३ ॥

जन्मस्थितिलयाज्ञाननियतिज्ञानसंसृतिः ।
मोक्षश्च तदधीनत्वमेतेषां नैव हीयते ॥ ९६४ ॥

मुक्तावपि स एवैकः स्वतन्त्रः पूर्णसद्गुणः ।
इति श्रुत्युपपत्तिभ्यां पादेऽस्मिन्प्रभुणोदितम् ॥ ९६५ ॥

॥ इति अंशाधिकरणम् ॥ १८ ॥

**अदृष्टाधिकरणम् - १९**

**॥ ॐ अदृष्टानियमात् ॐ ॥ २-३-५१ ॥**

**॥ ॐ अभिसन्ध्यादिष्वपि चैवम् ॐ ॥ २-३-५२ ॥**

**॥ ॐ प्रदेशादिति चेन्नान्तर्भावात् ॐ ॥ २-३-५३ ॥**

॥ इति अदृष्टाधिकरणम् ॥ १९ ॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीब्रह्मसूत्रानुव्याख्याने द्वितीयाध्यायस्य तृतीयः पादः ॥

***

## द्वितीयाध्यायस्य चतुर्थः पादः

[अध्यात्मविषयश्रुतीनां परस्परविरोधपरिहारः,
श्रुत्यादिसिद्धयुक्तिसहितश्रुतिविरोधपरिहारः]

श्रुत्यर्थः श्रुतियुक्तिभ्यां विरुद्ध इव दृश्यते ।
यत्र तन्निर्णयं देवः सुविशिष्टोपपत्तिभिः ॥ ९६६ ॥

करोत्यनेन पादेन ....... .......

[एतत्पादीयपूर्वपक्षयुक्तयः, सिद्धान्तयुक्तयश्च]

....... ..... तत्र स्पष्टार्थवच्छ्रुतिः ।
विशेषश्रुतिर्वैरूप्यं माहात्म्यं व्यक्तसद्गुणः ॥ ९६७ ॥

दृष्टा युक्तिः समानत्वं कर्तृशक्तिर्विमिश्रिता ।
युक्तयः पूर्वपक्षेषु सुनिर्णीतास्तु तादृशाः ॥ ९६८ ॥

युक्तयो निर्णयस्यैव स्वयं भगवतोदिताः ।

॥ प्राणोत्पत्त्यधिकरणम् ॥

**॥ ॐ तथा प्राणाः ॐ ॥ २-४-१ ॥**

**॥ ॐ गौण्यसम्भवात् ॐ ॥ २-४-२ ॥**

**॥ ॐ प्रतिज्ञानुपरोधाच्च ॐ ॥ २-४-३ ॥**

॥ इति प्राणोत्पत्त्यधिकरणम् ॥ १ ॥

**तत्प्रागधिकरणम् - २**

**॥ ॐ तत्प्राक् श्रुतेश्च ॐ ॥ २-४-४ ॥**

॥ इति तत्प्रागधिकरणम् ॥ २ ॥

## तत्पूर्वकत्वाधिकरणम् - ३

**।। ॐ तत्पूर्वकत्वाद्वाचः ॐ ।। २-४-५ ।।**

।। इति तत्पूर्वकत्वाधिकरणम् ।। ३ ।।

## सप्तगत्यधिकरणम् - ४

**।। ॐ सप्तगतेर्विशेषितत्वाच्च ॐ ।। २-४-६ ।।**

**।। ॐ हस्तादयस्तु स्थितेऽतो नैवम् ॐ ।। २-४-७ ।।**

।। इति सप्तगत्यधिकरणम् ।। ४ ।।

## अण्वधिकरणम् - ५

**।। ॐ अणवश्च ॐ ।। २-४-८ ।।**

।। इति अण्वधिकरणम् ।। ५ ।।

## श्रेष्ठाधिकरणम् - ६

**।। ॐ श्रेष्ठश्च ॐ ।। २-४-९ ।।**

**।। ॐ न वायुक्रिये पृथगुपदेशात् ॐ ।। २-४-१० ।।**

।। इति श्रेष्ठाधिकरणम् ।। ६ ।।

## चक्षुराद्यधिकरणम् - ७

**।। ॐ चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्यः ॐ ।। २-४-११ ।।**

**।। ॐ अकरणत्वाच्च न दोषस्तथा हि दर्शयति ॐ ।। २-४-१२ ।।**

।। इति चक्षुराद्यधिकरणम् ।। ७ ।।

पञ्चवृत्त्यधिकरणम् - ८

**।। ॐ पञ्चवृत्तिर्मनोवद्व्यपदिश्यते ॐ ।। २-४-१३ ।।**

।। इति पञ्चवृत्त्यधिकरणम् ।। ८ ।।

अण्वधिकरणम् - ९

**।। ॐ अणुश्च ॐ ।। २-४-१४ ।।**

।। इति अण्वधिकरणम् ।। ९ ।।

ज्योतिराद्यधिकरणम् - १०

**।। ॐ ज्योतिराद्यधिष्ठानं तु तदामननात् ॐ ।।२-४-१५।।**

**।। ॐ प्राणवता शब्दात् ॐ ।। २-४-१६ ।।**

**।। ॐ तस्य च नित्यत्वात् ॐ ।। २-४-१७ ।।**

।। इति ज्योतिराद्यधिकरणम् ।। १० ।।

त इन्द्रियाधिकरणम् - ११

**।। ॐ त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात् ॐ ।। २-४-१८ ।।**

**।। ॐ भेदश्रुतेः ॐ ।। २-४-१९ ।।**

**।। ॐ वैलक्षण्याच्च ॐ ।। २-४-२० ।।**

।। इति त इन्द्रियाधिकरणम् ।। ११ ।।

## सञ्ज्ञाधिकरणम् - १२

**।। ॐ सञ्ज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात् ॐ ।। २-४-२१ ।।**

।। इति सञ्ज्ञाधिकरणम् ।। १२ ।।

## मांसाधिकरणम् - १३

**।। ॐ मांसादि भौमं यथाशब्दमितरयोश्च ॐ ।। २-४-२२ ।।**

**।। ॐ वैशेष्यात्तु तद्वादस्तद्वादः ॐ ।। २-४-२३ ।।**

।। इति मांसाधिकरणम् ।। १३ ।।

।। इति श्री आनन्दतीर्थभगवत्पादाचार्यविरचिते ब्रह्मसूत्रानुव्याख्याने द्वितीयाध्यायस्य चतुर्थः पादः ।।

**।। द्वितीयाध्यायः समाप्तः ।।**

****

# तृतीयाध्यायस्य प्रथमः पादः

[**एतत्पादीयाधिकरणपूर्वपक्षयुक्तयः**]

स्वाभाविकान्यथानामसहभावान्यथोक्तयः ॥ ९६९ ॥

अविशेषविशेषौ च सहभावो विमिश्रता ।
विरुद्धोक्तिः सहस्थानं वैयर्थ्यं चान्यथागतिः ॥ ९७० ॥

युक्तयः पूर्वपक्षस्य ...... ........

[**एतत्पादीयाधिकरणसिद्धान्तयुक्तयः**]

.... ...... गुणाधिक्यार्थतो भवौ ।
उपपत्तिर्द्विरूपत्वमाधिक्यमनुरूपता ॥ ९७१ ॥

योग्यता बलवत्त्वं च विभागः कारणाभवः ।
क्लृप्तिरन्या गतिश्चैव सिद्धान्तस्यैव साधकाः ॥ ९७२ ॥

**तदन्तराधिकरणम् - १**

**॥ ॐ तदन्तरप्रतिपत्तौ रंहति सम्परिष्वक्तः प्रश्ननिरूपणाभ्याम् ॐ ॥ ३-१-१ ॥**

॥ इति तदन्तराधिकरणम् ॥ १ ॥

**त्र्यात्मकत्वाधिकरणम् - २**

**॥ ॐ त्र्यात्मकत्वात्तु भूयस्त्वात् ॐ ॥ ३-१-२ ॥**

॥ इति त्र्यात्मकत्वाधिकरणम् ॥ २ ॥

### प्राणगत्यधिकरणम् - ३

**।। ॐ प्राणगतेश्च ॐ ।। ३-१-३ ।।**

।। इति प्राणगत्यधिकरणम् ।। ३ ।।

### अग्न्याद्यधिकरणम् - ४

**।। ॐ अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात् ॐ ।। ३-१-४ ।।**

।। इति अग्न्याद्यधिकरणम् ।। ४ ।।

### प्रथमाधिकरणम् - ५

**।। ॐ प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्तेः ॐ ।। ३-१-५ ।।**

।। इति प्रथमाधिकरणम् ।। ५ ।।

### अश्रुतत्वाधिकरणम् - ६

**।। ॐ अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः ॐ ।। ३-१-६ ।।**

।। इति अश्रुतत्वाधिकरणम् ।। ६ ।।

### भाक्ताधिकरणम् - ७

**।। ॐ भाक्तं वाऽनात्मवित्त्वात्तथा हि दर्शयति ॐ ।। ३-१-७ ।।**

।। इति भाक्ताधिकरणम् ।। ७ ।।

कृतात्ययाधिकरणम् - ८

**।। ॐ कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्याम् ॐ ।।३-१-८।।**

।। इति कृतात्ययाधिकरणम् ।। ८ ।।

यथेताधिकरणम् - ९

**।। ॐ यथेतमनेवं च ॐ ।। ३-१-९ ।।**

।। इति यथेताधिकरणम् ।। ९ ।।

चरणाधिकरणम् - १०

**।। ॐ चरणादिति चेन्न तदुपलक्षणार्थेति कार्ष्णाजिनिः ॐ ।। ३-१-१० ।।**

**।। ॐ आनर्थक्यमिति चेन्न तदपेक्षत्वात् ॐ ।। ३-१-११ ।।**

**।। ॐ सुकृतदुष्कृते एवेति तु बादरिः ॐ ।। ३-१-१२ ।।**

।। इति चरणाधिकरणम् ।। १० ।।

अनिष्टाधिकरणम् - ११

**।। ॐ अनिष्टादिकारिणामपि च श्रुतम् ॐ ।। ३-१-१३ ।।**

**।। ॐ संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात् ॐ ।। ३-१-१४ ।।**

**।। ॐ स्मरन्ति च ॐ ।। ३-१-१५ ।।**

।। इति अनिष्टाधिकरणम् ।। ११ ।।

## अपि सप्ताधिकरणम् - १२

**।। ॐ अपि सप्त ॐ ।। ३-१-१६ ।।**

।। इति अपि सप्ताधिकरणम् ।। १२ ।।

## तत्राप्यधिकरणम् - १३

**।। ॐ तत्रापि च तद्व्यापारादविरोधः ॐ ।। ३-१-१७ ।।**

।। इति तत्राप्यधिकरणम् ।। १३ ।।

## विद्याधिकरणम् - १४

**।। ॐ विद्याकर्मणोरिति तु प्रकृतत्वात् ॐ ।। ३-१-१८ ।।**

।। इति विद्याधिकरणम् ।। १४ ।।

## न तृतीयाधिकरणम् - १५

**।। ॐ न तृतीये तथोपलब्धेः ॐ ।। ३-१-१९ ।।**

**।। ॐ स्मर्यतेऽपि च लोके ॐ ।। ३-१-२० ।।**

**।। ॐ दर्शनाच्च ॐ ।। ३-१-२१ ।।**

**।। ॐ तृतीये शब्दावरोधः संशोकजस्य ॐ ।। ३-१-२२ ।।**

**।। ॐ स्मरणाच्च ॐ ।। ३-१-२३ ।।**

।। इति न तृतीयाधिकरणम् ।। १५ ।।

## तत्स्वाभाव्याधिकरणम् - १६

**।। ॐ तत्स्वाभाव्यापत्तिरुपपत्तेः ॐ ।। ३-१-२४ ।।**

।। इति तत्स्वाभाव्याधिकरणम् ।। १६ ।।

## नातिचिरेणाधिकरणम् - १७

**।। ॐ नातिचिरेण विशेषात् ॐ ।। ३-१-२५ ।।**

।। इति नातिचिरेणाधिकरणम् ।। १७ ।।

## अन्याधिकरणम् - १८

**।। ॐ अन्याधिष्ठिते पूर्ववदभिलापात् ॐ ।। ३-१-२६ ।।**

**।। ॐ अशुद्धमिति चेन्न शब्दात् ॐ ।। ३-१-२७ ।।**

।। इति अन्याधिकरणम् ।। १८ ।।

## रेतोऽधिकरणम् - १९

**।। ॐ रेतःसिग्योगोऽथ ॐ ।। ३-१-२८ ।।**

।। इति रेतोऽधिकरणम् ।। १९ ।।

## योन्यधिकरणम् - २०

**।। ॐ योनेः शरीरम् ॐ ।। ३-१-२९ ।।**

[**बीजयोनिसम्बन्धेन शरीरोत्पत्तिरित्युत्सर्गः,
ज्ञानतपोयोगादिकारणविशेषेण तदभावेऽपीत्यपवादः**]

बीजपूरुषयोनीनां सङ्गातिनियमोज्झितिम् ।
अथशब्देन भगवान् आह कारणतश्च ताम् ।। ९७३ ।।

।। इति योन्यधिकरणम् ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीब्रह्मसूत्रानुव्याख्याने तृतीयाध्यायस्य प्रथमः पादः ।।

# तृतीयाध्यायस्य द्वितीयः पादः

[एतत्पादीयाधिकरणपूर्वपक्षयुक्तयः]

पश्चाददृष्ट्यविज्ञानकालदुःखपृथग्भवाः ।
स्थानभेदो विरुद्धत्वं न्यायसाम्यं स्वतो भवः ॥ १७४ ॥

गुणसाम्यमयोगश्च तर्कबाधो विलोमता ।
नानाभावः प्रलोभश्च युक्तयः पूर्वपक्षगाः ॥ १७५ ॥

[एतत्पादीयाधिकरणसिद्धान्तयुक्तयः

अशक्यकर्तृताशक्तिः स्वतोऽबोधस्तथैव च ।
अमानक्लृप्तिसन्मानव्यवस्थात्यल्पताभवाः ॥ १७६ ॥

विशेषदृष्टिवाक्ये च पुंशक्तिः सुनिदर्शनम् ।
अलौकिकत्वमाधिक्यं स्वातन्त्र्यं निर्णयप्रमाः ॥ १७७ ॥

## सन्ध्याधिकरणम् - १

**॥ ॐ सन्ध्ये सृष्टिराह हि ॐ ॥ ३-२-१ ॥**

**॥ ॐ निर्मातारं चैके पुत्रादयश्च ॐ ॥ ३-२-२ ॥**

**॥ ॐ मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात् ॐ ॥ ३-२-३ ॥**

**॥ ॐ सूचकश्च हि श्रुतेराचक्षते च तद्विदः ॐ ॥३-२-४॥**

[भगवतः स्वप्नावस्थाप्रवर्तकत्वमहिमोक्तिः, अनादिमनसः अनाद्यनुभवप्रवाहोत्पन्नवासनाश्रयत्वम्]

**नातिचिरेणाधिकरणम् - १७**

**।। ॐ नातिचिरेण विशेषात् ॐ ।। ३-१-२५ ।।**

।। इति नातिचिरेणाधिकरणम् ।। १७ ।।

**अन्याधिकरणम् - १८**

**।। ॐ अन्याधिष्ठिते पूर्ववदभिलापात् ॐ ।। ३-१-२६ ।।**

**।। ॐ अशुद्धमिति चेन्न शब्दात् ॐ ।। ३-१-२७ ।।**

।। इति अन्याधिकरणम् ।। १८ ।।

**रेतोऽधिकरणम् - १९**

**।। ॐ रेतःसिग्योगोऽथ ॐ ।। ३-१-२८ ।।**

।। इति रेतोऽधिकरणम् ।। १९ ।।

**योन्यधिकरणम् - २०**

**।। ॐ योनेः शरीरम् ॐ ।। ३-१-२९ ।।**

[**बीजयोनिसम्बन्धेन शरीरोत्पत्तिरित्युत्सर्गः,
ज्ञानतपोयोगादिकारणविशेषेण तदभावेऽपीत्यपवादः**]

बीजपूरुषयोनीनां सङ्गातिनियमोज्झितिम् ।
अथशब्देन भगवान् आह कारणतश्च ताम् ।। ९७३ ।।

।। इति योन्यधिकरणम् ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीब्रह्मसूत्रानुव्याख्याने तृतीयाध्यायस्य प्रथमः पादः ।।

# तृतीयाध्यायस्य द्वितीयः पादः

[एतत्पादीयाधिकरणपूर्वपक्षयुक्तयः]

पश्चाददृष्ट्यविज्ञानकालदुःखपृथग्भवाः ।
स्थानभेदो विरुद्धत्वं न्यायसाम्यं स्वतो भवः ।। १७४ ।।

गुणसाम्यमयोगश्च तर्कबाधो विलोमता ।
नानाभावः प्रलोभश्च युक्तयः पूर्वपक्षगाः ।। १७५ ।।

[एतत्पादीयाधिकरणसिद्धान्तयुक्तयः

अशक्यकर्तृताशक्तिः स्वतोऽबोधस्तथैव च ।
अमानक्लृप्तिसन्मानव्यवस्थात्यल्पताभवाः ।। १७६ ।।

विशेषदृष्टिवाक्ये च पुंशक्तिः सुनिदर्शनम् ।
अलौकिकत्वमाधिक्यं स्वातन्त्र्यं निर्णयप्रमाः ।। १७७ ।।

## सन्ध्याधिकरणम् - १

**।। ॐ सन्ध्ये सृष्टिराह हि ॐ ।। ३-२-१ ।।**

**।। ॐ निर्मातारं चैके पुत्रादयश्च ॐ ।। ३-२-२ ।।**

**।। ॐ मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात् ॐ ।। ३-२-३ ।।**

**।। ॐ सूचकश्च हि श्रुतेराचक्षते च तद्विदः ॐ ।।३-२-४।।**

[भगवतः स्वप्नावस्थाप्रवर्तकत्वमहिमोक्तिः, अनादिमनसः अनाद्यनुभवप्रवाहोत्पन्नवासनाश्रयत्वम्]

वासनाः सर्ववस्तूनामनाद्यनुभवागताः ।
सन्त्येवाशेषजीवानामनादिमनसि स्थिताः ॥ ९७८ ॥

त्रिगुणात्मकं मनोऽस्त्येव यावन्मुक्तिः सदातनम् ।
तत्रैवाशेषसंस्काराः सञ्चीयन्ते सदैव च ॥ ९७९ ॥

सूक्ष्मत्वेन लये सच्च प्राकृतैरुपचीयते ।
सृष्टिकाले यदा तन्न कुतः संसारसंस्थितिः ॥ ९८० ॥

**[भगवानेव संस्काररूपोपादानेन स्वाप्नपदार्थान् सृष्ट्वा दर्शयति]**

संस्कारैर्भगवानेव सृष्ट्वा नानाविधं जगत् ।
स्वप्नकाले दर्शयति ......... ....

**[स्वप्नमायासरूपेत्यादिश्रुतिस्मृतिषु स्वाप्नस्य जाग्रत्त्वप्रतीतेरेव भ्रान्तित्वमुक्तम्]**

...... ...... भ्रान्तिर्जाग्रत्त्वमेव हि ॥ ९८१ ॥

**[अननुभूतशिरच्छेदादेः प्रतीतेः स्वप्नस्य भ्रान्तित्वमिति न युक्तं संसारस्य अनादित्वात् क्वचिज्जन्मनि अनुभवसम्भवात् । अत्रापि जन्मनि श्रवणजनितसंस्कारसम्भवात्]**

अदृष्टे चाश्रुते भावे न भाव उपजायते ।
अदृष्टादश्रुताद्भावान्न भाव उपजायते ॥ ९८२ ॥

इति श्रुतिपुराणोक्तिरनादित्वात्तु युज्यते ।

**[शशविषाणादीनां जन्मान्तरे अनुभवाभावेऽपि स्वाप्नप्रतीत्युपादानतत्संस्कारः सम्भवति]**

कदाचिद्दर्शनायोग्यं यत्तत्रापि विभागतः ॥ ९८३ ॥

दृष्टं समाधिकरणं दृश्यतेऽत्र स च भ्रमः ।

**[स्वाप्नपदार्थानां वासनोपादानकत्वसमर्थनम्]**

वासनामात्रमूलत्वात् जाग्रद्वत् स्पष्टता न च    ।। ९८४ ।।

**[स्वप्नस्य द्रष्टुः स्वप्नोपलभ्यरथादेः किं भेदः, अथ अभेदः, उत भेदाभेदौ इति विकल्प्य प्रश्नो न युज्यते]**

भेदोऽभेदोऽथवा द्वन्द्वमिति प्रश्नो न युज्यते ।
द्रष्टुः स्वप्नस्य दृष्टत्वाद्भेदस्यैवाखिलैर्जनैः    ।। ९८५ ।।

**[विकल्पप्रश्नदोषाः स्वव्याहत्यादयः तत्त्वनिर्णयविरोधिनः]**

प्रश्नदोषा हि चत्वारः स्वव्याहतिरसङ्गतिः ।
सिद्धार्थता च वैफल्यं न तैः स्यात्तत्त्वनिर्णयः    ।। ९८६ ।।

**[वादेऽपि तत्त्वनिर्णयविरोधिनः निग्रहत्वम्]**

तत्त्वनिर्णयवैलोम्यं स्याद्वादेऽपि हि निग्रहः ।

**[वादे सम्भावितकिञ्चिन्निग्रहोद्भावनेन न कथावसानं, जल्पवितण्डयोस्तु सर्वमपि निग्रहस्थानमुद्भाव्यं, तेन कथावसानं च भवति]**

उद्भावनीयमेव स्यान्न कथावसितिर्भवेत्    ।। ९८७ ।।

विजिगीषुकथायां तु कथावसितिकारणम् ।

**[सिद्धार्थविषयत्वस्य दूषणत्वानङ्गीकारे अतिप्रसङ्गः]**

परिहारेऽपि सिद्धत्वं दूषणं प्रतिवादिनः    ।। ९८८ ।।

प्रतिज्ञायां तदन्यस्य सिद्धतैव हि साधिका ।

**[नैयायिकानां मते आश्रयासिद्ध्यादयो दोषाः, तत्त्वतस्तु न ते दोषाः]**

आश्रयव्याश्रयासिद्धी साध्यासिद्धिश्च दूषणम् ॥ ९८९ ॥

केषाञ्चिन्न च ते दोषा व्याप्तौ सत्यां कथञ्चन ।

**[शृङ्गत्वादिकं बाधितविषयत्वान्न साधनं, न तु असदाश्रयत्वात्]**

दोषो व्याहतिरेवास्ति नृशृङ्गास्तित्वसाधने ॥ ९९० ॥

यत्र व्याहतता नास्ति कोऽतिसङ्गोऽस्य साधने ।

**[न्यायानां प्रत्यक्षागममूलत्वं, तदभावे न्यायाभासत्वम्]**

प्रत्यक्षागममूलास्तु न्यायाः सर्वे भवन्ति हि ॥ ९९१ ॥

न्यायाभासा अमूलाः स्युः न्यायस्यान्यस्य तौ पुनः ।

**[अदृष्टव्यभिचारस्यैव हेतोः साध्यसाधकत्वं साक्षिणा सिद्धं प्रमाणबाधे च अदृष्टव्यभिचारित्वं न भवति अतो बाधस्य दूषणत्वम्]**

अदृष्टे व्यभिचारे तु साधकं तदिति स्फुटम् ॥ ९९२ ॥

ज्ञायते साक्षिणैवाद्धा मानबाधे न तद्भवेत् ।

**[सर्वेषां ज्ञानानां मानत्वं साक्षिणैव अवसीयते]**

यत्साक्षिणैव मानत्वं मानानामवसीयते ॥ ९९३ ॥

**[रागादिकलुषितं मनः अप्रमाणस्य प्रामाण्यं गृह्णाति तच्च बाधितं भवति]**

अमानस्य तु मानत्वं मानसत्वाच्चलं भवेत् ।

**[यथा निरुपाधिकमेव साधनं प्रामाण्योपयोगि तथा निरुपाधिक एव व्यभिचारः असाधनत्वे हेतुः]**

उत्सर्गतोऽपि यत्प्राप्तमपवादविवर्जितम्   ॥ ९९४ ॥

व्यभिचार्यपवादेन मानमेव भविष्यति ।
अतो हि भोजनादीनामिष्टसाधनतानुमा   ॥ ९९५ ॥

मानं व्यवहृतौ नित्यं व्यभिचारो हि तत्र च ।

**[व्याप्त्याद्यङ्गसाकल्ये व्यधिकरणत्वमात्रेण न दुष्टत्वं, व्यधिकरणस्यापि व्याप्त्यादिसम्पत्तितः साधकत्वं दृष्टम्, अतो व्यधिकरणासिद्धिर्न दोषः]**

व्याप्तत्वे व्याश्रयत्वं तु कथमेव हि दूषणम्   ॥ ९९६ ॥

रोहिण्युदय आसन्नः कृत्तिकाभ्युदिता यतः ।
इत्युक्ते साधनं नो किं न ह्याङ्गैवात्र साधिका   ॥ ९९७ ॥

**[अप्रसिद्धविशेषणत्वमपि न दोषः]**

अन्यत्सदसतोर्विश्वमिति च व्याहतेरमा ।
असिद्धसाधने दोषः को व्याप्तिर्यदि विद्यते   ॥ ९९८ ॥

व्याप्तिश्च व्यतिरेकेण तत्र तैश्चावगम्यते ।
अप्रसिद्धस्य साध्यस्य साधकत्वं यदेष्यते   ॥ ९९९ ॥

लिङ्गस्योक्तौ विशेषोऽयं केन मानेन गम्यते ।
साधनं परमाण्वादेर्यद्यसिद्धस्य चेष्यते   ॥ १००० ॥

यथानुभवमेवैतन्नाङ्गीकार्यं कुतस्तदा ।
यत्र नातिप्रसङ्गोऽस्ति मानं न च विपर्यये   ॥ १००१ ॥

क्लिष्टकल्पनयैवात्र साध्यमित्यतिदुर्वचः ।

**[पक्षधर्मत्वसपक्षसत्त्वादिपञ्चरूपोपपन्नत्वाभावेऽपि परिशेषादीनामनुमानत्वाङ्गीकार इव केवलव्यतिरेकिणोऽपि पञ्चरूपोपपन्नताविरहेऽपि अनुमानत्वमङ्गीकार्यम्]**

परिशेषो मिथःसिद्धिश्चक्रकस्वाश्रयादयः ॥ १००२ ॥

असिद्धसाधकत्वेन पञ्चावयवतां विना ।
अङ्गीकार्याः समस्तैस्तन्नियमः किंनिबन्धनः ॥ १००३ ॥

**[वादे सिद्धसाधनतोद्भावनेऽपि कथावसितिर्न भवति, अतो वादत्वहानेरभावात् वादकथायां सिद्धसाधनं निग्रहस्थानम्]**

सिद्धसाधनतायां च न कथावसितिर्भवेत् ।

**[वादिप्रतिवादिनोरन्यतरपक्षेऽपि व्यभिचारो हेत्वसिद्धिश्च हेतोर्दूषणमेव]**

व्यभिचारो हेत्वसिद्धिरेकपक्षेऽपि दूषणम् ॥ १००४ ॥

**[न अष्टौ दृष्टान्तदोषाः, किन्तु साध्यसाधनवैकल्यमेकमेव]**

साध्यसाधनवैकल्यं दृष्टान्तस्य ........

**[व्यर्थविशेषणत्वव्यर्थविशेष्यत्वे हेतुदूषणे]**

................ ............ विशेषणे ।
वैयर्थ्यमेकासिद्धौ च विशिष्टासिद्धिरेव हि ॥ १००५ ॥

**[प्रथमप्रश्ने अप्रयोजनतादोषोद्भावनं शक्यम्]**

अप्रयोजनता तत्र प्रथमप्रश्नदूषणम् ।

[**सिद्धार्थताऽप्रयोजनत्वयोर्न अतिरिक्तनिग्रहस्थानत्वं, किन्तु अधिकेऽन्तर्भावः**]

सिद्धप्रश्नादिकं यत्तदाधिक्यान्तर्गतं भवेत्  ।। १००६ ।।

[**अर्थापत्त्युपमानाभावानां न पृथक्प्रमाणत्वम्**]

अर्थापत्त्युपमाभावा अनुमान्तर्गताः क्वचित् ।
प्रत्यक्षान्तर्गतोऽभावः सुखादेर्नियमेन च  ।। १००७ ।।

अन्यत्र झटिति प्राप्तः ......... ....

[**उपक्रमोपसंहारादीनां वाक्यप्रकरणस्थानादीनां च अनुमानेऽन्तर्भावः**]

.... ..... .... प्रारम्भाद्याश्च युक्तयः ।
आगमार्थावसित्यर्था नियतव्याप्तयोऽखिलाः  ।। १००८ ।।

वाक्यं प्रकरणं स्थानं समाख्या च तथाविधाः ।
कुरुपाण्डववत्तेषामुपपत्तेः पृथग्वचः  ।। १००९ ।।

[**तर्कस्य दूषणानुमानेऽन्तर्भावः**]

स्वन्यायैः साधनं कार्यं परन्यायैस्तु दूषणम् ।
स्वन्यायैर्दूषणं च स्यात् साधितैः प्रतिवादिनः ।। १०१० ।।

प्रसङ्गार्थतया प्रोक्ता न सिद्धान्तस्य दूषकाः ।
[**छलजात्योर्व्याहतिप्रभेदत्वम्, यद्वा छलमसङ्गतं, जातिर्विरोधः**]
छलं जातिरिति द्वेधा व्याहत्यन्तरमिष्यते  ।। १०११ ।।

[छलजात्योर्लक्षणम्]

जातिः स्वव्याहतिर्ज्ञेया छलमर्थान्तरोत्तरम् ।

[उक्तार्थस्य प्रकृतोपयोगप्रदर्शनम्, प्रमाणाभावात् प्रमाणविरोधात् स्वव्याहतेश्च न स्वप्रस्य अनिर्वचनीयत्वम्]

एवं संशोधितन्यायसदागमविरोधतः ।। १०१२ ।।

नानिर्वाच्यमिह प्रोक्तं मायामात्रपदेन हि ।
विलक्षणं सदसतोरिति हि व्याहतं स्वतः ।। १०१३ ।।

[स्वप्रस्य सदसद्विलक्षणत्वे ब्रह्मणि प्रतियोगित्वरूपधर्माङ्गीकारप्रसङ्गः]

प्रतियोगित्वमप्यस्य ब्रह्मणोऽङ्गीकृतं भवेत् ।

[प्रतियोगित्वस्य मिथ्यात्वे स्वप्रस्य वा सत्यत्वं, ब्रह्मणो वा मिथ्यात्वं स्यात्]

मिथ्या चेत्प्रतियोगित्वं वैलक्षण्यं ततो न हि ।। १०१४ ।।

अविलक्षणत्वं सत्यं स्यान्मिथ्यात्वं ब्रह्मणस्ततः ।
अनिर्वाच्यस्य सत्त्वं वा .... .... ....

[ब्रह्मणो निर्धर्मकत्वनिरासः]

......... ............ यदि धर्मा न केचन ।। १०१५ ।।

ब्रह्मणो नैव जिज्ञास्यं जिज्ञासा धर्मनिर्णयः ।
इदमित्थमिति ज्ञानं जिज्ञासायाः प्रयोजनम् ।। १०१६ ।।

इत्थम्भावो हि धर्मोऽस्य न चेन्न प्रतियोगिता ।
इत्थम्भावात्मकान् धर्मानाहुश्च श्रुतयोऽखिलाः ।। १०१७ ।।

अदृश्यत्वादयोऽप्यस्य गुणा हि प्रभुणोदिताः ।
यदि स्युस्तादृशा धर्माः सर्वज्ञत्वादयो न किम् ।। १०१८ ।।

अन्यापेक्षा यदि स्युष्टे सत्तैवं देशकालगा ।
देशकालानपेक्षा हि न सत्ता क्वापि दृश्यते ।। १०१९ ।।

सर्वधर्मोज्झितस्यास्य किं शास्त्रेणाधिगम्यते ।
मिथ्याधर्मविधातुश्च वेदस्यैवाप्रमाणता ।। १०२० ।।

अप्राप्तां भ्रान्तिमापाद्य किं वेदो मानतां व्रजेत् ।
न हि वेदं विना ब्रह्म वेद्यं धर्माश्च तद्गताः ।। १०२१ ।।

वेदवेद्यस्य मिथ्यात्वं यदि नैक्यस्य तत्कथम् ।
धर्मारोपोऽपि सामान्यधर्मादीनां हि दर्शने ।। १०२२ ।।

इदं तदादिधर्मित्वे धर्मोऽन्यः कल्प्यतेऽत्र हि ।
सर्वधर्मविहीनस्य धर्मारोपः क्व दृश्यते ।। १०२३ ।।

तदर्थं यदि धर्माणामारोपः साऽनवस्थितिः ।

**[सार्वज्ञादेः मिथ्यात्वसिद्धये विश्वस्य भ्रान्तिकल्पितत्वकथनं न युक्तं, विश्वमिथ्यात्वसाधकानुमानस्य गौडपादादिपुरुषप्रणीतागमस्य च अप्रामाण्यात्]**

ईशतज्ज्ञानवेदाक्षजानुमामातृपूर्विणः ।। १०२४ ।।

भ्रान्तिर्विश्वस्य येनैव मानाभासेन कल्प्यते ।
तन्मात्रस्यान्यथाभावे किं न स्याद्विश्वसत्यता ।। १०२५ ।।

येनेदं कल्प्यते भ्रान्तं भ्रान्तिस्तस्यैव किं न सा ।
भ्रान्तत्वे तस्य विश्वारेरीशाद्यभ्रान्तमेव हि ॥ १०२६ ॥

भवेयुर्भ्रान्तयो नृणां नैवेशादेः कथञ्चन ।

[**विश्वसत्यत्वग्राहिप्रत्यक्षबाधितत्वात् 'नेह नानास्ति' इत्याद्यागमः न विश्वमिथ्यात्वप्रतिपादकः**]

सत्यत्वमक्षजप्राप्तं यदि भ्रान्तमितीष्यते ॥ १०२७ ॥

[**सर्वप्रमाणप्रामाण्यं साक्षिवेद्यम्**]

प्रामाण्यमागस्यापि प्रत्यक्षादन्यतः कुतः ।
साक्षिप्रत्यक्षतो ह्येव मानानां मानतेयते ॥ १०२८ ॥

[**साक्षिणः स्वप्रकाशत्वात् न अनवस्था**]

साक्षिणः स्वप्रकाशत्वमनवस्था ततो न हि ।

[**ऐक्यागमस्य प्रत्यक्षतः न प्राबल्यम्**]

तात्कालिकं प्रमाणत्वमक्षजस्य यदा भवेत् ॥ १०२९ ॥

ऐक्यागमस्य किं न स्यात् तस्याप्येतादृशं यदि ।
ऐक्यप्रमाणमिथ्यात्वं यदा विश्वस्य सत्यता ॥ १०३० ॥

ऐक्यवाक्यस्य मानत्वं यद्यबाध्यमितीष्यते ।
अक्षजस्यापि मानत्वं नाबाध्यं किमितीष्यते ॥ १०३१ ॥

अद्वैतहानिसामान्यान्न विशेषश्च कश्चन ।
यदि स्वतस्त्वं प्रामाण्ये विश्वसत्ता कथं न ते ॥ १०३२ ॥

[प्रत्यक्षस्य प्रामाण्यं तात्कालिकमिति व्याहतम्]

प्रामाण्यस्य च मर्यादा कालतो व्याहता भवेत् ।
कालान्तरेऽप्यमानं चेदिदानीं मानता कुतः ॥ १०३३ ॥

**[विश्वमिथ्यात्वप्रतिपादकानुमानागमयोः मोक्षसमये अबाधितत्वे अद्वैतहानिः, बाधितत्वे विश्वस्य पुनः प्राप्त्या मोक्षाभावप्रसङ्गः]**

मिथ्यात्वमानं मोक्षेऽपि मानं किं नेति भण्यताम् ।
मानत्वेऽद्वैतहानिः स्यादमानत्वेऽप्यमोक्षता ॥ १०३४ ॥

विश्वस्य पुनरापत्तिर्मिथ्यामानं यदा न मा ।

**[मुक्तेः सत्त्वे अद्वैतहानिः, असत्त्वे अमुक्तत्वप्रसङ्गः, मुक्तेः कालाधिकरणकत्वेन कालस्यासत्त्वे मोक्षाभावः]**

अस्ति चेन्मुक्त्यवस्था च द्वैतापत्तिरतोऽन्यथा ॥ १०३५ ॥

अमुक्तत्वं तथा काले कालाधीना हि मुक्तता ।
काल एवागमोऽप्याह मुक्तिं कालनिवर्तने ॥ १०३६ ॥

मुक्तेरपि निवृत्तिः स्यात् संसारित्वमतो भवेत् ।

[प्रत्यक्षसिद्धस्य अनुमानागमाभ्यां न बाधः, देहात्मत्वं न प्रत्यक्षसिद्धं, किन्तु अनुमानाभासगम्यम्]

क्व च प्रत्यक्षतः प्राप्तम् अनुमागमबाधितम् ॥ १०३७ ॥

देहात्मत्वं यदि न तत्प्राप्तं प्रत्यक्षतः क्वचित् ।
मम देह इति ह्येव न देहोऽहमिति प्रमा ॥ १०३८ ॥

उपचारश्च कृष्णोऽहमिति कर्दमलेपने ।
वस्त्रस्य यद्वदेवं स्यात् यद्युपाधिकृतं तदा ॥ १०३९ ॥

स्वतः शुक्लत्ववत् कार्ष्ण्यं न ममेति प्रतीयते ।

[देहादिसङ्घातस्य आत्मनश्च अन्योन्यं भेदः
तद्धर्माणां च परस्परमसंसर्गः प्रतीयत एव]

कथं च भेदो देहादेरात्मनो न प्रतीयते ।। १०४० ।।

जातमात्रा मृगा गावो हस्तिनः पक्षिणो झषाः ।
भयाभयस्वभोगादौ कारणानि विजानते ।। १०४१ ।।

अस्मृतौ पूर्वदेहस्य विज्ञानं तत्कथं भवेत् ।
अन्वयव्यतिरेकादेरनुसन्धानविस्मृतौ ।। १०४२ ।।

यदा देहान्तरज्ञानं देहैक्यावसितिः कुतः ।

[देहात्मज्ञानेऽपि आत्मनो देहे व्याप्तत्वात् अभिन्नवद्व्यवहारः]

व्याप्तत्वादात्मनो देहे व्यवहारेष्वपाटवात् ।। १०४३ ।।

भेदज्ञानेऽपि चाङ्गारवह्निवत् स्वाविविक्तवत् ।
भवन्ति व्यवहाराश्च न हि प्रत्यक्षगानपि ।। १०४४ ।।

अर्थान्यथानुभवतः प्रतिपादयितुं क्षमाः ।
लोकाः .... ....... ..... .....

[प्रत्यक्षप्राप्तस्य न अनुपजीव्यागमानुमानाभ्यां बाधः
इत्युक्तार्थोपसंहारः]

..... ततो हि प्रत्यक्षसिद्धं नान्येन केनचित् ।। १०४५ ।।

शक्यं वारयितुं क्वापि ........... .........

**[प्रत्यक्षस्य न वर्तमानमात्रग्राहित्वनियमः, उत्तरकालस्य साक्षिवेद्यत्वाभावे मोक्षस्यापि तदवेद्यत्वं स्यात्, ततश्च तदर्थः प्रयत्नो न स्यात्]**

.... ...... ..... तच्चेन्नोत्तरगोचरम् ।
कथमेवोत्तरः कालस्तद्गो मोक्षश्च गम्यते ॥ १०४६ ॥

**[पदार्थेषु प्रमाणान्तरेण शक्तिग्रहानन्तरमेव वाक्यानां वाक्यार्थबोधकत्वात् साक्षिणा उत्तरकालायनवगतौ न आगमेन तदवगतिः]**

आगमोऽपि हि सामान्ये सिद्धे प्रत्यक्षतः पुनः ।
विशेषं गमयेदेव कथं शक्तिग्रहोऽन्यथा ॥ १०४७ ॥

अतीतानागतार्थेषु जाते शक्तिग्रहेऽखिलम् ।
विशेषं गमयेद्वाक्यं न तदज्ञातशक्तिके ॥ १०४८ ॥

शक्तिश्चेद्वर्तमाने स्यान्नातीतानागतं वदेत् ।
यदि शक्तिग्रहोऽन्यत्र कथं स स्यात्तदग्रहे ॥ १०४९ ॥

**[''सामान्याकार एव शब्दवाच्यो, विशेषस्तु लक्ष्य एव । अतो न शक्तिग्रहाय अतीतादिग्रहापेक्षा'' इति मीमांसकमतस्य निरासः]**

सामान्यं दृष्टमेवासावन्यत्र गमयेद्यदि ।
सामान्यवर्जितं वस्तु स्वरूपं गमयेत्कथम् ॥ १०५० ॥

न स्वरूपत्वसामान्यं केनाप्यङ्गीकृतं क्वचित् ।
स्वरूपं चेदनुगतं व्यावृत्तं तत्र किं भवेत् ॥ १०५१ ॥

सर्वानुगतधर्माणामन्ते हि स्वत्वमिष्यते ।
किं व्यावृत्तमिति प्रश्ने स्वरूपमिति केवलम् ॥ १०५२ ॥

स्यादुत्तरं ततोऽन्यच्चेत्तदेव स्वयमेव नः ।
एवं व्यावृत्तरूपेऽपि यदा शक्तिग्रहो भवेत् ॥ १०५३ ॥

तस्य सामान्यतो ज्ञानं विना स च भवेत्कुतः ।

**[सर्वं वस्तु व्यावृत्तरूपं सामान्यरूपं च, स्वरूपाभिन्नस्य प्रतिनियतस्य सामान्याकारस्य अभ्युपगमः]**

अतो विशेषसामान्यरूपं सर्वमपीष्यते ॥ १०५४ ॥

**[एकस्यैव वस्तुतो विशेषबलेन व्यावृत्तानुवृत्तबुद्धिजनकत्वेन विशेषसामान्यरूपता]**

व्यावृत्तं यच्च सामान्यं तदेव स्याद्विशेषतः ।

**[पदार्थानां न परस्परमेकधर्मता]**

न चैकधर्मता तेन पदार्थानां परस्परम् ॥ १०५५ ॥

धर्माणां भेददृष्ट्यैव तत्सादृश्यस्य दर्शनात् ।

**[अनुगतसामान्याभावेन वर्तमानातीतानागताः साक्षिगोचराः]**

अतः सर्वे पदार्थाश्च सामान्यात्साक्षिगोचराः ॥ १०५६ ॥

सर्वमित्येव विज्ञानं सर्वेषां कथमन्यथा ।

**[अनुगतसामान्याभावेऽपि सादृश्यात् शक्तिग्रहः]**

किञ्चित्सादृश्यविज्ञानादखिलस्यापि वस्तुनः ॥ १०५७ ॥

शब्दशक्तिग्रहश्च स्यात्तत्तत्सादृश्यमानतः ।

**[मानसप्रत्यक्षस्य अतीतार्थगोचरत्वम्]**

प्रत्यक्षं मानसं चैव यदातीतार्थगोचरम् ।। १०५८ ।।

तदा स्मृतिप्रमाणत्वमतीतत्वविशेषितम् ।
आधिक्यमनुभूतात्तु यदातीतत्वमिष्यते ।। १०५९ ।।

**[बाधाभावात् स्मृतेः प्रमाणत्वम्]**

मानता च कथं न स्यात् स्मृतेर्बाधश्च नात्र हि ।

**[प्रत्यभिज्ञायाः अतीतादिग्राहित्वम्]**

मानत्वं प्रत्यभिज्ञाया अपि सर्वानुभूतिगम् ।। १०६० ।।

अतीतवर्तमानत्वधर्मिणी सा च दृश्यते ।

**[प्रत्यभिज्ञायाः प्रत्यक्षत्वसमर्थनम्]**

न च सा स्मृतिमात्रार्धा तदिदन्त्वग्रहैकतः ।। १०६१ ।।

**['प्रत्यक्षस्य न वर्तमानमात्रग्राहित्वनियमः' इत्युक्तार्थोपसंहारः]**

अतो न वर्तमानैकनियमः स्याद्ग्रहेऽक्षजे ।

**[प्रमाणप्रमेयप्रमात्रातिरिक्तप्राकट्यापरपर्यायज्ञाततायाः निरासः]**

न च प्रमाणतोऽन्या स्यात् प्रमितिर्नाम कुत्रचित् ।। १०६२ ।।

मानाभावाद्गौरवाच्च कल्पनायाः किमेतया ।
मयैतज्ज्ञातमिति तु साक्षिगं ज्ञानगोचरम् ।। १०६३ ।।

ज्ञानमेव ततोऽन्या न प्रमितिर्नाम दृश्यते ।

[प्रमाणप्रमेयप्रमातृरूपत्रिविधविश्वस्य अबाध्यत्वप्रतिपादनोपसंहारः]

मानमातृप्रमेयाणां तदुच्छित्तिर्न हि क्वचित् ॥ १०६४ ॥

[स्वप्नस्य न मिथ्यात्वं, तस्य जाग्रत्त्वमात्रे भ्रमः]

स्वाप्नानामपि चैतेषां न बाधो दृश्यते क्वचित् ।
जाग्रत्त्वमात्रमत्रैकमन्यथा दृश्यते स्फुटम् ॥ १०६५ ॥

अतो मिथ्या न च स्वप्नो जाग्रद्वज्जाग्रदेव च ।
आत्मवत्क्वचिदात्मा च स्यादेव भ्रमगोचरः ॥ १०६६ ॥

एतावता न मिथ्यासौ स्वप्ने जागरिते तथा ।
यद्यात्मन्यन्यथा दृश्यं भ्रान्तमत्रापि तद्भवेत् ॥ १०६७ ॥

अबाधितानुवृत्तेस्तु स्वप्नादेर्भ्रान्तता कुतः ।

[जाग्रत्स्वप्नयोः मिथ्यात्वानुमानमनुपपन्नम्]

न च काचित्प्रमा विश्वभ्रान्तत्वे सर्वमेव च ॥ १०६८ ॥

अभ्रान्तत्वे प्रमाणं तु कथं तद्भ्रान्तता भवेत् ।

[स्वप्नजागरयोः भ्रान्तत्वं साधयतः मतमपि भ्रान्तं, अशेषदोषदुष्टम्]

किञ्च भ्रान्तत्ववादी स भ्रान्तत्वं स्वमतस्य च ॥ १०६९ ॥

अङ्गीकरोति नियतं तत्र सम्प्रतिपन्नता ।
वादिनोस्तेन चाभ्रान्तं विश्वमेव भविष्यति ॥ १०७० ॥

भ्रान्तत्वभ्रान्तता चेत्स्यात् कथं नाभ्रान्तिसत्यता ।
अशेषदोषदुष्टं तन्मतं हेयं बुभूषुभिः ॥ १०७१ ॥

येन स्वमतहेयत्वं स्वयमङ्गीकृतं सदा ।
भ्रान्तित्वाद्दुर्घटत्वस्य भूषणत्वाच्च केवलम्    ।। १०७२ ।।

उन्मत्तोऽपि कथं तस्य मतं स्वीकर्तुमिच्छति ।
ईशशक्तेरचिन्त्यत्वान्महोन्मत्तैः प्रवर्तितम्    ।। १०७३ ।।

**[मायाशब्दार्थनिरूपणम्, जीववासना उपादानकारणम्, ईश्वरप्रज्ञा निमित्तकारणम्]**

अतः प्रज्ञाऽत्र मायोक्ता जैव्युपादानमेव सा ।
निमित्तमैश्वरी मुख्या ..... ....... ....

**[मायामात्रशब्दार्थः]**

........ ..... निर्मितं त्रातमेव च    ।। १०७४ ।।

ताभ्यां सह पृथक् चैव मायामात्रमितीर्यते ।
उभाभ्यां मातमैश्वर्यात्त्रातं सह पृथक् ततः    ।। १०७५ ।।

**[प्रज्ञावासनयोः मन उपादानकत्वम्, अत एव अत्र जैवीप्रज्ञाशब्दः वासनायां लाक्षणिकः]**

प्रज्ञात्मकं मनो येन मनोरूपाश्च वासनाः ।
धीर्भीरिति मनस्त्वेवेत्याह च श्रुतिरञ्जसा    ।। १०७६ ।।

**[मनः चिदचिन्मिश्रम्, जीवः सर्वाः सांसारिकीः अवस्थाः यावन्मुक्ति मनसैव पश्यति]**

चिदचिन्मिश्रमेवैतन्मनो यावच्च संसृतिः ।
तेनावस्था इमाः सर्वा जीवः पश्यति सर्वदा    ।। १०७७ ।।

[**'कात्स्न्र्येन अनभिव्यक्तस्वरूपत्वात्' इति सूत्रांशव्याख्यानम्**]

मनोविकारा विषयाः स्वाप्ना यद्बाह्यवन्न ते ।
स्थूला भवन्त्यतस्तेषां स्पष्टता न तथा क्वचित् ।। १०७८ ।।

क्वचित् स्पष्टा अपि स्युष्टे वासना मानसी च सा ।
।। इति सन्ध्याधिकरणम् ।। १ ।।

**पराभिध्यानाधिकरणम् - २**

**।। ॐ पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ ॐ ।। ३-२-५ ।।**

[**न केवलं स्वप्न ईश्वरेच्छाधीनः, किन्तु तत्तिरोधानं तदभिव्यक्तिरपि**]

ईशेच्छयान्तर्दधाति व्यज्यते च पुनस्तया ।। १०७९ ।।

।। इति पराभिध्यानाधिकरणम् ।। २ ।।

**देहयोगाधिकरणम् - ३**

**।। ॐ देहयोगाद्वासोऽपि ॐ ।। ३-२-६ ।।**

[**द्वितीयतृतीयाधिकरणार्थोपसंहारः**]

सृष्ट्वैव वासनाभिश्च प्रपञ्चं स्वाप्नमीश्वरः ।
वासनामात्रतां तस्य नीत्वाऽन्तर्धापयत्यजः ।। १०८० ।।

।। इति देहयोगाधिकरणम् ।। ३ ।।

## तदभावाधिकरणम् - ४

**।। ॐ तदभावो नाडीषु तच्छ्रुतेरात्मनि ह ॐ ।।३-२-७।।**

।। इति तदभावाधिकरणम् ।। ४ ।।

## प्रबोधाधिकरणम् - ५

**।। ॐ अतः प्रबोधोऽस्मात् ॐ ।। ३-२-८ ।।**

।। इति प्रबोधाधिकरणम् ।। ५ ।।

## कर्मानुस्मृत्यधिकरणम् - ६

**।। ॐ स एव च कर्मानुस्मृतिशब्दविधिभ्यः ॐ ।।३-२-९।।**

।। इति कर्मानुस्मृत्यधिकरणम् ।। ६ ।।

## सम्पत्त्यधिकरणम् - ७

**।। ॐ मुग्धेऽर्धसम्पत्तिः परिशेषात् ॐ ।। ३-२-१० ।।**

[**परमेश्वर एव जीवं सुषुप्तिबोधमोहान् प्रापयति**]

सुषुप्तिबोधमोहांश्च स्ववशस्तद्वशं सदा ।
जीवं नयति जीवेशः ... ...... .....

[**परमेश्वर एव सर्वेषां सर्वावस्थाप्रेरकः,
न तु केषाञ्चित् कादाचित्कावस्थाप्रेरकः**]

.... ..... .... नान्यः कर्ताऽस्य कश्चन ।। १०८१ ।।

।। इति सम्पत्त्यधिकरणम् ।। ७ ।।

### न स्थानतोऽप्यधिकरणम् - ८

### ।। ॐ न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि ॐ ।। ३-२-११ ।।

[सुरनरादिशरीरेषु प्रतिशरीरं दक्षिणाक्ष्यादिस्थानेषु स्वप्नादिकर्ता न स्थानभेदेन भिन्नः]

न स्थानभेदतोऽप्यस्य भेदः कश्चित्परेशितुः ।
सर्वत्राशेषदोषोज्झपूर्णकल्याणचिद्गुणः ।। १०८२ ।।

### ।। ॐ न भेदादिति चेन्न प्रत्येकमतद्वचनात् ॐ ।। ३-२-१२ ।।

### ।। ॐ अपि चैवमेके ॐ ।। ३-२-१३ ।।

['कार्यकारणबद्धौ तौ' इत्यादिश्रुत्या परमात्मनि भिन्नत्वाल्पगुणत्वादिप्रतीतिरित्याक्षेपो न युक्तः । सकलश्रुतिस्मृतीतिहासपुराणानां परमेश्वरस्य अशेषदोषदूरत्वे समस्तगुणपरिपूर्णत्वे महातात्पर्यात् तद्विरुद्धस्य मानत्वाभावात्]

तद्विरुद्धं तु यत्तत्र मानं नैव क्वचिद्भवेत् ।
महातात्पर्यरोधेन कथं तन्मानमत्र तु ।। १०८३ ।।

[मोक्षादिप्रयोजनेन शास्त्रेण तत्साधनभूतं भगवद्गुणोत्कर्षनिर्दोषताज्ञानमेवोत्पादनीयमिति तत्रैव अशेषशास्त्रस्य महातात्पर्यम्]

दुःखाप्ययसुखावाप्तिहेतुत्वेनैव वेदवाक् ।
भवेन्मानं तदीशानात्प्रसन्नादेव नान्यथा ।। १०८४ ।।

प्रसन्नता गुणोत्कर्षज्ञानादेव हि केवलम् ।
निर्दोषतापरिज्ञानादपि नान्येन केनचित्   ॥ १०८५ ॥

[निर्दोषाशेषसद्गुणपरमात्मज्ञानं प्रसादद्वारा मोक्षसाधनमित्यत्र प्रमाणवचनानि]

''यो मामशेषदोषोज्झं गुणसर्वस्वबृंहितम् ।
जानात्यस्मै प्रसन्नोऽहं दद्यां मुक्तिं न चान्यथा''॥१०८६॥

''यो मामशेषाभ्यधिकं विजानाति स एव माम् ।
विजानात्यखिलांस्तस्य दद्यां कामान् परं पदम्''॥ १०८७ ॥

'यो मामेवमसम्मूढः' 'किं मां निन्दन्ति शत्रवः' ।
इत्यादिवेदस्मृतिगवाक्यैरेवावसीयते   ॥ १०८८ ॥

[उक्तार्थे अनुमानम्]

लोकतश्च प्रसादेन मुक्तिः सगुणवेदनात् ।

[महातात्पर्यविरुद्धवचनानामन्यार्थता]

महातात्पर्यमुख्यस्य विरोधादत एव हि   ॥ १०८९ ॥

दोषित्वनिर्गुणत्वाल्पगुणत्वादि कथञ्चन ।
नार्थः श्रुतिपुराणादेः ......... ....

[सकलशास्त्रस्य भगवद्गुणोत्कर्षे महातात्पर्यमित्यत्र भगवद्गीतासमाख्या]

.... ......... तद्विरुद्धोऽखिलस्य च   ॥ १०९० ॥

अर्थः स्वयं विनिर्णीतो वासुदेवेन सादरम् ।
''इति गुह्यतमं शास्त्रमिदमुक्तं मयानघ   ॥ १०९१ ॥

एतद्बुद्ध्वा बुद्धिमान् स्यात् कृतकृत्यश्च भारत'' ।
इति ............... ........................

[ अधिकरणार्थोपसंहारः ]

..... अतोऽखिलसच्छास्त्रविरुद्धत्वेन नानुमा ॥ १०९२ ॥

वर्तते तत्र तेनेशो निर्णीतोऽखिलसद्गुणः ।
॥ इति न स्थानतोऽप्यधिकरणम् ॥ ८ ॥

अरूपाधिकरणम् - ९

॥ ॐ अरूपवदेव हि तत्प्रधानत्वात् ॐ ॥ ३-२-१४ ॥

॥ ॐ प्रकाशवच्चावैयर्थ्यम् ॐ ॥ ३-२-१५ ॥

॥ ॐ आह च तन्मात्रम् ॐ ॥ ३-२-१६ ॥

॥ ॐ दर्शयति चाथो अपि स्मर्यते ॐ ॥ ३-२-१७ ॥

॥ इति अरूपाधिकरणम् ॥ ९ ॥

उपमाधिकरणम् - १०

॥ ॐ अत एव चोपमा सूर्यकादिवत् ॐ ॥ ३-२-१८ ॥

[ भेदाभेदमतनिरासः ]

[ 'जीवः ब्रह्माभिन्नः चेतनत्वात्, ब्रह्मांशत्वात्' इत्यनुमानं न युक्तं 'जीवो ब्रह्माभिन्नो न भवति तदाभासत्वात्' इत्यनुमानविरोधात् ]

न च चित्त्वादभिन्नत्वं जीवस्येशवदाप्यते ॥ १०९३ ॥

यत आभासतामेव श्रुतिरस्य वदत्यलम् ।

**[जीवस्य ब्रह्माभासत्वे श्रुतिवचनानि]**

''यथैषा पुरुषे छाया एतस्मिन्नेतदाततम्''   ।। १०९४ ।।

''छाया यथा पुंसदृशी पुमधीना च दृश्यते ।
एवमेवात्मकाः सर्वे ब्रह्माद्याः परमात्मनः''   ।। १०९५ ।।

''सत्ताप्रतीतिकार्येषु पुमधीनो यथेयते ।
आभास एव पुरुषा मुक्ताश्च परमात्मनः''   ।। १०९६ ।।

**[जीवस्य ब्रह्माभासत्वं न साक्षात्, किन्तु रमाब्रह्मादिपरम्परया]**

''छाया विष्णो रमा तस्याश्छाया धाता विशेषकौ ।
तस्येन्द्रकामौ च तयोस्तयोरन्येऽखिला अपि'' ।। १०९७ ।।

हरेर्ब्रह्मास्य गीस्तस्या विशेषाविन्द्र एतयोः ।
मारश्चाभासकाः सर्व एतयोस्तदधीनतः   ।। १०९८ ।।

**[परमेश्वरः पूर्णशक्तिः, अन्ये सर्वे अल्पशक्तयः,
परमेश्वराभासत्वात् जीवाः तेन अत्यन्तभिन्नाः]**

सर्वेऽल्पशक्तयश्चैव पूर्णशक्तिः परो हरिः ।
चेतनत्वेऽपि भिन्नास्ते तस्मादेतेन सर्वदा''   ।। १०९९ ।।

इत्यादिश्रुतिवाक्येभ्यो ज्ञायते भेद एव हि ।

**[जीवस्य परमेश्वराभासत्वं श्रुतियुक्तिविरुद्धं,
अतः समुदायैक्यमङ्गीकार्यमित्याशङ्का]**

आभासत्वं हि निर्णीतं जीवस्य परमात्मनः   ।। ११०० ।।

तन्न युक्तं यदाभास उपाध्यायत्त ईयते ।
उपाध्यायत्तताभावादाभासत्वविरोधतः ॥ ११०१ ॥

चेतनत्वेन चांशत्वात् समुदायैक्यमापतेत् ।

**[समुदायैक्याङ्गीकारे समुदायांशयोः जीवेश्वरयोः भेदोऽपि सम्भवति]**

अतः पृथक्त्वमुदितं समुदायांशयोर्भवेत् ॥ ११०२ ॥

**[समुदायैक्यस्वरूपम्**
**ब्रह्म एकमेव तत्त्वं मायासम्बन्धादीश्वरतामापद्यते, जीवाः ब्रह्मणोंऽशाः भिन्नाभिन्नाः]**

ईशाख्या समुदाये स्यादीशरूपेष्विवोदिता ।

**[देहाद्युपाधीनामात्यन्तिकापाये जीवाः स्वाभाविकं ब्रह्मत्वमापद्यन्ते]**

अतो देहाद्युपाधीनामपाये समता भवेत् ॥ ११०३ ॥

ईशरूपैः ....... ........ ......

**[सूर्यकादिवत् उपाधिनिमित्तमाभासत्वं जीवस्य न सम्भवतीत्याक्षेपः]**

..... अथाभासा मुख्यतः सूर्यकादिवत् ।
यदा तदोपाध्यायत्तरूपाणां नाशिता भवेत् ॥ ११०४ ॥

**[एतदाशङ्कानिवृत्त्यर्थं 'अत एव चोपमा' इति सूत्रभागः]**

इत्याशङ्कानिवृत्त्यर्थमाह वेदाधिपः प्रभुः ।
अत एवोपमेत्येव च ...........

**[परमात्माधीनत्वपरमात्मसदृशत्वाभ्यां जीवस्य परमात्माभासत्वं न तु उपाध्यधीनत्वतन्नाशनाश्यत्वाद्यैः]**

... ....... ... अन्याभासविशेषिताम्   ॥ ११०५ ॥

यदुक्तं तदधीनत्वं सर्वावस्थास्वशेषतः ।
जीवस्य सदृशत्वं च चित्त्वमात्रं न चापरम्   ॥ ११०६ ॥

तावन्मात्रेण चाभासो रूपमेषां चिदात्मनाम् ।
नोपाध्यधीनताद्यैश्च नातिसाम्यं निदर्शने   ॥ ११०७ ॥

किञ्चित्सुखादिसादृश्यमपीशेनासुरानृते ।

**[आभासशब्दार्थनिरूपणम्]**

तत आभासते नित्यं तद्वदाभासतेऽपि च   ॥ ११०८ ॥

भानमस्तित्वमपि चैवासमन्ताद्यतस्ततः ।
जीव आभास उद्दिष्टः सदैव परमात्मनः   ॥ ११०९ ॥

न जलायत्तसूर्यादिप्रतिबिम्बोपमत्वतः ।

**[सूत्रे एवशब्दः तदधीनत्वं, चशब्दः किञ्चित् सादृश्यं च अवधारयतः]**

तदधीनत्वमेवेति किञ्चित्सादृश्यमेव च   ॥ १११० ॥

सम्प्रकाशयतः सूत्रगतौ ..........

**[समुदायैक्यं सर्वप्रमाणविरुद्धम्]**

........ ...... अखिलमानतः ।
जीवेशभेददृष्ट्यैव समुदायैकता कुतः   ॥ ११११ ॥

[**'सर्वोपेत' इत्यादिसूत्रेण सर्वशक्तेः ब्रह्मणः निर्दोषित्वस्योक्तत्वेन दोषिणा जीवेनैक्यं न युज्यते**]

अशेषदोषराहित्यं सर्वशक्तित्वतो हरेः ।
''सर्वोपेते''ति कथितमत ऐक्यं क्व दोषिणा ।। १११२ ।।

[**उपाधिनिमित्तदोषवत्त्वं न घटते**]

अशेषशक्तियुक्तश्चेत् स्वातन्त्र्याद्दोषवान् कथम् ।

[**'जीवब्रह्मणोरैक्येऽपि ब्रह्मणो जीवगतदुःखाद्यनुसन्धानाभावात् न दोषः' इत्यादिपरिहारनिरासः**]

अनुसन्धानरहितमैक्यं चेदेकता न तत् ।। १११३ ।।

चेतनैक्येऽनुसन्धानं प्रमाणं नैव चापरम् ।
अनुसन्धानरहितं समुदायैक्यमेव चेत् ।। १११४ ।।

चेतनेष्वस्तु तन्नाममात्रमेव यतस्ततः ।
मुक्तौ स्यादनुसन्धानमित्यपि स्यात्सुदुष्करम् ।। १११५ ।।

सर्वज्ञ एकतां नानुसन्धत्ते नैव सा यतः ।
पश्चात्स्यादनुसन्धानं चेन्मिथ्याज्ञानिता भवेत् ।। १११६ ।।

विद्यमानानुसन्धानं न चेदज्ञत्वमापतेत् ।
असदैक्यं भवेत्पश्चाद्यदि स्यात् सप्तमो रसः ।। १११७ ।।

[**संसारे मोक्षे च समुदायैक्यमिति पक्षस्य निरासः**]

समुदायैक्यमेतस्माद्दूरतोऽपाकृतं सदा ।

[**मत्स्याद्यवताराणां तु परस्परं परमात्मना च न भेदः**]

अतोऽशेषगुणोन्नद्धं निर्दोषं यावदेव हि ॥ १११८ ॥

तावदेवेश्वरो नाम तत्र भेदोऽपि न क्वचित् ।
"नेह नानास्ति किमपि हरयोऽयमयं हि सः"॥ १११९ ॥

इत्यादिश्रुतिमानेन ...... ......

[**इन्द्रार्जुनाद्यंशेषु अनुसन्धानप्रकारः**]

........... जीवांशाः सर्व एव च ।
नियमेनानुसन्धानवन्तो यद्येकता स्वतः ॥ ११२० ॥

अंशिनोऽशेषसन्धानमत्यल्पस्यापि विद्यते ।
भुवि जातेन चांशेन सुखदुःखादि तद्गतम् ॥ ११२१ ॥

अनुभूयते विशेषस्तु कश्चिदीशकृतो भवेत् ।
ईशस्याचिन्त्यशक्तित्वान्नाशक्यं क्वापि विद्यते ॥ ११२२ ॥

[**जीवेश्वरैक्ये ईश्वरस्य ईशतैव अनुपपन्ना**]

सेशतानुपपन्नैव यदि जीवैकतास्य हि ।
अनीशस्येशतेत्येव विरुद्धं सर्वमानतः ॥ ११२३ ॥

[**उपजीव्यविरोधात् जीवेश्वरैक्ये श्रुतिः न प्रमाणम्**]

ईशत्वेनैव विज्ञातमनीशत्वेन चेत् श्रुतिः ।
अनीशत्वेन विज्ञातमीशत्वेनाथवादिशेत् ॥ ११२४ ॥

उपजीव्यविरोधेन नैव मानत्वमेष्यति ।

**[अघटितघटनाशक्त्या ईशत्वानीशत्वयोरेकत्र समावेशकल्पना न युक्ता]**

अत एवेशतासिद्धेर्न किञ्चिच्छक्यमस्य च ।। ११२५ ।।

**[परमात्मशक्त्या अघटितघटनाकल्पनाप्रकारः]**

ईशत्वेऽनीशभेदेन श्रुत्या सम्यक्प्रकाशिते ।
अयुक्तमपि चान्यत्र युक्तं भवति तद्बलात् ।। ११२६ ।।

अतोऽन्यत्रापि यद्दृष्टं तदीशेनैव कल्प्यते ।
श्रुत्याभासाप्तमपि न हीशत्वपरिपन्थि यत् ।। ११२७ ।।

**[उक्तार्थे ब्रह्मतर्कवचनानि]**

ईशोऽनीशो जगन्मिथ्या दुःखी मुक्तो भिदा न हि ।
इति प्रतिज्ञाव्याघातः सर्वदोषाधिकाधिकः ।। ११२८ ।।

इति हि ब्रह्मतर्कोक्तिरतिहेयमतोऽखिलैः ।
बुभूषुभिर्मतमिदं जीवेशाभेदवादिनः ।। ११२९ ।।

नायुक्तमीशितुः किञ्चिदीशत्वस्याविरोधि यत् ।
यदीशत्वविरोधि स्यात्तदेवायुक्तमञ्जसा ।। ११३० ।।

ईशत्वस्याविरोधेन योजयित्वाखिलाः प्रमाः ।
सिद्धेशत्वेन चायुक्तमपि हीशेन योजयेत् ।। ११३१ ।।

मानतः प्राप्तमखिलं नामानं योजयेत्क्वचित् ।
इति हि ब्रह्मतर्कोक्तिरतो युक्तमिहोदितम् ।। ११३२ ।।

।। इति उपमाधिकरणम् ।।

**[अरूपाधिकरणस्थसूत्रचतुष्टयतात्पर्यनिरूपणम्**
**प्राकृतरूपरहितत्वादरूपं ब्रह्म]**

स चाप्राकृतरूपत्वादरूपः स्वगुणात्मकम् ।
रूपमस्य शिरःपाणिपादाद्यात्मकमिष्यते ॥ ११३३ ॥

अतो नानित्यता नैव श्रुतिद्वयविरोधिता ।
यथा हि तैजसस्यैव प्रकाशस्योज्झितावपि ॥ ११३४ ॥

आत्मैव ज्योतिरित्याह जीवस्येशं श्रुतिस्तथा ।

**अम्बुवदधिकरणम् - ११**

**॥ अम्बुवदग्रहणात्तु न तथात्वम् ॐ ॥ ३-२-१९ ॥**

॥ इति अम्बुवदधिकरणम् ॥ ११ ॥

**वृद्धिह्रासाधिकरणम् - १२**

**॥ ॐ वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवम् ॐ ॥ ३-२-२० ॥**

**॥ ॐ दर्शनाच्च ॐ ॥ ३-२-२१ ॥**

**['अथात आनन्दस्य मीमांसा' इत्यादिश्रुत्या मुक्तौ आनन्दस्य साध्यस्य तारतम्यावगमात् साधनभूतायाः भक्तेरपि तारतम्यमावश्यकम्]**

तद्भक्तितारतम्येन तारतम्यं विमुक्तिगम् ॥ ११३५ ॥

ब्रह्मादीनां च सर्वेषामानन्दादेर्यथाक्रमम् ।

॥ इति वृद्धिह्रासाधिकरणम् ॥ १२ ॥

पालकत्वाधिकरणम् - १३

।। ॐ प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः ॐ ।। ३-२-२२ ।।

।। इति पालकत्वाधिकरणम् ।। १३ ।।

अव्यक्तत्वाधिकरणम् - १४

।। ॐ तदव्यक्तमाह हि ॐ ।। ३-२-२३ ।।

।। ॐ अपि संराधने प्रत्यक्षानुमानाभ्याम् ॐ ।।३-२-२४।।

।। ॐ प्रकाशवच्चावैशेष्यम् ॐ ।। ३-२-२५ ।।

।। ॐ प्रकाशश्च कर्मण्यभ्यासात् ॐ ।। ३-२-२६ ।।

।। ॐ अतोऽनन्तेन तथा हि लिङ्गम् ॐ ।। ३-२-२७ ।।

।। इति अव्यक्तत्वाधिकरणम् ।। १४ ।।

अहिकुण्डलाधिकरणम् - १५

।। ॐ उभयव्यपदेशात्त्वहिकुण्डलवत् ॐ ।। ३-२-२८ ।।

।। ॐ प्रकाशाश्रयवद्वा तेजस्त्वात् ॐ ।। ३-२-२९ ।।

।। ॐ पूर्ववद्वा ॐ ।। ३-२-३० ।।

।। ॐ प्रतिषेधाच्च ॐ ।। ३-२-३१ ।।

।। इत्यहिकुण्डलाधिकरणम् ।। १५ ।।

## परमताधिकरणम् - १६

**।। ॐ परमतः सेतून्मानसम्बन्धभेदव्यपदेशेभ्यः ॐ ।। ३-२-३२ ।।**

**।। ॐ दर्शनात् ॐ ।। ३-२-३३ ।।**

**।। ॐ बुद्ध्यर्थः पादवत् ॐ ।। ३-२-३४ ।।**

।। इति परमताधिकरणम् ।। १६ ।।

## स्थानविशेषाधिकरणम् - १७

**।। ॐ स्थानविशेषात्प्रकाशादिवत् ॐ ।। ३-२-३५ ।।**

**[ब्रह्माद्यानन्दानां भगवदानन्दप्रतिबिम्बत्वेऽपि साधनभूतभक्त्यादिवैचित्र्यात् वैचित्र्यम्]**

प्रतिबिम्बवदप्येषामानन्दोऽन्यगुणा यथा ।। ११३६ ।।

**।। ॐ उपपत्तेश्च ॐ ।। ३-२-३६ ।।**

**[बिम्बभूतनारायणशक्त्या च प्रतिबिम्बेषु वैचित्र्यम्]**

नारायणगुणाधीनश्च ............

**[ब्रह्मादिजीवानन्दः अत्यल्पत्वात् बिम्बभूतभगवदानन्दाद्भिन्नः]**

.......... अत्यल्पस्तदपेक्षया ।

तस्माद्भिन्नश्च सततं ....... ......

**[ब्रह्मादिजीवानन्दस्य अत्यल्पत्वे श्रुतिः]**

....... ..... ''अन्यज्ज्ञानं परस्य च ।। ११३७ ।।

अन्यज्ज्ञानं च जीवानामन्य आनन्द ईशता ।
मुख्येशता परेशस्य गौणी जीवस्य सा यतः" ।। ११३८ ।।

इति श्रुतेः ...... ..........

।। इति स्थानविशेषाधिकरणम् ।। १७ ।।

[**पालकत्वाधिकरणपूर्वपक्षसिद्धान्ताशयविशदीकरणम्**]

... .... सृष्टिनाशौ तदधीनावितीरिते ।
स्वभावत्वात्स्थितेर्नैतदपेक्षेति न युज्यते ।। ११३९ ।।

यतः स्वभावोऽप्यखिल ईशायत्तोऽखिलस्य च ।

[**अव्यक्तत्वाधिकरणतात्पर्यनिरूपणम् जीवशक्त्यपेक्षया अव्यक्तोऽपि भगवान् स्वशक्त्यैव दृश्यते**]

अव्यक्तोऽपि स्वशक्त्यैव भक्तानां दृश्यते हरिः ।। ११४० ।।

[**अहिकुण्डलाधिकरणतात्पर्यनिरूपणम् सर्वेषां ब्रह्मधर्माणां ब्रह्मणा सविशेषोऽत्यन्ताभेदः**]

तदभिन्ना गुणा नित्यमपि सर्वे विशेषतः ।
गुणत्वेन गुणित्वेन भोक्तृभोग्यतया स्थिताः ।। ११४१ ।।

विशेषात्मतया तेषां नित्यशक्त्यात्मना तथा ।
नित्यं स्थितेर्न धर्माणां क्रियादीनामनित्यता ।। ११४२ ।।

न विशेषात्मता चेयमनित्या शक्तिरूपता ।
सैव यत्सविशेषा स्याद् ....... ... .....

[**विशेषोऽपि भगवतो नैव भिन्नः, स्वनिर्वाहकश्च**]

... ..... ..... विशेषोऽन्यो न चाप्ययम्  ।। ११४३ ।।

स्वनिर्वाहकताहेतोस्तथापि स्याद्विशेषता ।

[**ज्ञानादिधर्माणां भगवदभिन्नत्वं तद्विशेषत्वमित्युभयस्यापि श्रुतौ व्यपदेशो वर्तते**]

विशेषत्वेन विज्ञातेः प्रमाणैरखिलैरपि  ।। ११४४ ।।

ससर्ज सञ्जहारेति विशेषो ह्यवगम्यते ।
श्रुत्यैव स स एवेति तदभेदश्च गम्यते  ।। ११४५ ।।

[**सविशेषाभेदसमर्थनम् प्रथमं भेदवादिना विशेषोऽवश्यमङ्गीकार्य इति प्रतिपादनम्**]

भेदो यदि विशेषस्य स भेदो भेदिना कथम् ।
भिन्नश्चेदनवस्था स्यादभिन्नश्चेत् पुरा न किम्  ।। ११४६ ।।

विशेषोऽभिन्न एवेति तेन नाभ्युपगम्यते ।
अभिन्नो निर्विशेषश्चेद्भेदस्तद्भेदता कुतः  ।। ११४७ ।।

अनेनानेन भिन्नोऽयमिति यत्सविशेषतः ।
भेद एवैष बहुधा दृश्यते तत्किमुत्तरम्  ।। ११४८ ।।

अभेदभेदयोश्चैव स्वरूपत्वं हि भेदिनः ।
तयोरप्यविशेषत्वे पर्यायत्वं हि शब्दयोः  ।। ११४९ ।।

अभेदभेदशब्दौ च पर्यायाविति को वदेत् ।
भेदोऽन्योन्यमभेदश्च भेदिना चेद्विशेषिता  ।। ११५० ।।

अविशेषे कथं भेदो भेदिनैकस्तथा भिदा ।
पुनस्तयोर्विभेदश्च भेदिमात्रत्वतो भवेत् ॥ ११५१ ॥

भेदिनश्चैव भेदस्य विशेषो यदि गम्यते ।
अभेदाभेदिनोश्चैव किं भेदोऽभेदभेदयोः ॥ ११५२ ॥

विशेषेणैव सर्वत्र यदि व्यवहृतिर्भवेत् ।
कल्पनागौरवायैव किं भेदः कल्प्यते तदा ॥ ११५३ ॥

ऐक्यप्रतीत्यभावेन भेद एव गवाश्वयोः ।
स एवेति प्रतीतौ हि विशेषो नाम भण्यते ॥ ११५४ ॥

[अभेदवादिना मायावादिनापि विशेषोऽवश्यमङ्गीकार्य इति प्रतिपादनम्]

सच्चिदादेरपर्यायसिद्ध्यर्थं मायिनापि हि ।
अङ्गीकार्यो विशेषोऽयं यद्यसत्यविशेषणम् ॥ ११५५ ॥

पृथक्पृथग्वारयितुं शब्दान्तरमितीष्यते ।
मायाविशेषराहित्यविशेषणविशेषिता ॥ ११५६ ॥

सत्यस्यापि भवेत्सा च तथा चेदनवस्थितिः ।
यदि सत्ये विशेषो न न तदुक्तिर्भवेत्तदा ॥ ११५७ ॥

लक्ष्यते चेत्तेन लक्ष्यमित्यपि स्याद्विशेषिता ।
पुनः पुनर्लक्षणायामपि स्यादनवस्थितिः ॥ ११५८ ॥

यद्यभावविशेषित्वं स्यादङ्गीकृतमेव ते ।
असार्वज्ञादिराहित्यमप्येवं ते भविष्यति ।। ११५९ ।।

तदा सार्वज्ञमेव स्याद्भावार्थत्वान्नञोर्द्वयोः ।
यदि नैतादृशं ग्राह्यमसुखत्वानिवर्तनात् ।। ११६० ।।

असत्त्वाज्ञानतादेश्च स्यादसत्त्वादिकं तदा ।
अनृतादिविरोधित्वं यद्यस्याभ्युपगम्यते ।। ११६१ ।।

अनैश्वर्यविरोधित्वमप्येवं किं निवार्यते ।
अखण्डखण्डनादेवं विशेषोऽखण्डवादिना ।। ११६२ ।।

खण्डितेनापि मनसा स्वीकार्योऽनन्यथागतेः ।

[भेदाभेदवादिनापि विशेषोऽवश्यमङ्गीकार्यः]

अखण्डखण्डवादिभ्यां खण्डाखण्डेन चैव तत् ।। ११६३ ।।

महादरेण शिरसि विशेषो धार्य एव हि ।

[अहिकुण्डलादिनिदर्शनत्रयमपि सविशेषाभेदोपयुक्तत्वेन सूत्रकारस्याभिमतम्]

निदर्शनत्रयेणातो भगवानत्यभिन्नताम् ।। ११६४ ।।

गुणानामादरेणाह ............ ........

[भगवद्धर्माणां भगवता सविशेषाभेदस्य समर्थितत्वात् अभिहितान्वयवादो न सूत्रकाराभिप्रेतः, किन्तु अन्विताभिधानवाद एव अभिप्रेत इत्यवगम्यते]

.................... तच्च नाभिहितान्वयः ।
यदाशेषविशेषाणामुक्तिः सामान्यतो भवेत् ।। ११६५ ।।

पदैकेनाप्युत्तरेण विशेषावगतिर्भवेत् ।
यतोऽशेषविशेषाणां वस्तुनास्त्येव चैकता ।। ११६६ ।।

अतः सामान्यतो ज्ञातः पदान्तरबलात्पुनः ।
भवेद्विशेषतो ज्ञातस्तेन स्यादन्वितोक्तिता ।। ११६७ ।।

[अन्विताभिधानमनुभवसिद्धम्]

स्वार्थ एवान्वितो यस्मात् केनचित्तद्विशेषतः ।
अनेनेति तदुक्त्यैव ज्ञायतेऽनुभवेन हि ।। ११६८ ।।

[अन्विताभिधानानङ्गीकारे बाधकप्रदर्शनम्]

यद्यनन्वितमेवैतत् पदं स्वार्थं वदेदिह ।
तथान्यान्यपि सर्वाणि कः कुर्यादन्वयं पुनः ।। ११६९ ।।

व्यापारो न हि शब्दस्य परः स्वार्थप्रकाशनात् ।
पुमानप्येकवारोक्त्या कृतकृत्यो यदा भवेत् ।। ११७० ।।

अन्वयस्य कथं ज्ञानं शब्दार्थत्वं यदास्य न ।
यदैवानन्वितार्थस्य वचनं तैः पदैर्भवेत् ।। ११७१ ।।

अनन्वितः स्याच्छब्दार्थो न तदर्थो हि सोऽन्वयः ।
निराकाङ्क्षपदान्येव वाक्यमित्युच्यते बुधैः ।। ११७२ ।।

तत्तदर्थाभिधानेन स्यान्निराकाङ्क्षता च सा ।
अपूर्तेस्तावदर्थानामाकाङ्क्षा पूर्वमिष्यते ।। ११७३ ।।

कर्मकर्तृक्रियाणां तु पूर्तौ कोऽन्योऽन्वयो भवेत् ।
अपूर्तिश्चेत्पदैरुक्तैः किं नृभृङ्गेण पूर्यते ॥ ११७४ ॥

व्यापारश्चेत्पुनस्तेषामनुक्तावपि किं न सः ।
उक्ते बुद्धिस्थताहेतोर्यदि व्यापार इष्यते ॥ ११७५ ॥

बुद्धिस्थत्वाय यत्नं न कथं कुर्युः पुरैव च ।
पुरुषाधीनता तेषां यदि पश्चाच्च सा समा ॥ ११७६ ॥

पुमानेवान्वयायैषां यदि पश्चाद्विचेष्टते ।
अनन्विताभिधानानां स एवार्थान्तरोक्तिषु ॥ ११७७ ॥

यततां शब्दशक्तिश्चेत्तत्र नैवान्वये कथम् ।
तत्कल्पनागुरुत्वादिदोषेतोऽभिहितान्वयः ॥ ११७८ ॥

[ **अभिहितान्वयवादोऽनुभवविरुद्धः** ]

अनुभूतिविरुद्धश्च त्याज्य एव मनीषिभिः ।
कर्तृशब्दे ह्यभिहिते धर्मसामान्यवेदनात् ॥ ११७९ ॥

विशेषधर्ममन्विच्छन् किमित्येव हि पृच्छति ।
गुणक्रियादिधर्माणां विशेषे कथिते पुनः ॥ ११८० ॥

निराकाङ्क्षो भवेद्यस्माच्छब्दा अन्वितवाचकाः ।

[ **अधिकरणार्थोपसंहारः** ]

अतोऽनन्तगुणात्मैको भगवानेक एव तु ॥ ११८१ ॥

उच्यते सर्ववेदैश्च ....... ........

[**परमताधिकरणतात्पर्यनिरूपणम् परमात्मनो आनन्दादिगुणाः लौकिकानन्दादिभ्यो विलक्षणाः**]

.... ...... ते चाखिलविलक्षणाः ।
सर्वे सर्वगुणात्मानः सर्वकर्तार एव तु ॥ ११८२ ॥

तथापि सविशेषाश्च विद्वद्व्युत्पत्तितोऽपि च ।
तैस्तैः शब्दैश्च भण्यन्ते युज्यते चोपदेशतः ॥ ११८३ ॥

अन्यानन्दादिसादृश्यमानुकूल्यादि नापरम् ।
पूर्णत्वादि महत्तेषां वैलक्षण्यं श्रुतौ श्रुतम् ॥ ११८४ ॥

''पूर्णोऽशेषनियन्ता च सुस्वादुतम एकलः ।
गुणोरुसमुदायोऽयं वासुदेवः सुनिष्कलः'' ॥ ११८५ ॥

वासुदेवश्रुतिश्चैषा गुणान् वक्ति हरेः परान् ।

**॥ तथान्यत्त्वाधिकरणम् ॥**

**॥ ॐ तथान्यत्प्रतिषेधात् ॐ ॥ ३-२-३७ ॥**

॥ इति तथान्यत्त्वाधिकरणम् ॥ १८ ॥

**॥ सर्वगतत्वाधिकरणम् ॥**

**॥ ॐ अनेन सर्वगतत्वमायामयशब्दादिभ्यः ॐ ॥ ३-२-३८ ॥**

॥ इति सर्वगतत्वाधिकरणम् ॥ १९ ॥

## फलाधिकरणम् - २०

**।। ॐ फलमत उपपत्तेः ॐ ।। ३-२-३९ ।।**

**।। ॐ श्रुतत्वाच्च ॐ ।। ३-२-४० ।।**

**।। ॐ धर्मं जैमिनिरत एव ॐ ।। ३-२-४१ ।।**

**।। ॐ पूर्वं तु बादरायणो हेतुव्यपदेशात् ॐ ।।३-२-४२।।**

**[ईश्वरः फलकारणम्, स च लीलया धर्माधर्मौ अपेक्ष्य फलं ददाति । अतः अनुपचरितमेव तस्य स्वातन्त्र्यम्]**

स एवाशेषजीवस्थनिःसङ्ख्यानादिकालिकान् ।। ११८६ ।।

धर्माधर्मान् सदा पश्यन् स्वेच्छया बोधयत्यजः ।
कांश्चित्तेषां फलं चैव ददाति स्वयमच्युतः ।। ११८७ ।।

न ते विशेषं कमपि प्रेरणादिकमुच्यते ।
कुर्युः कदापि तेनायं स्वतन्त्रोनुपचारतः ।। ११८८ ।।

**[भगवन्माहात्म्यज्ञानार्थं कर्मस्वरूपप्रपञ्चनम्]**

कर्माणि तानि च पृथक् चेतनान्येव सर्वशः ।
अचेतनशरीराणि स्वकर्मफलभाञ्जि च ।। ११८९ ।।

प्रत्येकं तेषु चानन्तकर्माण्येवंविधानि च ।
तानि चैवमितीशस्य निःसीमा शक्तिरुत्तमा ।। ११९० ।।

एकैव ब्रह्महत्या हि वराहहरिणोदिता ।
ब्रह्मपारस्तवेनैव निष्क्रान्ता राजदेहतः ।। ११९१ ।।

स्तोत्रस्य तस्य माहात्म्याद्बाधत्वं गमिता पुनः ।
प्राप्य ज्ञानं परं चाप तथान्यान्यपि सर्वशः ।। ११९२ ।।

अनन्तान्युदितान्येवं प्रभुणा कपिलेन हि ।
संसारे पच्यमानानि कर्माण्यपि पृथक्पृथक् ।। ११९३ ।।

।। इति फलाधिकरणम् ।। २० ।।

**पादार्थोपसंहारः ]**

तस्मादनन्तमाहात्म्यगुणपूर्णो जनार्दनः ।
भक्त्या परमयाऽऽराध्य इति पादार्थ ईयते ।। ११९४ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीब्रह्मसूत्रानुव्याख्याने तृतीयाध्यायस्य द्वितीयः पादः ।।

***

## तृतीयाध्यायस्य तृतीयः पादः

**[तृतीयाध्यायगतपादक्रमे आनन्तर्यलक्षणसङ्गतिप्रदर्शनम् ]**

वैराग्यतो भक्तिदार्ढ्यं तेनोपासा यदा भवेत् ।
आपरोक्ष्यं तया विष्णोरिति पादक्रमो भवेत् ।। ११९५ ।।

**[प्रसङ्गात् प्रथमसूत्रमारभ्य अतीतानां सर्वेषामपि सूत्राणां परस्परसङ्गतिनिरूपणार्थं प्रथमसूत्रार्थानुवादः तत्र अथशब्दार्थनिरूपणम् ]**

युक्तितो ज्ञातवेदार्थो निरस्य समयान् परान् ।
परस्परविरोधं च प्रणुद्याशेषवाक्यगम् ।। ११९६ ।।

अध्यात्मप्रवणो भूत्वा तस्य सन्निहितत्वतः ।
बहुयुक्तिविरोधानां भानात्तत्सहितश्रुतेः  ॥ ११९७ ॥

विरोधं च निराकृत्य श्रुतीनां प्राणतत्वगान् ।
परिहृत्य विरोधांश्च तत्प्रसादानुरञ्जितः  ॥ ११९८ ॥

देहकर्तृत्वमीशस्य ज्ञात्वा तत्पितृतास्मृतेः ।
विशेषस्नेहमापाद्य सर्वकर्तृत्वतोऽधिकम्  ॥ ११९९ ॥

निष्पाद्य बहुमानं च तदन्यत्रातिदुःखतः ।
उत्पाद्याधिकवैराग्यं तद्गुणाधिक्यवेदनात्  ॥ १२०० ॥

सर्वस्य तद्वशत्वाच्च दार्ढ्यं भक्तेरवाप्य च ।
यतेतोपासनायैव विशिष्टाचार्यसम्पदा  ॥ १२०१ ॥

[**प्रथमसूत्रस्थातश्शब्दार्थप्रतिपादकत्वेन द्वितीयसूत्रस्य व्याख्यानम्**]

कर्तव्या ब्रह्मजिज्ञासेत्युक्ते किमिति संशये ।
अत इत्युदितेऽप्यस्य विशेषानुक्तितः पुनः  ॥ १२०२ ॥

सृष्टिबन्धनमोक्षादिकर्तृत्वस्य श्रुतत्वतः ।
यतो मोक्षादिदातासावतो जिज्ञास्य एव वः  ॥ १२०३ ॥

इत्याह तत्परं ब्रह्म व्यासाख्यं ज्ञानरश्मिमत् ।
येनैव बन्धमोक्षः स्यात् स च जिज्ञासया गतः॥ १२०४ ॥

सुप्रसन्नो भवेदीशो जिज्ञासातोऽस्य मुक्तिदा ।

[मोक्षादिदत्वं ईशस्य नेति शङ्कानिवर्तकत्वेन तृतीयसूत्रव्याख्यानम्]

मोक्षादिदत्वमीशस्य कथमेवावगम्यते ।। १२०५ ।।

इति चेच्छास्त्रयोनित्वात् शास्त्रगम्यो हि मोक्षदः ।
प्रत्यक्षावसितेभ्यः स्याद्यदि मोक्षः कथञ्चन ।। १२०६ ।।

किमित्यनादिसंसारमग्नाः सर्वा इमाः प्रजाः ।
यस्मान्नियमतो दुःखहानिः प्रत्यक्षतो भवेत् ।। १२०७ ।।

धावन्त्येव तमुद्दिश्य राजाद्यमखिलाः प्रजाः ।
अनुमागम्यतो मोक्षो यदि स्यादनुमैव हि ।। १२०८ ।।

दृष्टपूरुषवन्मोक्षदातृतां विनिवारयेत् ।
तच्छास्त्रगम्य एवैको मोक्षदो भवति ध्रुवम् ।। १२०९ ।।

[मोक्षदत्वेन शास्त्रगम्यः स्वतन्त्रो भगवानेवेति समन्वयसूत्रार्थनिरूपणम्]

शास्त्रगम्यश्च नान्योऽस्ति मोक्षदत्वेन केशवात् ।
मोक्षदो हि स्वतन्त्रः स्यात् परतन्त्रः स्वयं सृतौ ।। १२१० ।।

वर्तमानः कथं शक्तः परमोक्षाय केवलम् ।
अन्याश्रयेण यद्येष दद्यान्मोक्षं स एव हि ।। १२११ ।।

तेन नानुसृतो मोक्षं न दद्यादन्यवाक्यतः ।
अतस्तदर्थमपि स ज्ञेयो विष्णुर्मुमुक्षुभिः ।। १२१२ ।।

[**'यमेवैष' इत्यादिश्रुतीनां सम्यक् अन्वयात् इति प्रकारान्तरेण हेतुनिरूपणम्**]

''यमेवैष'' इति श्रुत्या ''तमेवे''ति च सादरम् ।
शास्त्रयोनित्वमस्यैव ज्ञायते वेदवादिभिः ॥ १२१३ ॥

''य एनं विदुरमृता'' इत्युक्तस्तु समुद्रगः ।
''तदेव ब्रह्म परमम्'' इति श्रुत्यावधारितः ॥ १२१४ ॥

''यतः प्रसूते''ति ततः सृष्टिमाह ततो हरिः ।

[**विष्णोरितरस्य शास्त्रयोनित्वनिरासकत्वेन अन्वयः उपपत्त्यादिलिङ्गमिति सौत्रहेतुव्याख्यानम्**]

शास्त्रयोनिर्न चान्योऽस्ति मुख्यतस्त्विति गम्यते ॥ १२१५ ॥

शास्त्रयोनित्वमेतस्य ज्ञायते हि समन्वयात् ।

[**ईक्षत्यधिकरणसङ्गतिप्रापकतया संशब्दार्थनिरूपणम्**]

समिति ह्युपसर्गेण परमुख्यार्थतोच्यते ॥ १२१६ ॥

एवं परममुख्यार्थो नारायण इति श्रुतेः ।
निर्धारणाय ''नाशब्दम्'' इति वेदपतिर्जगौ ॥ १२१७ ॥

[**'गतिसामान्यात्' इति सूत्रस्य सङ्गतिप्रदर्शनपूर्वकं व्याख्यानम्**]

कथं समन्वयो ज्ञेयः स्वल्पशाखाविदां नृणाम् ।
''वेदा ह्यनन्ता'' इति हि श्रुतिराहाप्यनन्तताम् ॥ १२१८ ॥

अनन्तवेदनिर्णीतिर्महाप्रलयवारिधेः ।
उत्तारणोपमेत्यस्मान्न ज्ञेयोऽत्र समन्वयः ॥ १२१९ ॥

इत्याशङ्कापनोदार्थं स आह करुणाकरः ।
अशक्योत्तारणत्वेऽपि ह्यागमापारवारिधेः ॥ १२२० ॥

निर्णीयते मयैवायं रोमकूपलयोदिना ।
यद्यप्यशेषवेदार्थो दुर्गमोऽखिलमानवैः ॥ १२२१ ॥

मज्ज्ञानाव्याकृताकाशे प्राप्नोति परमाणुताम् ।
इति प्रकाशयन् विश्वपतिराह प्रमेयताम् ॥ १२२२ ॥

निखिलस्यापि वेदस्य गतिसामान्यमञ्जसा ।
को नाम गतिसामान्यमनन्तागमसम्पदः ॥ १२२३ ॥

ज्ञानसूर्यमृते ब्रूयात्तमेकं बादरायणम् ।
अन्योऽप्यल्पमतिः शाखाचतुष्पञ्चगतं वसु ॥ १२२४ ॥

जानन्ननुमितत्वेन ब्रूयात्तस्य प्रसादतः ।
इति मुख्यतयाशेषगतिसामान्यवित्प्रभुः ॥ १२२५ ॥

प्रतिजज्ञे दृढं यस्माद्देवानामपि पूर्यते ।

**[अध्यायशेषेण अस्याः पञ्चाधिकरण्या एव प्रपञ्चनम्]**

अतो निखिलवेदानां सिद्ध एव समन्वयः ॥ १२२६ ॥

इति सुज्ञापितार्थोऽपि पृथक् चाह समन्वयम् ।

**[प्रथमपादे अन्यत्रप्रसिद्धनामात्मकशब्दसमन्वयः इत्यादिसमन्वयक्रमस्य तद्बीजस्य च निरूपणम्]**

तत्र प्रथमतोऽन्यत्र प्रसिद्धानां समन्वयः ॥ १२२७ ॥

शब्दानां वाच्य एवात्र महामल्लेशभङ्गवत् ।
इतोऽप्यभ्यधिकत्वेऽपि तुर्यपादोदितस्य तु ॥ १२२८ ॥

महासमन्वये तस्मिन्नाधिकारोऽखिलस्य हि ।
ब्रह्मैवाधिकृतस्तत्र मुख्यतोऽन्ये यथाक्रमम् ॥ १२२९ ॥

दुर्गमत्वाच्च नैवात्र प्राथम्येनोदितोऽञ्जसा ।
अतोऽन्यत्र प्रसिद्धानां शब्दानां निर्णयाय तु ॥ १२३० ॥

प्रवृत्तः प्रथमं देवः ...... ........

**[आनन्दमयाद्यधिकरणेषु समन्वयक्रमस्य बीजप्रदर्शनम्]**

....... ...... तत्रानन्दादयो गुणाः ।
ईशस्यैवेति निर्णीताः श्रुतियुक्तिसमाश्रयात् ॥ १२३१ ॥

देवतान्तरगाः सर्वे शब्दवृत्तिनिमित्ततः ।
विष्णुमेव वदन्त्यद्धा तत्सङ्गादुपचारतः ॥ १२३२ ॥

अन्यदेवान् वदन्तीह विशेषगुणवक्तृतः ।
विष्णुमेव परं ब्रूयुरेवमन्येऽप्यशेषतः ॥ १२३३ ॥

**[प्रथमपादे नामात्मकशब्दसमन्वयानन्तरं द्वितीयपादे लिङ्गात्मकशब्दसमन्वयस्य बीजप्रदर्शनम्]**

इत्यन्यत्र प्रसिद्धोरुशब्दराशेरशेषतः ।
ज्ञाते समन्वये विष्णौ लिङ्गैर्ह्येष समन्वयः ॥ १२३४ ॥

तेषामन्यगतत्वे तु न स्यात् सम्यक् समन्वयः ।
इत्येवाशेषलिङ्गानां ब्रह्मण्येन समन्वयम् ॥ १२३५ ॥

आह ...... ....... ........

[तृतीयपादे उभयात्मकशब्दसमन्वयस्य बीजप्रदर्शनम्]

.... उभयगतत्वं च स्यादतो लिङ्गशब्दयोः ।
इति संशयनुत्त्यर्थमुभयत्र प्रतीतितः ।। १२३६ ।।

शब्दानां वर्तमानानां सलिङ्गानां विशेषतः ।
समन्वयो हरावेव यन्नैवान्यत्र मुख्यतः ।। १२३७ ।।

शब्दा लिङ्गानि च यतो नैवान्यत्र स्वतन्त्रता ।
अस्वतन्त्रेषु शब्दस्य वृत्तिहेतुर्न मुख्यतः ।। १२३८ ।।

यतोऽतो यदधीनास्ते शब्दार्थत्वमुपागताः ।
अत्यल्पेनैव शब्दस्य वृत्तिहेतुगुणेन तु ।। १२३९ ।।

अयो यथा दाहकत्वं स एवेशः स्वतन्त्रतः ।
मुख्यशब्दार्थ इति हि स्वीकर्तव्यो मनीषिभिः ।। १२४० ।।

इत्याह .... .... ...... .......

[चतुर्थपादे दुःखिबद्धावराद्यन्यत्रैवप्रसिद्धशब्दसमन्वयः दुःखित्वादीनां हरौ दूषणत्वाभावः]

..... एवं च शब्दानां नारायणसमन्वये ।
सिद्धेऽप्यशेषशब्दानां न कथञ्चन युज्यते ।। १२४१ ।।

विरोधादवरत्वादेरपि प्राप्तिर्यतो भवेत् ।
इति चेदवरत्वादि द्विविधं ह्युपलभ्यते ।। १२४२ ।।

परस्यावरताहेतुर्यः स्वयं पर एव सन् ।
सोऽपि ह्यवरशब्दार्थो यथा राजा जयी भवेत् ॥ १२४३ ॥

अन्योऽवरत्वानुभवी तयोः पूर्वोऽस्ति केशवे ।
द्वितीयो जीव एवास्ति स्वातन्त्र्यान्नैव दूषणम् ॥ १२४४ ॥

हरेः ....... ....... .........

[प्रथमाध्यायार्थानुवादपूर्वकं द्वितीयाध्यायसङ्गतिप्रदर्शनम्]

.... एवमशेषेण सर्वशब्दसमन्वये ।
उक्ते विरोधहीनस्य स्यात्समन्वयता यतः ॥ १२४५ ॥

अतोऽशेषविरोधानां कृतेशेन निराकृतिः ।

[तृतीयाध्यायसङ्गतिः]

समन्वयाविरोधाभ्यां सञ्जाते वस्तुनिर्णये ॥ १२४६ ॥

किं मया कार्यमित्येव स्याद्बुद्धिरधिकारिणः ।

[तृतीयाध्यायगतपादत्रयसङ्गतिः]

तत्र भक्तिविधानार्थमभक्तानर्थसन्ततौ ॥ १२४७ ॥

उक्तायां भक्तिदार्ढ्याय प्रोक्तेऽशेषगुणोच्चये ।
वक्तव्योपासना नित्यं कर्तव्येत्यादरेण हि ॥ १२४८ ॥

[उपासनायाः द्वैविध्यम्]

सोपासना च द्विविधा शास्त्राभ्यासस्वरूपिणी ।
ध्यानरूपा परा चैव तदङ्गं धारणादिकम् ॥ १२४९ ॥

तथोभयात्मकं चैव पादेऽस्मिन् बादरायणः ।
आहोपासनमद्धैव विस्तरात् श्रुतिपूर्वकम् ॥ १२५० ॥

[एतत्पादीयाधिकरणेषु पूर्वपक्षयुक्तयः]

पृथग्दृष्टिरशक्यत्वमनिर्णीतिः समुच्चयः ।
विशेषदर्शनं कार्यलोपो नानोक्तिराशुता ॥ १२५१ ॥

विभ्रमोपाकृतिर्लिङ्गमनवस्थाविशेषिता ।
अप्रयोजनता चातिप्रसङ्गोऽदूरसंश्रयः ॥ १२५२ ॥

विशिष्टकारणं चेष्टा दृष्टवैरूप्यमुन्नतिः ।
अनुक्तिरप्रयत्नत्वं दृढबन्धपराभवौ ॥ १२५३ ॥

पुंसाम्यं प्राप्तसन्त्यागः कारणानिर्णयो भ्रमः ।
विशेषदर्शितालापौ गुणासाम्यं पृथग्दृशिः ॥ १२५४ ॥

अगम्यवर्त्म सन्धानमिष्टं फलमकल्पना ।
शुद्धवैरूप्यमङ्गत्वमविशेषदृशिः क्रिया ॥ १२५५ ॥

युक्तयः पूर्वपक्षस्थाः ...... ......

[एतत्पादीयाधिकरणेषु सिद्धान्तयुक्तयः]

..... ..... सुज्ञेयत्वं विधिक्रिया ।
माहात्म्यमल्पशक्तित्वं यथायोग्यफलं भवः ॥ १२५६ ॥

फलसाम्यं विशेषश्च गुणाधिक्यं प्रधानता ।
यथाशक्तिक्रिया सन्धिः प्रमाणबलमानतिः ॥ १२५७ ॥

कारणं कार्यवैशेष्यं स्वभावो वस्तुदूषणम् ।
प्रतिक्रियाविरोधश्च प्रतिसन्धिरनूनता   ।। १२५८ ।।

संस्कारपाटवं स्वेच्छानियतिर्वस्तुवैभवम् ।
विशेषोक्तिरमानत्वं प्राधान्यं प्रीतिरागमः   ।। १२५९ ।।

सुस्थिरत्वं कृतप्राप्तिरनादिगुणविस्तरः ।
साधनोत्तमता नानादृष्टिः शिष्टिरनूनता   ।। १२६० ।।

अविघ्नत्वाविरोधौ च गुणवैशेष्यमागमः ।
सिद्धान्तनिर्णया ह्येता युक्तयो व्याहृताः सदा   ।। १२६१ ।।

**सर्ववेदाधिकरणम् - १**

**।। ॐ सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात् ॐ ।।३-३-१।।**

**।। ॐ भेदान्नेति चेदेकस्यामपि ॐ ।। ३-३-२ ।।**

[**यथाशक्तिवेदज्ञानमेव उपासनाङ्गम्**]

यथाशक्त्यखिलान् वेदान् विज्ञायोपासनं भवेत् ।
तत्राखिलस्य विज्ञप्तिः सम्यग्ब्रह्मण एव हि   ।। १२६२ ।।

तदन्येषां यथायोगमखिलज्ञाप्तिरिष्यते ।
तावतोपासने योग्यो भवेदेवाखिलः पुमान्   ।। १२६३ ।।

महत्त्वस्य परं पारं विदित्वैव जनार्दनः ।
स्तोष्यतामेति तुष्टत्वमिति नास्त्येव नारद   ।। १२६४ ।।

किन्तु निश्चलया भक्त्या ह्यात्मज्ञानानुरूपतः ।
यः स्तोष्यति सदा भक्तस्तुष्टस्तस्य सदा हरिः ॥ १२६५ ॥

इत्यादिवाक्यसन्दर्भाद्यथायोग्याखिलज्ञता ।
आत्मज्ञानानुरूपत्वं यथाशक्ति विचारणात् ॥ १२६६ ॥

**॥ ॐ स्वाध्यायस्य तथात्वेन हि समाचारेऽधिकाराच्च ॐ ॥ ३-३-३ ॥**

**॥ ॐ सलिलवच्च तन्नियमः ॐ ॥ ३-३-४ ॥**

**॥ ॐ दर्शयति च ॐ ॥ ३-३-५ ॥**

[**स्वाध्यायस्य तथात्वेनेत्यादिसूत्रतात्पर्यनिरूणम्**]

वेदः कृत्स्नोऽधिगन्तव्यः स्वाध्यायाध्ययनं भवेत् ।
इत्यादिवाक्यवैयर्थ्यमन्यथा न निवार्यते ॥ १२६७ ॥

अद्यापि तेन देवाद्याः शृण्वते मन्वते सदा ।
ध्यायन्ति च यथायोगं ...... ......

[**परब्रह्मणः यथार्थनिश्चयपर्यन्तं श्रवणाद्यनुष्ठेयम्, शिष्ययोग्यताभिज्ञो गुरुः श्रवणादिकालमुपदिशति**]

...... ........ तथाप्यावस्तुनिर्णयात् ॥ १२६८ ॥

श्रवणं मननं चैव कर्तव्यं सर्वदैव हि ।
मतिश्रुतिध्यानकालविशेषं गुरुरुत्तमः ॥ १२६९ ॥

वेत्ति तस्योक्तमार्गेण कुर्वतः स्याद्धि दर्शनम् ।

**[अदृष्टतत्त्वस्य श्रवणादीनि ज्ञानार्थानि, दृष्टतत्त्वस्य विशेषानन्दार्थानि]**

श्रवणं दृष्टतत्त्वस्य मननं ध्यानमेव च ॥ १२७० ॥

विशेषानन्दसम्प्राप्त्या अन्यस्यैतानि दृष्टये ।

**[मुख्यगुरुलाभपर्यन्तं अमुख्यगुरोः श्रवणादिकार्यं, तस्याप्यलाभे विष्णुभक्तेभ्यः महद्भ्यः शृणुयात्, स्वयमेव वा समभ्यसेत्, श्रवणादिकं विना नैव तिष्ठेत्]**

यदि तादृग्गुरुर्नास्ति निर्णीतश्रवणादिकम् ॥ १२७१ ॥

सत्सिद्धान्तानुसारेण निर्णयज्ञात्समाचरेत् ।
श्रवणादि विना नैव क्षणं तिष्ठेदपि क्वचित् ॥ १२७२ ॥

अत्यशक्ये तु निद्रादौ पुनरेव समाचरेत् ।
अभावे निर्णयज्ञस्य सच्छास्त्राण्येव सर्वदा ॥ १२७३ ॥

शृणुयाद्यदि सज्ज्ञानप्राचुर्यमुपलभ्यते ।
महद्भ्यो विष्णुभक्तेभ्यो यथाशक्ति च संशयान् ॥ १२७४ ॥

छिन्द्यात्स्वतोऽधिकाभावे स्वयमेव समभ्यसेत् ।
ब्रूयादपि च शिष्येभ्यः सत्सिद्धान्तमहापयन् ॥ १२७५ ॥

**[सत्सिद्धान्तनिरूपणम् वाचनिकः परः सत्सिद्धान्तः]**

अशेषगुणपूर्णत्वं सर्वदोषसमुज्झितिः ।
विष्णोरन्यच्च तत्तन्त्रमिति सम्यग्विनिर्णयः ॥ १२७६ ॥

[आनुषङ्गिकः परः सत्सिद्धान्तः]

स्वतन्त्रत्वं सदा तस्य तस्य भेदश्च सर्वतः ।
अदोषत्वस्य सिद्ध्यर्थं यदभेदे तदन्वयः ॥ १२७७ ॥

तत्तन्त्रत्वं च मुक्तानामपि तद्गुणपूर्तये ।
मुक्तानामपि भेदश्च न हि भिन्नमभिन्नताम् ॥ १२७८ ॥

गच्छद्दृष्टं क्वचित्तस्याप्यभावोऽनुभवोपगः ।
पूर्वाभेदे दोषवत्त्वमीशस्येत्यतिभिन्नता ॥ १२७९ ॥

नारायणेन मुक्तानामपि सम्यगिति स्थितिः ।
भेदाभेदेऽप्यभेदेन दोषाणामपि सम्भवः ॥ १२८० ॥

[अपरः सत्सिद्धान्तः]

निर्दोषत्वं रमायाश्च तदनन्तरता तथा ।
ब्रह्मा सरस्वती वीन्द्रशेषरुद्राश्च तत्स्त्रियः ॥ १२८१ ॥

शक्रकामौ तदन्ये च क्रमात् मुक्तावपीति च ।
सत्सिद्धान्त इति ज्ञेयो निर्णीतो हरिणा स्वयम् ॥१२८२॥

[एतद्विरोधिज्ञानं अन्धाय तमसे भवति]

एतद्विरोधि यत्सर्वं तमसेऽन्धाय केवलम् ।
अन्धन्तमो विशन्तीति प्राह श्रुतिरतिस्फुटम् ॥ १२८३ ॥

[उक्तसत्सिद्धान्तस्य श्रुतिस्मृतियुक्तिरमादिप्रत्यक्षसिद्धत्वम्]

इत्येव श्रुतयोऽशेषाः पञ्चरात्रमथाखिलम् ।
मूलरामायणं चैव भारतं स्मृतयोऽखिलाः ॥ १२८४ ॥

वैष्णवानि पुराणानि साङ्ख्ययोगौ परावपि ।
ब्रह्मतर्कश्च मीमांसेत्यनन्तः शब्दसागरः  ।। १२८५ ।।

अनन्ता युक्तयश्चैव प्रत्यक्षागममूलकाः ।
प्रत्यक्षमैश्वरं चैव रमादीनामशेषतः  ।। १२८६ ।।

मुक्तानामप्यमुक्तानामेतमेवार्थमुत्तमम् ।
अन्यावकाशरहितं प्रकाशयति सादरम्  ।। १२८७ ।।

**[सच्छास्त्राण्येव सर्वदा शृणुयात्]**

एतदेव च सच्छास्त्रं दुःशास्त्रं तु ततः परम् ।
सच्छास्त्रमभ्यसेन्नित्यं दुःशास्त्रं तु परित्यजेत्  ।। १२८८ ।।

असंशयेन तत्त्वस्य निर्णये ब्रह्मदर्शनम् ।

**[सम्यग्ज्ञानाधिक्यात् सुखाधिक्यं,
विषमज्ञानाधिक्यात् दुःखाधिक्यम्]**

सम्यग्विषमविज्ञानतारतम्यानुसारतः  ।। १२८९ ।।

फलं भवेत्तारतम्यात्सुखदुःखात्मकं नृणाम् ।
सम्यक् चाधिकविज्ञानात् सुखाधिक्यं भवेन्नृणाम् ।। १२९० ।।

**[अधिकरणार्थोपसंहारः]**

अतो यथात्मशक्त्यैव श्रवणं मननं तथा ।

।। इति सर्ववेदाधिकरणम् ।। १ ।।

उपसंहाराधिकरणम् - २

**।। ॐ उपसंहारोऽर्थाभेदाद्विधिशेषवत्समाने च ॐ ।। ३-३-६ ।।**

**।। ॐ अन्यथात्वं च शब्दादिति चेन्नाविशेषात् ॐ ।। ३-३-७ ।।**

**।। ॐ न वा प्रकरणभेदात्परोवरीयस्त्वादिवत् ॐ ।। ३-३-८ ।।**

**।। ॐ सञ्ज्ञातश्चेत्तदुक्तमस्ति तु तदपि ॐ ।। ३-३-९ ।।**

[सर्ववेदोक्तान् गुणान् दोषाभावांश्च यथात्मशक्ति उपसंहृत्यैव परमात्मा उपास्यः]

कृत्वाथ कुर्वन्नपि वा निदिध्यासनमाचरेत् ।। १२९१ ।।

।। इत्युपसंहाराधिकरणम् ।। २ ।।

प्राप्त्यधिकरणम् - ३

**।। ॐ प्राप्तेश्च समञ्जसम् ॐ ।। ३-३-१० ।।**

।। इति प्राप्त्यधिकरणम् ।। ३ ।।

सर्वाभेदाधिकरणम् - ४

**।। ॐ सर्वाभेदादन्यत्रेमे ॐ ।। ३-३-११ ।।**

।। इति सर्वाभेदाधिकरणम् ।। ४ ।।

आनन्दाधिकरणम् - ५

**।। ॐ आनन्दादयः प्रधानस्य ॐ ।। ३-३-१२ ।।**

।। इति आनन्दाधिकरणम् ।। ५ ।।

प्रियशिरस्त्वाधिकरणम् - ६

**।। ॐ प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे ॐ ।। ३-३-१३ ।।**

।। इति प्रियशिरस्त्वाधिकरणम् ।। ६ ।।

इतराधिकरणम् - ७

**।। ॐ इतरे त्वर्थसामान्यात् ॐ ।। ३-३-१४ ।।**

।। इति इतराधिकरणम् ।। ७ ।।

आध्यानाधिकरणम् - ८

**।। ॐ आध्यानाय प्रयोजनाभावात् ॐ ।। ३-३-१५ ।।**

**।। ॐ आत्मशब्दाच्च ॐ ।। ३-३-१६ ।।**

।। इति आध्यानाधिकरणम् ।। ८ ।।

आत्मगृहीत्यधिकरणम् - ९

**।। ॐ आत्मगृहीतिरितरवदुत्तरात् ॐ ।। ३-३-१७ ।।**

।। इति आत्मगृहीत्यधिकरणम् ।। ९ ।।

उपसंहाराधिकरणम् - २

**।। ॐ उपसंहारोऽर्थाभेदाद्विधिशेषवत्समाने च ॐ ।। ३-३-६ ।।**

**।। ॐ अन्यथात्वं च शब्दादिति चेन्नाविशेषात् ॐ ।। ३-३-७ ।।**

**।। ॐ न वा प्रकरणभेदात्परोवरीयस्त्वादिवत् ॐ ।। ३-३-८ ।।**

**।। ॐ सञ्ज्ञातश्चेत्तदुक्तमस्ति तु तदपि ॐ ।। ३-३-९ ।।**

[सर्ववेदोक्तान् गुणान् दोषाभावांश्च यथात्मशक्ति उपसंहृत्यैव परमात्मा उपास्यः]

कृत्वाथ कुर्वन्नपि वा निदिध्यासनमाचरेत् ।। १२९१ ।।

।। इत्युपसंहाराधिकरणम् ।। २ ।।

प्राप्त्यधिकरणम् - ३

**।। ॐ प्राप्तेश्च समञ्जसम् ॐ ।। ३-३-१० ।।**

।। इति प्राप्त्यधिकरणम् ।। ३ ।।

सर्वाभेदाधिकरणम् - ४

**।। ॐ सर्वाभेदादन्यत्रेमे ॐ ।। ३-३-११ ।।**

।। इति सर्वाभेदाधिकरणम् ।। ४ ।।

## आनन्दाधिकरणम् - ५

**।। ॐ आनन्दादयः प्रधानस्य ॐ ।। ३-३-१२ ।।**

।। इति आनन्दाधिकरणम् ।। ५ ।।

## प्रियशिरस्त्वाधिकरणम् - ६

**।। ॐ प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे ॐ ।। ३-३-१३ ।।**

।। इति प्रियशिरस्त्वाधिकरणम् ।। ६ ।।

## इतराधिकरणम् - ७

**।। ॐ इतरे त्वर्थसामान्यात् ॐ ।। ३-३-१४ ।।**

।। इति इतराधिकरणम् ।। ७ ।।

## आध्यानाधिकरणम् - ८

**।। ॐ आध्यानाय प्रयोजनाभावात् ॐ ।। ३-३-१५ ।।**

**।। ॐ आत्मशब्दाच्च ॐ ।। ३-३-१६ ।।**

।। इति आध्यानाधिकरणम् ।। ८ ।।

## आत्मगृहीत्यधिकरणम् - ९

**।। ॐ आत्मगृहीतिरितरवदुत्तरात् ॐ ।। ३-३-१७ ।।**

।। इति आत्मगृहीत्यधिकरणम् ।। ९ ।।

## अन्वयाधिकरणम् - १०

**।। ॐ अन्वयादिति चेत् स्यादवधारणात् ॐ ।।३-३-१८।।**

।। इति अन्वयाधिकरणम् ।। १० ।।

## कार्याधिकरणम् - ११

**।। ॐ कार्याख्यानादपूर्वम् ॐ ।। ३-३-१९ ।।**

।। इति कार्याधिकरणम् ।। ११ ।।

## समानाधिकरणम् - १२

**।। ॐ समान एवं चाभेदात् ॐ ।। ३-३-२० ।।**

**।। ॐ सम्बन्धादेवमन्यत्रापि ॐ ।। ३-३-२१ ।।**

।। इति समानाधिकरणम् ।। १२ ।।

## नवाधिकरणम् - १३

**।। ॐ न वा विशेषात् ॐ ।। ३-३-२२ ।।**

**।। ॐ दर्शयति च ॐ ।। ३-३-२३ ।।**

।। इति नवाधिकरणम् ।। १३ ।।

## सम्भृत्यधिकरणम् - १४

**।। ॐ सम्भृतिद्युव्याप्त्यपि चातः ॐ ।। ३-३-२४ ।।**

।। इति सम्भृत्यधिकरणम् ।। १४ ।।

## पुरुषाधिकरणम् - १५

**।। ॐ पुरुषविद्यायामपि चेतरेषामनाम्नानात् ॐ ।। ३-३-२५ ।।**

।। इति पुरुषाधिकरणम् ।। १५ ।।

## वेधाधिकरणम् - १६

**।। ॐ वेधाद्यर्थभेदात् ॐ ।। ३-३-२६ ।।**

।। इति वेधाधिकरणम् ।। १६ ।।

## हान्यधिकरणम् - १७

**।। ॐ हानौ तूपायनशब्दशेषत्वात्कुशाच्छन्दस्तुत्युपगानवत्तदुक्तम् ॐ ।। ३-३-२७ ।।**

**।। ॐ साम्पराये तर्तव्याभावात्तथा ह्यन्ये ॐ ।।३-३-२८।।**

।। इति हान्यधिकरणम् ।। १७ ।।

## छन्दाधिकरणम् - १८

**।। ॐ छन्दत उभयाविरोधात् ॐ ।। ३-३-२९ ।।**

**।। ॐ गतेरर्थवत्त्वमुभयथान्यथा हि विरोधः ॐ ।। ३-३-३० ।।**

**।। ॐ उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत् ॐ ।।३-३-३१।।**

।। इति छन्दाधिकरणम् ।। १८ ।।

अनियमाधिकरणम् - १९

॥ ॐ अनियमः सर्वेषामविरोधाच्छब्दानुमानाभ्याम् ॐ ॥ ३-३-३२ ॥

॥ इति अनियमाधिकरणम् ॥ १९ ॥

यावदधिकरणम् - २०

॥ ॐ यावदधिकारमवस्थितिराधिकारिकाणाम् ॐ ॥ ३-३-३३ ॥

॥ ॐ अक्षरधियां त्वविरोधः सामान्यतद्भावाभ्यामौपसदवत्तदुक्तम् ॐ ॥ ३-३-३४ ॥

॥ इति यावदधिकरणम् ॥ २० ॥

इयदामननाधिकरणम् - २१

॥ ॐ इयदामननात् ॐ ॥ ३-३-३५ ॥

॥ ॐ अन्तरा भूतग्रामवदिति चेत्तदुक्तम् ॐ ॥३-३-३६॥

॥ ॐ अन्यथा भेदानुपपत्तिरिति चेन्नोपदेशवत् ॐ ॥ ३-३-३७ ॥

॥ इति इयदामननाधिकरणम् ॥ २१ ॥

व्यतिहाराधिकरणम् - २२

॥ ॐ व्यतिहारो विशिंषन्ति हीतरवत् ॐ ॥ ३-३-३८ ॥

॥ इति व्यतिहाराधिकरणम् ॥ २२ ॥

## सत्याधिकरणम् - २३

**।। ॐ सैव हि सत्यादयः ॐ ।। ३-३-३९ ।।**

।। इति सत्याधिकरणम् ।। २३ ।।

## कामाधिकरणम् - २४

**।। ॐ कामादितरत्र तत्र चायतनादिभ्यः ॐ ।।३-३-४०।।**

**।। ॐ आदरादलोपः ॐ ।। ३-३-४१ ।।**

**।। ॐ उपस्थितेस्तद्वचनात् ॐ ।। ३-३-४२ ।।**

।। इति कामाधिकरणम् ।। २४ ।।

## निर्धारणाधिकरणम् - २५

**।। ॐ तन्निर्धारणार्थनियमस्तद्दृष्टेः पृथग्ध्यप्रतिबन्धः फलम् ॐ ।। ३-३-४३ ।।**

।। इति निर्धारणाधिकरणम् ।। २५ ।।

## प्रदानाधिकरणम् - २६

**।। ॐ प्रदानवदेव हि तदुक्तम् ॐ ।। ३-३-४४ ।।**

।। इति प्रदानाधिकरणम् ।। २६ ।।

## लिङ्गभूयस्त्वाधिकरणम् - २७

**।। ॐ लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि ॐ ।।३-३-४५।।**

।। इति लिङ्गभूयस्त्वाधिकरणम् ।। २७ ।।

### पूर्वविकल्पाधिकरणम् - २८

**॥ ॐ पूर्वविकल्पः प्रकरणात्स्यात् क्रियामानसवत् ॐ ॥ ३-३-४६ ॥**

**॥ ॐ अतिदेशाच्च ॐ ॥ ३-३-४७ ॥**

॥ इति पूर्वविकल्पाधिकरणम् ॥ २८ ॥

### विद्याधिकरणम् - २९

**॥ ॐ विद्यैव तु निर्धारणात् ॐ ॥ ३-३-४८ ॥**

**॥ ॐ दर्शनाच्च ॐ ॥ ३-३-४९ ॥**

॥ इति विद्याधिकरणम् ॥ २९ ॥

### श्रुत्यधिकरणम् - ३०

**॥ ॐ श्रुत्यादिबलीयस्त्वाच्च न बाधः ॐ ॥ ३-३-५० ॥**

॥ इति श्रुत्यधिकरणम् ॥ ३० ॥

### अनुबन्धाधिकरणम् - ३१

**॥ ॐ अनुबन्धादिभ्यः ॐ ॥ ३-३-५१ ॥**

॥ इति अनुवन्धाधिकरणम् ॥ ३१ ॥

### प्रज्ञान्तराधिकरणम् - ३२

**॥ ॐ प्रज्ञान्तरपृथक्त्ववद्दृष्टिश्च तदुक्तम् ॐ ॥३-३-५२॥**

॥ इति प्रज्ञान्तराधिकरणम् ॥ ३२ ॥

## न सामान्याधिकरणम् - ३३

**।। ॐ न सामान्यादप्युपलब्धेर्मृत्युवन्न हि लोकापत्तिः ॐ ।। ३-३-५३ ।।**

।। इति न सामान्याधिकरणम् ।। ३३ ।।

## परेणाधिकरणम् - ३४

**।। ॐ परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः ॐ ।। ३-३-५४ ।।**

।। इति परेणाधिकरणम् ।। ३४ ।।

## एकाधिकरणम् - ३५

**।। ॐ एक आत्मनः शरीरे भावात् ॐ ।। ३-३-५५ ।।**

**।। ॐ व्यतिरेकस्तद्भावभावित्वान्न तूपलब्धिवत् ॐ ।। ३-३-५६ ।।**

।। इति एकाधिकरणम् ।। ३५ ।।

## अङ्गावबद्धाधिकरणम् - ३६

**।। ॐ अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम् ॐ ।। ३-३-५७ ।।**

**।। ॐ मन्त्रादिवद्वाऽविरोधः ॐ ।। ३-३-५८ ।।**

।। इति अङ्गावबद्धाधिकरणम् ।। ३६ ।।

भूमाधिकरणम् - ३७

**।। ॐ भूम्नः क्रतुवज्ज्यायस्त्वं तथा च दर्शयति ॐ ।। ३-३-५९ ।।**

।। इति भूमाधिकरणम् ।। ३७ ।।

नानाशब्दाधिकरणम् - ३८

**।। ॐ नाना शब्दादिभेदात् ॐ ।। ३-३-६० ।।**

।। इति नानाशब्दाधिकरणम् ।। ३८ ।।

विकल्पाधिकरणम् - ३९

**।। ॐ विकल्पो विशिष्टफलत्वात् ॐ ।। ३-३-६१ ।।**

।। इति विकल्पाधिकरणम् ।। ३९ ।।

काम्याधिकरणम् - ४०

**।। ॐ काम्यास्तु यथाकामं समुच्चीयेरन्न वा पूर्वहेत्वभावात् ॐ ।। ३-३-६२ ।।**

।। इति काम्याधिकरणम् ।। ४० ।।

अङ्गाधिकरणम् - ४१

**।। ॐ अङ्गेषु यथाश्रयभावः ॐ ।। ३-३-६३ ।।**

**।। ॐ शिष्टेश्च ॐ ।। ३-३-६४ ।।**

**।। ॐ समाहारात् ॐ ।। ३-३-६५ ।।**

**।। ॐ गुणसाधारण्यश्रुतेश्च ॐ ।। ३-३-६६ ।।**

।। इति अङ्गाधिकरणम् ।। ४१ ।।

**नवाधिकरणम् - ४२**

**।। ॐ न वाऽतत्सहभावश्रुतेः ॐ ।। ३-३-६७ ।।**

**।। ॐ दर्शनाच्च ॐ ।। ३-३-६८ ।।**

।। इति नवाधिकरणम् ।। ४२ ।।

[**यमनियमाद्यनुष्ठानं उपासनाद्वारा भगवद्दर्शनाङ्गम्**]

विषयेषु च संसर्गात् शाश्वतस्य च संशयात् ।
मनसा चान्यदाकाङ्क्षात्परं न प्रतिपद्यते ।। १२९२ ।।

इति भारतवाक्यं हि तेनैतद्दोषवर्जितः ।
सदोपासनया युक्तो वासुदेवं प्रपश्यति ।। १२९३ ।।

[**सर्वजीवेषु मोक्षप्रतिबन्धकदोषाणामवर्जनीयत्वात् तद्व्यावृत्त्यर्थं यमाद्यनुष्ठानम्**]

दोषा अनादिसम्बद्धास्ते मुक्तिपरिपन्थिनः ।
सन्त्येव प्रायशः पुंस्सु तेन मोक्षो न जायते ।। १२९४ ।।

सर्वे त एते जीवेषु दृश्यन्ते तारतम्यतः ।

[**ऋजूनामपि मोक्षार्थं परमोत्साहवर्जनरूपदोषोऽस्ति**]

ऋजूनामेक एवास्ति परमोत्साहवर्जनम् ।। १२९५ ।।

स गुणाल्पत्वमात्रत्वान्नर्जुत्वेन विरुध्यते ।

[परमात्मनि निरतिशया भक्तिः कार्या,
स्वोत्तमेषु तारतम्यानुसारेण भक्तिः कार्या]

अतो विष्णौ परा भक्तिस्तद्भक्तेषु रमादिषु ॥ १२९६ ॥

तारतम्येन कर्तव्या पुरुषार्थमभीप्सता ।
स्वादरः सर्वजन्तूनां संसिद्धो हि स्वभावतः ॥ १२९७ ॥

ततोऽधिकः स्वोत्तमेषु तदाधिक्यानुसारतः ।
कर्तव्यो वासुदेवान्तं सर्वथा शुभमिच्छता ॥ १२९८ ॥

न कदाचित्त्यजेत्तं च क्रमेणैनं विवर्धयेत् ।

[स्वसमेषु स्नेहः स्वाधमेषु दया कार्या]

समेषु स्वात्मवत् स्नेहः सत्स्वन्यत्र ततो दया ॥ १२९९ ॥

कार्यैवमापरोक्ष्येण दृश्यते क्षिप्रमीश्वरः ।

[रमाब्रह्मशिवादीनां विष्णोराधिक्यदृष्ट्यादिविपरीतज्ञानस्य अनर्थनिरूपणम्]

तत्तमोऽन्धं व्रजेद्विष्णुसमत्वं योऽनुपश्यति ॥ १३०० ॥

रमाब्रह्मशिवादीनामपि मुक्तौ कथञ्चन ।
किमुताधिक्यदृष्टेस्तद्गुणाभावमतेरपि ॥ १३०१ ॥

दोषवेत्तुरभेदस्य द्रष्टुर्द्रष्टुस्तथोभयोः ।
इत्याह सच्छ्रुतिः .... ............

[यमादीनामुपासनाङ्गत्वनिरूपणोपसंहारः]

..... ...... तेन सम्प्रोक्तगुणसंयुतः ॥ १३०२ ॥

उपासीत हरिं दृष्ट्वा मुक्तिस्तेनैव जायते ।

**[भगवद्द्वेषिणामपि मुक्तिरिति कथनं श्रुतिस्मृतिविरुद्धम्]**

द्वेषाद्यन्मुक्तिकथनं श्रुतिवाक्यविरोधि तत् ॥ १३०३ ॥

रिपवो ये तु रामस्य विमुखत्वान्निरामिणः ।
अभिद्रोहपदे नित्यमन्धे तमसि ते स्थिताः ॥ १३०४ ॥

"हरिद्विषस्तमो यान्ति ये चैव तदभेदिनः ।
तन्निर्गुणत्ववेत्तारस्तस्य दोषविदोऽपि च" ॥ १३०५ ॥

इत्यादिश्रुतिसन्दर्भाद्द्वेषिणस्तम ईयते ।
"हिरण्यकशिपुश्चापि भगवन्निन्दया तमः ॥ १३०६ ॥

विविक्षुरत्यगात्सूनोः प्रह्लादस्यानुभावतः" ।
"यदनिन्दत्पिता मह्यं त्वद्भक्ते मयि चाघवान् ॥ १३०७ ॥

तस्मात्पिता मे पूयेत दुरन्ताद्दुस्तरादघात्" ।
निन्दां भगवतः शृण्वन् तत्परस्य जनस्य वा ॥ १३०८ ॥

ततो नापैति यः सोऽपि यात्यधः सुकृताच्युतः ।
"अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम् ॥१३०९॥

परं भावमजानन्तो मम भूतमहेश्वरम् ।
मोघाशा मोघकर्माणो मोघज्ञाना विचेतसः ॥ १३१० ॥

राक्षसीमासुरीं चैव प्रकृतिं मोहिनीं श्रिताः ।
मामात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयकाः ॥ १३११ ॥

तानहं द्विषतः क्रूरान् संसारेषु नराधमान् ।
क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु ॥ १३१२ ॥

आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि ।
मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम्'' ॥ १३१३ ॥

''यो द्विष्याद्विबुधश्रेष्ठं देवं नारायणं प्रभुम् ।
कथं स न भवेद्द्वेष्य आलोकान्तस्य कस्यचित् ॥ १३१४ ॥

यो द्विष्याद्विबुधश्रेष्ठं देवं नारायणं प्रभुम् ।
मज्जन्ति पितरस्तस्य नरके शाश्वतीः समाः'' ॥ १३१५ ॥

इत्यादिवाक्यसन्दोहाद्द्वेषिणस्तम एव तु ।
**[भोग एव पुरुषार्थः, न मोक्षः इति चार्वाकमतनिरासः]**
नैव मोक्ष इति प्राहुर्लोकायतमते स्थिताः ॥ १३१६ ॥

भोगः शरीरपर्यन्तं भस्मीभावस्ततो भवेत् ।
इति तत्केन मानेन दृष्टं प्रत्यक्षवादिना ॥ १३१७ ॥

न हि प्रत्यक्षमानेन मोक्षाभावोऽवसीयते ।
घटते मुक्तिदृष्टिस्तु पुरुषेण महीयसा ॥ १३१८ ॥

नेति वक्तुर्महत्त्वं तु कथञ्चन न विद्यते ।
साधयन् सर्वसामान्यं कथमेव विशेषवान् ॥ १३१९ ॥

दृश्यन्ते पुरुषा लोके परापरविदोऽपि च ।
अपरोक्षदृशो योगनिष्ठाश्चामलचक्षुषः ॥ १३२० ॥

प्रत्यक्षं देवतां दृष्ट्वा तत्प्रसादाप्तभूतयः ।
ज्ञानविज्ञानपारज्ञा निषिध्यन्ते कथं नृभिः ॥ १३२१ ॥

दृश्यते चातिमाहात्म्यं तेषामतिमहौजसाम् ।
यदि तेऽपि निषिध्यन्ते किं नोक्तिस्ते निषिध्यते ॥ १३२२ ॥

यदुक्तवाक्यप्रामाण्यं प्रत्यक्षेणोपलभ्यते ।
वरादयोऽपि तद्दत्ताः सदा सत्या भवन्ति हि ॥ १३२३ ॥

अप्रामाण्यं तदुक्तेश्च वृथा वाचावसीयते ।
न हि प्रयोजनं किञ्चित्परलोकनिवारणात् ॥ १३२४ ॥

वृथावाचं वृथा हन्याद्यदि तस्य किमुत्तरम् ।
स्वजीवनविरोधाय वदन् किं नाम बुद्धिमान् ॥ १३२५ ॥

प्रामाण्ये संशयः किं स्यात्तयोः पुरुषयोरपि ।
स्वजीवनविरुद्धोक्तिरज्ञो दृष्टस्य चापि यः ॥ १३२६ ॥

यश्चातीन्द्रियदेवोक्तिश्रोता दृष्टपरावरः ।
अतीतानागतं सर्वं लोकानुभवमापयन् ॥ १३२७ ॥

अतः प्रत्यक्षगम्यत्वाद्वेदमात्वस्य च स्फुटम् ।
यद्यागमस्य नो मात्वमक्षजस्य तथा भवेत् ॥ १३२८ ॥

यद्यक्षजस्य मात्वं स्यादागमस्य कथं न तत् ।
लोकवाक्याद्विशेषश्चाव्यभिचारेण सिध्यति ॥ १३२९ ॥

[जैनोक्तमोक्षसाधनदूषणम्]

अस्ति मोक्षोऽपि धर्मेण यथार्थज्ञानतोऽपि च ।
प्रामाण्यमनुमायाश्च जिनस्याप्तत्वसाधने ॥ १३३० ॥

तद्वाक्याद्धर्मसज्ज्ञानविज्ञप्तिर्भवतीति च ।
धर्मोऽहिंसापरो नान्यो ज्ञानं पुद्गलदर्शनम् ॥ १३३१ ॥

इति जैनाः कथं तत्स्यात्प्रमाणमनुमानतः ।
विषयान् प्रति स्थितं ह्यक्षं प्रत्यक्षमिति गीयते ॥ १३३२ ॥

प्रत्यक्षशब्दानुसारादनुमेति प्रकीर्तिता ।
आ समन्ताद्गमयति धर्माधर्मौ परं पदम् ॥ १३३३ ॥

यच्चाप्यतीन्द्रियं त्वन्यत्तेनासावागमः स्मृतः ।
एतेन कारणेनैव तत्तन्मानत्वमिष्यते ॥ १३३४ ॥

स्वरूपं हि तदेतेषामन्यथासिद्धिमानतः ।
अतोऽनुमा कथं धर्मं पुद्गलं चापि दर्शयेत् ॥ १३३५ ॥

स्वरूपे पुद्गलस्योक्ता दोषा आनन्दमेव च ।
न मन्यते पुद्गलं स दुःखाभावः सुखं त्विति ॥ १३३६ ॥

मात्राभोगातिरेकेण सुखाधिक्यस्य दर्शनात् ।
सुखस्याभावता केन न च स्यात्किं विपर्ययः ॥ १३३७ ॥

यदि भावोऽपि कश्चित्स्यात्तस्यैवाभावता कुतः ।
यदि सर्वेऽप्यभावाः स्युरन्योन्यमिति भावता ॥ १३३८ ॥

अभावाभावतैव स्यात्किं नश्छिन्नं तदा भवेत् ।
भावत्वं विधिरूपत्वं निषेधत्वमभावता ॥ १३३९ ॥

निषेधस्य निषेधोऽपि भाव एव बलाद्भवेत् ।
प्रथमप्रतिपत्तिस्तु भावाभावनियामिका ॥ १३४० ॥

न च पुद्गलविज्ञानं मोक्षदं भवति क्वचित् ।
अस्वातन्त्र्यात्पुद्गलस्य ज्ञातोऽपि सुखदो न हि ॥ १३४१ ॥

न हि दुःखिपरिज्ञानाद्दुःखित्वं विनिवर्तते ।
यदि पुद्गलविज्ञानाददुःखी स्यात्कथञ्चन ॥ १३४२ ॥

देहवानपि नादुःखी किं ज्ञानादुत्तरं सदा ।
ईशक्लृप्त्यनुसारेण स्यात्कालादीशवादिनः ॥ १३४३ ॥

कर्महेतुत्वमपि तु निश्चैतन्यान्न हि क्वचित् ।
अशेषदुःखविलये नेदानीं कारणं यथा ॥ १३४४ ॥

तथोत्तरं न चैव स्यात् दृष्टिपूर्वानुमा यतः ।
शक्तस्यान्यस्य विज्ञानं तत्प्रीतिजनकं यदि ॥ १३४५ ॥

तयैव बन्धहानिः स्यादिति किं नाम दूषणम् ।
स्वज्ञानाद्बन्धहानिस्तु दृश्यते कस्य कुत्रचित् ॥ १३४६ ॥

अहिंसायाश्च धर्मत्वं केन मानेन गम्यते ।
हिंसाया एव धर्मत्वमित्युक्ते स्यात्किमुत्तरम् ॥ १३४७ ॥

धर्मस्य सुखहेतुत्वमपि केनावगम्यते ।
हत्याया मोक्षहेतुत्वं कुतो मानान्निवार्यते ॥ १३४८ ॥

**[शून्यज्ञानेन शून्यभावनया च मोक्षः इति शून्यवादिमतनिरासः]**

न च शून्यपरिज्ञानाच्छून्यभावनयापि च ।
मोक्षः कथञ्चन भवेत् यदीदानीं कथं न सः ॥ १३४९ ॥

परप्रसादनेच्छोस्तु विलम्बो नाम युज्यते ।
पुमिच्छाधीनता नो चेद्विलम्बः किंकृतो भवेत् ॥ १३५० ॥

अन्यत्रापि विलम्बास्तु स्युरीशेच्छानिमित्ततः ।
अन्यथा कारणं चेत् स्यात्किं कार्यं नोपजायते ॥ १३५१ ॥

कारणे सति कार्यस्य भावः सुनियतोऽस्य हि ।

**[विज्ञानाद्वैतज्ञानात् विज्ञानभावनया च मोक्षः इति विज्ञानवादिमतनिरासः]**

विज्ञानवादिनश्चैव विज्ञानाद्वैतवेदनात् ॥ १३५२ ॥

विज्ञानभावनाच्चैव मोक्षो न घटते क्वचित् ।

**[वैभाषिकसौत्रान्तिकाभिमतमोक्षसाधननिरासः]**

अन्तर्ज्ञानस्य बाह्ये च क्षणिकत्वस्य वेदनात् ॥ १३५३ ॥

भावनाच्चोक्तमार्गेण मानाभावान्न मुच्यते ।

**[ईशप्रसादेन विना केवलं प्रकृतिपुरुषविवेको मोक्षसाधनमिति साङ्ख्यमतं न युक्तम्]**

प्रकृतेः पुरुषस्यापि विवेको मुक्तिसाधनम्  ।। १३५४ ।।

इति साङ्ख्या न चैतस्मिन्मानमीशाप्रसादतः ।
श्रुतयः स्मृतयश्चैव यदेशस्य प्रसादतः  ।। १३५५ ।।

वदन्ति नियमात् मुक्तिं तमृतेऽतः कुतो भवेत् ।

**[ईश्वरप्रसादस्य वैशेषिकैः धर्मसहकारित्वेन, पतञ्जलिना तपस्स्वाध्यायादिसमकक्ष्यत्वेन, नैयायिकैरपि मोक्षस्य सहकारिमात्रत्वेन अङ्गीकारात् न तेषां मतं युक्तम्]**

कणादयोगाक्षपादा अपीशस्य प्रसादतः  ।। १३५६ ।।

मुक्तिं ब्रुवाणा अप्याहुः ..... .......

**[ज्ञानिनामपि कर्मणां भोगादेव नाश इति न युक्तम्]**

...... ....... भोगादेव च कर्मणाम् ।
क्षयं प्राहुः कुतश्चैतत् प्रसन्ने जगदीश्वरे  ।। १३५७ ।।

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे  ।। १३५८ ।।

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि दृष्ट एवात्मनीश्वरे  ।। १३५९ ।।

इति श्रुतिपुराणादिवचनेभ्योऽन्यथागतेः ।

**[पाशुपतस्कान्दसौराद्युक्तमोक्षसाधननिरासः]**

न च पाशुपताद्युक्तशिवादीनामनुग्रहात्  ।। १३६० ।।

''नान्यः पन्था'' इति ह्युक्तं पुरुषज्ञानतः श्रुतौ ।
''सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि'' ।। १३६१ ।।

एवं पुरुषशब्दश्च प्रयुक्तोऽब्धिशये हरौ ।
''न तस्येशे कश्चन तस्य नाम महद्यशः'' ।। १३६२ ।।

इति चाधिपतिस्तस्य प्रतिषिद्धः स्वयं श्रुतौ ।
''विश्वतः परमां नित्यं विश्वं नारायणं हरिम्''।। १३६३ ।।

इति सर्वाधिकत्वोक्त्या समोऽपि विनिवारितः ।
समाधिकस्य राहित्यान्नोपचारपुमानसौ ।। १३६४ ।।

''पुरुष एवेदं सर्वं यद्भूतं यच्च भव्यम् ।
उतामृतत्वस्येशानो यदन्नेनातिरोहति'' ।। १३६५ ।।

मुक्तामुक्तपरेशत्वमिति तस्याह सा श्रुतिः ।
अमृतेशानवचनात् सर्वस्येशानतोदिता ।। १३६६ ।।

यदि सर्वत्वमुदितमुतेश इति तद्वृथा ।
उतशब्दो वदेदेष हीशत्वस्य समुच्चयम् ।। १३६७ ।।

पुरुषेणैवेदं व्याप्तमिति ब्राह्मणं चाह तं प्रति ।
एतावानस्य महिमेति महिम्नो वचो हि तत् ।। १३६८ ।।

सोऽमृतस्याभयस्येशो मर्त्यमन्नं यदत्यगात् ।
इत्यमुक्ताधिपत्यं तु पूर्वार्धोक्तमनूद्य च ।। १३६९ ।।

उतामृतस्येश इति विधत्ते मुक्तिगेशताम् ।
अतो विष्णुपरिज्ञानादेव मुक्तिर्न चान्यतः    ।। १३७० ।।

तद्यथेति श्रुतेश्चैव ततः कर्मक्षयो भवेत् ।
''यथैधांसि समिद्धोऽग्निर्भस्मसात् कुरुतेऽर्जुन    ।। १३७१ ।।

ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुते तथा ।''
''सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज    ।। १३७२ ।।

अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ।''
इत्यादिभगवद्वाक्यैरुक्तार्थश्चावसीयते    ।। १३७३ ।।

[**भाट्टोक्तमोक्षसाधननिरासः**]

नित्यनैमित्तिकं कर्म कुर्वन्नन्यत् परित्यजन् ।
मुच्यते संसृतेश्चैतदप्येतेन निराकृतम्    ।। १३७४ ।।

[**एतत्सर्वं 'विद्यैव तु निर्धारणात्' इति सूत्रे सूत्रकारेणैवोक्तम्**]

विद्यैवेतीममेवार्थं स्वयमेवाह वेदराट् ।

[**ज्ञानकर्मसमुच्चयवादो न युक्तः**]

विना कर्म न मोक्षः स्यात् ज्ञानेनेत्यपि सा श्रुतिः।।१३७५।।

नान्यः पन्था इति ह्येव निवारयति सादरम् ।

[**प्रतीकादिविषयमन्यथोपासनं वैकुण्ठादिप्राप्तिलक्षणा-परमोक्षसाधनं, एकत्वज्ञानं अद्वैतब्रह्मावस्थानरूपपर-मोक्षसाधनमिति मायावादिमतनिरासः**]

अन्यथोपासनमपि तमेवमिति वादिनी    ।। १३७६ ।।

निवारयत्यादरेण न प्रतीक इति प्रभुः ।
''अन्धन्तमः प्रविशन्ति ये त्वविद्यामुपासते'' ।। १३७७ ।।

इति श्रुतिविरोधाच्च नान्यथोपासनं भवेत् ।
न चाप्येकत्वविज्ञानादुक्तन्यायेन मुच्यते ।। १३७८ ।।

[अधिकरणार्थोपसंहारः]

इति सर्वं प्रविज्ञाय सर्वैस्तर्कैः सदागमैः ।
उपासीत हरिं नित्यं गुणैरेव स्वयोग्यतः ।। १३७९ ।।

ब्रह्मा सर्वगुणैश्चैव क्रियासामान्यतश्च गीः ।
गुणसामान्यतो रुद्रो द्रव्यसामान्यतः परे ।। १३८० ।।

[यावदधिकारमित्यादिसूत्रतात्पर्यम् – योग्यतानुसारेण संसारमोक्षयोः भक्तिज्ञानादिविशेषः]

अधिकारविशेषेण भक्तिज्ञानसुखादिभिः ।
विशेषो देवतादीनां मोक्षे चैव विशेषतः ।। १३८१ ।।

[अक्षरधियामित्यादिसूत्रतात्पर्यम् – तारतम्यसद्भावेऽपि मुक्तानां न परस्परं द्वेषेर्ष्यादिप्रसङ्गः]

न तावता विरोधोऽस्ति निर्दोषत्वात्समस्तशः ।
आभासत्वात्परेषां तदवराणां च सर्वशः ।। १३८२ ।।

यतोऽवराणां सर्वेऽपि गुणाः सर्वाः क्रिया अपि ।
नियमेनैव पूर्वेषां सुप्रसादनिबन्धनाः ।। १३८३ ।।

अतः सच्छिष्यवत्तेषां नैवेर्ष्यादिः कथञ्चन ।

**[एतत्सूत्रद्वयस्य वृत्तिकारव्याख्यानस्य मायावादिव्याख्यानस्य च निरासः]**

न च संसारिदेवानां कालेयत्तापरे इमे ॥ १३८४ ॥

सूत्रे ह्यारब्धमात्रस्य भोगेनैव क्षयो ध्रुवः ।
अनारब्धस्य भोगेन त्वितरे इति चोदितः ॥ १३८५ ॥

पौनरुक्त्येन तेनैते उक्तार्थे इति निश्चयः ।

**[इयदामननाधिकरणोक्ताधिकारितारतम्यनिरूपणम्]**

उषाः स्वाहा च पर्जन्यो मित्रोऽग्निर्वरुणो विधुः॥ १३८६ ॥

प्रवहोऽनिरुद्ध इन्द्रोमे रुद्रो वाणी च मारुतः ।
उत्तरोत्तरतस्त्वेते गुणैः सर्वैश्च मुक्तिगाः ॥ १३८७ ॥

सूर्यधर्मौ यथा सोमो मनुर्दक्षो बृहस्पतिः ।
शची रतिश्चानिरुद्धसमास्तारा च मित्रवत् ॥ १३८८ ॥

सोमवच्छतरूपा तु प्रसूतिर्वह्निवद्विराट् ।
पर्जन्यवद्वारुणी च तथा सञ्ज्ञा च रोहिणी ॥ १३८९ ॥

धार्मी च मित्रवत्त्वेव प्रावही परिकीर्तिता ।
मित्रपर्जन्यमध्यस्थावश्विनौ विघ्नवित्तपौ ॥ १३९० ॥

भृगुरग्निसमो मित्रस्तन्मध्ये ब्रह्मपुत्रकाः ।
वरुणाग्न्यन्तरा तत्र नारदः प्राय इन्द्रवत् ॥ १३९१ ॥

कामः सुपर्णी चोमावद्वीन्द्रो रुद्रवदीरितः ।
निर्ऋतिर्मित्रसदृशो विश्वामित्रः कसूनुवत् ॥ १३९२ ॥

वैवस्वतो मनुश्चाश्विपश्चादन्ये ततोऽवराः ।
च्यवनोचथ्यवैन्याश्च शशबिन्दुश्च हैहयः ॥ १३९३ ॥

तद्वच्च विप्रराजन्यविशेषोऽत्रापि कश्चन ।
तद्वत्प्रियव्रतश्चापि तदन्याः शतदेवताः ॥ १३९४ ॥

पर्जन्यमित्रान्तराले तदन्ये तु ततोऽवराः ।

**[श्रियः नित्यमुक्तत्वात् अधिकारिवर्गे न ग्रहणम्, हरिः सर्वोत्तमः]**

एतेभ्योऽभ्यधिका श्रीस्तु सदा मुक्ता विशेषतः ॥ १३९५ ॥

तत्समो नास्ति परमो हरिरेव न चापरः ।
संहितायां बृहत्यां तु स्वयं भगवतोदितम् ॥ १३९६ ॥

तदेतदखिलं .... ....... .......

**[तैजसाहङ्कारादुत्पन्नः अपरः प्राणः इन्द्रादनन्तरः]**

....... प्राण आहङ्कारिक एव च ।
इन्द्रादनन्तरः .......... ..........

**[प्रज्ञान्तराधिकरणतात्पर्यम् — अपरोक्षज्ञानं योग्यतानुसारेण भिन्नम्]**

.......... दृष्टिरपि योग्यानुसारतः ॥ १३९७ ॥

[प्रदानाधिकरणलिङ्गभूयस्त्वाधिकरणयोः तात्पर्यम्
सम्यक् प्रसादपूर्वकं गुरोर्विद्यादानं अपरोक्षज्ञानकारणम्,
श्रवणादि न त्याज्यम्]

सम्यग्गुरुप्रसादश्च मुख्यतो दृष्टिकारणम् ।
श्रवणादि च कर्तव्यं नान्यथा दर्शनं क्वचित् ॥ १३९८ ॥

[पूर्वविकल्पाधिकरणतात्पर्यम्
गुरुस्वीकारक्रमगुरुस्वरूपादिनिरूपणम्]

गुणाधिकं गुरुं प्राप्य तद्धीनं नाप्नुयात्क्वचित् ।
विपर्ययस्तु कर्तव्यः सर्वथा शुभमिच्छता ॥ १३९९ ॥

समे विकल्प एव स्यात्पूर्वानुज्ञा च सर्वथा ।
तदुत्तमगुरुप्राप्त्यै पूर्वानुज्ञा न मृग्यते ॥ १४०० ॥

गुरुर्ब्रह्माखिलानां च विद्या चैव सरस्वती ।
देवता भगवान् विष्णुः सर्वेषामविशेषतः ॥ १४०१ ॥

तत्प्रसादेन मुक्तिः स्यात् नान्यथा तु कथञ्चन ।
स्वोत्तमास्तु क्रमेणैव सर्वेषां गुरवः स्मृताः ॥ १४०२ ॥

[हिरण्यगर्भोपदेशेन विना न कस्यापि मुक्तिः]

उपदेशो ब्रह्मणस्तु सर्वेषामेव मुक्तये ।

[परेणाधिकरणतात्पर्यम्
मोक्षसाधनेषु ज्ञानादिषु भक्तेः प्राधान्यम्]

साधनेभ्योऽधिका भक्तिर्नैवान्यत्तादृशं क्वचित् ॥ १४०३ ॥

भक्तिश्चैव हरावेव मुख्यान्यत्र यथाक्रमम् ।
स्वाधिकत्वेन सर्वत्र स्वोत्तमेषु क्रमेण च ।। १४०४ ।।

अनुवर्तते च सा भक्तिर्मुक्तावानन्दरूपिणी ।

[पादार्थोपसंहारः]

तत्पूर्विकोपासनैवं कर्तव्या मुक्तये गुणैः ।। १४०५ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीब्रह्मसूत्रानुव्याख्याने तृतीयाध्यायस्य तृतीयः पादः ।।

## तृतीयाध्यायस्य चतुर्थः पादः

**पुरुषार्थाधिकरणम् - १**

**।। ॐ पुरुषार्थोऽतः शब्दादिति बादरायणः ॐ ।।३-४-१।।**

**।। ॐ शेषत्वात्पुरुषार्थवादो यथान्येष्विति जैमिनिः ॐ ।। ३-४-२ ।।**

**।। ॐ आचारदर्शनात् ॐ ।। ३-४-३ ।।**

**।। ॐ तच्छ्रुतेः ॐ ।। ३-४-४ ।।**

**।। ॐ समन्वारम्भणात् ॐ ।। ३-४-५ ।।**

**।। ॐ तद्वतो विधानात् ॐ ।। ३-४-६ ।।**

**।। ॐ नियमाच्च ॐ ।। ३-४-७ ।।**

**।। ॐ अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात् ॐ ।। ३-४-८ ।।**

## ।। ॐ तुल्यं तु दर्शनम् ॐ ।। ३-४-९ ।।

**[भगवद्दर्शनेन देवादीनां मोक्षेतरापेक्षितपुरुषार्थस्यापि प्राप्तिरिति निरूपणम्]**

एवमुत्पन्ननिर्दोषभगवद्दर्शनात् सदा ।
अपेक्षितफलप्राप्तिरारब्धस्यानतिक्रमात्  ।। १४०६ ।।

देवर्षिमानुषादीनां तत्तज्ज्ञात्यनुसारतः ।

**[जैमिनिबादरायणमतयोः विशेषसामान्यविषयत्वेन विरोधपरिहारः]**

जैमिन्युक्तं मानुषाणां तद्विशेषाश्च केचन  ।। १४०७ ।।

सामान्यं भगवत्प्रोक्तं देवादीनां विशेषतः ।
बलवद्विरोधिसद्भावे जैमिन्याद्युक्तिरिष्यते  ।। १४०८ ।।

।। इति पुरुषार्थाधिकरणम् ।। १ ।।

### असार्वत्रिकाधिकरणम् - २

## ।। ॐ असार्वत्रिकी ॐ ।। ३-४-१० ।।

## ।। ॐ विभागः शतवत् ॐ ।। ३-४-११ ।।

## ।। ॐ अध्ययनमात्रवतः ॐ ।। ३-४-१२ ।।

।। इति असार्वत्रिकाधिकरणम् ।। २ ।।

### अविशेषाधिकरणम् - ३

## ।। ॐ नाविशेषात् ॐ ।। ३-४-१३ ।।

।। इति अविशेषाधिकरणम् ।। ३ ।।

स्तुत्यधिकरणम् - ४

## ।। ॐ स्तुतयेऽनुमतिर्वा ॐ ।। ३-४-१४ ।।

[ज्ञानिनां सदसत्प्रवृत्तिभ्यां विशेषसद्भावनिरूपणम्]

विकर्मलेपो नैवास्ति सम्यग्दृष्टिमतां क्वचित् ।
गुणहानिश्च नैवास्ति ब्रह्मणस्त्वविकर्मतः ।। १४०९ ।।

देवानामपि न प्रायः क्लृप्तस्य तु कथञ्चन ।
प्राप्तह्रासो भवेत् क्वापि महता तु विकर्मणा ।। १४१० ।।

तथापि तत्क्लृप्तमेव तस्मान्न नियमोज्झितिः ।
चन्द्रसुग्रीवयोश्चैव स्वोच्चदारपरिग्रहात् ।। १४११ ।।

प्राप्तहानिरभून्नैव क्लृप्तहानिः कथञ्चन ।
ह्रासोऽपि मानुषादीनामानन्दस्य विकर्मणा ।। १४१२ ।।

भवेन्मुक्तौ विशेषेण स्वोच्चानामपराधतः ।

## ।। ॐ कामकारेण चैके ॐ ।। ३-४-१५ ।।

[अस्य सूत्रस्य चतुर्थाध्यायगतेन 'तदधिगमे'त्यादिसूत्रेण पुनरुक्तित्वशङ्कापरिहारः]

ज्ञानोत्तरस्य पापस्य चतुर्थेऽलेप उच्यते ।। १४१३ ।।

अशुचित्वादिकं चास्य न भवेदिति तत्फलम् ।
अत्र ज्ञानफलस्यैव मुक्तेर्नियततोच्यते ।। १४१४ ।।

## ।। ॐ उपमर्दं च ॐ ।। ३-४-१६ ।।

।। ॐ ऊर्ध्वरेतस्सु च शब्दे हि ॐ ।। ३-४-१७ ।।

।। ॐ परामर्शं जैमिनिरचोदना चापवदति हि ॐ ।। ३-४-१८ ।।

।। ॐ अनुष्ठेयं बादरायणः साम्यश्रुतेः ॐ ।। ३-४-१९ ।।

।। ॐ विधिर्वा धारणवत् ॐ ।। ३-४-२० ।।

।। ॐ स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात् ॐ ।। ३-४-२१ ।।

।। ॐ भावशब्दाच्च ॐ ।। ३-४-२२ ।।

।। ॐ पारिप्लवार्था इति चेन्न विशेषितत्वात् ॐ ।। ३-४-२३ ।।

।। ॐ तथा चैकवाक्योपबन्धात् ॐ ।। ३-४-२४ ।।

।। ॐ अत एव चाग्नीन्धनाद्यनपेक्षा ॐ ।। ३-४-२५ ।।

।। ॐ सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् ॐ ।। ३-४-२६ ।।

।। ॐ शमदमाद्युपेतः स्यात्तथाऽपि तु तद्विधेस्तदङ्गतया तेषामवश्यानुष्ठेयत्वात् ॐ ।। ३-४-२७ ।।

।। ॐ सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् ॐ ।। ३-४-२८ ।।

।। ॐ अबाधाच्च ॐ ।। ३-४-२९ ।।

।। ॐ अपि स्मर्यते ॐ ।। ३-४-३० ।।

**।। ॐ शब्दश्चातोऽकामचारे ॐ ।। ३-४-३१ ।।**

**।। ॐ विहितत्वाच्चाऽश्रमकर्मापि ॐ ।। ३-४-३२ ।।**

**।। ॐ सहकारित्वेन च ॐ ।। ३-४-३३ ।।**

[**'उपमर्दं च' इति सूत्रस्यापि 'तदधिगमे' इत्यादिसूत्रेण न पुनरुक्तिः**]

प्रारब्धकर्मजस्यैव विषभक्षात् मृतेरिव ।
प्राप्तस्याप्यनिवर्त्यस्य किञ्चिद्भुक्तस्य संविदा ।। १४१५ ।।

उपमर्द इह प्रोक्तः ........ ........

[**देवादीनां प्रारब्धकर्मफलोपमर्दः न एकविधः, किन्तु ज्ञानसामार्थ्यानुगुणः**]

...... .... .... देवादीनां यथाक्रमम् ।

[**प्रारब्धकर्मणः ज्ञानेन सर्वथा नाशः इति पक्षस्य, ज्ञानिनापि प्रारब्धकर्मजं फलं सर्वमनुभोक्तव्यमिति पक्षस्य च निरासः**]

सर्वात्मना त्वभोगो हि प्रारब्धस्यैव कर्मणः ।। १४१६ ।।

न ब्रह्मदर्शिनोऽपि स्यात्फलह्रासस्तु विद्यते ।
सर्वात्मना फलह्रासो यदि नारब्धकर्मणः ।। १४१७ ।।

स्यात्काम्यविधिवैयर्थ्यमित्युक्तनियमो भवेत् ।

[**प्रथमाधिकरणोक्ते एतदधिकरणोक्ते च स्मृतिः प्रमाणम्**]

एवमाद्यपि सम्प्रोक्तं तन्त्रभागवते स्फुटम् ।। १४१८ ।।

**[यावदधिकारमित्यधिकरणार्थस्य प्रपञ्चनम्, मोक्षे आनन्दतारतम्यनिरूपणम्, 'श्रोत्रियस्य चाकामहतस्य' इति श्रुत्यर्थविचारः]**

तारतम्यं फले नो चेद्ब्रह्मादीनां कथं श्रुतिः ।
अवृजिनोऽकामहत इति मुक्तिं निगद्य च  ॥ १४१९ ॥

आनन्दतारतम्यं च तेषां ब्रूयात् पृथक्पृथक् ।
संसार एव चेदेतत्तारतम्यं न मुख्यतः  ॥ १४२० ॥

अकामहतशब्दार्थोऽवृजिनत्वं च नो भवेत् ।
''कामस्य यत्राप्ताः कामस्तत्र मामृमतं कृधि''॥ १४२१ ॥

इति यल्लक्षणं मुक्तेः श्रुतिराह बलीयसी ।
कामाहतिः कुतोऽन्यत्र प्राप्तकामस्य सा भवेत्  ॥१४२२॥

अप्रयत्नेन कामानामवाप्तिः सा यदा भवेत् ।
तदैवाकामहतता कुत एवान्यथा भवेत्  ॥ १४२३ ॥

चेतनस्य त्वसुप्तस्य कुत्र दृष्टा ह्यकामता ।
अव्यक्तिरेव कामानां न नाशो मोहसुप्तयोः  ॥ १४२४ ॥

यत्कामः स्वापमाप्नोति तदेवोत्थापितः पुनः ।
अवशोऽपि व्याहरति कुतः सुप्तावकामता  ॥ १४२५ ॥

सर्वकामानवाप्नोति ब्रह्मणा सह मुक्तिगः ।
पर्येति तत्र जक्षंश्च क्रीडन् रतिमवाप्नुयात्  ॥ १४२६ ॥

कामान्नी कामरूपी सन्निमान् लोकांश्च सञ्चरन् ।
आस्ते गायन् साम मुक्त इत्यादिश्रुतिसद्बलात् ।। १४२७ ।।

अकामः स्यात् कथं मुक्तः कामा येऽस्य हृदि श्रिताः ।
इत्यन्तःकरणस्थानां कामानां मोक्षमेव हि ।। १४२८ ।।

आह श्रुतिर्हृदीत्येव न चेद्व्यर्थं विशेषणम् ।
हृद्येव तेषां श्रयणमिति पक्षो न भासते ।। १४२९ ।।

मुक्तानां कामितामाह पृथक् शाखासु यच्छ्रुतिः ।
अतोऽकामहतत्वं तु मुक्तानामेव मुख्यतः ।। १४३० ।।

मुख्यार्थस्य वृथा त्यागो मायिनामेव भूषणम् ।
अपापत्वमदुःखत्वं चावृजिनत्वमिहोदितम् ।। १४३१ ।।

अप्रियं वृजिनं दुःखमकं तोद इतीर्यते ।
तत्कारणत्वात्पापं वा वृजिनं नाम कथ्यते ।। १४३२ ।।

इत्युक्तः स्वयमीशेन नामार्थः शब्दनिर्णये ।
अपापत्वं च नैवास्ति यावत्संसारमस्य हि ।। १४३३ ।।

आरब्धपापमस्त्येव दुःखं च ज्ञानिनोऽपि हि ।
तस्मात्तस्मादकामत्वमिति चाश्रुतकल्पना ।। १४३४ ।।

अकामहत इत्युक्तेः श्रुतहानिरपि स्फुटा ।
कुत्रचित्कामिनः पुंसः कामाभावात् क्वचित्क्वचित् ।। १४३५ ।।

इन्द्रादिसुखभोगोऽस्तीत्यनुभूतिर्हि कुप्यति ।
तस्मादमुक्तसुखगं तारतम्यं पृथक्पृथक्      ।। १४३६ ।।

उक्त्वा यश्चेति मुक्तानां तारतम्यं सुखे श्रुतिः ।
आहेति पेशलं तच्च चशब्दादेव गम्यते      ।। १४३७ ।।

राद्धः संसिद्ध इत्येव मुक्त एवावगम्यते ।
साधुना विष्णुना युक्तो मुक्तः साधुयुवा मतः ।। १४३८ ।।

यौवनं नित्यमेतस्य मुक्तस्येति युवा स च ।
फलमध्ययनस्याप्तं तेनाध्यायक ईरितः      ।। १४३९ ।।

निर्ह्रासानन्दसम्प्राप्त्या चाशिष्ठ इति गीयते ।
स्थितस्यानन्यथाप्राप्तेर्द्रढिष्ठ इति चोदितः      ।। १४४० ।।

बलिष्ठश्च स्वभावेन मुक्तो भवति केवलम् ।
तस्येयं पृथिवीत्यादि पूर्वभावव्यपेक्षया      ।। १४४१ ।।

स एक इति संसारगतमुक्त्वा सुखं पुनः ।
श्रोत्रियस्येति वदति मुक्ताच्छतगुणात्मताम्      ।। १४४२ ।।

संसारगाच्च संसारगतस्यैव शताधिकम् ।
मुक्तान्मुक्तस्य युक्तं स्याच्छ्रुत्युक्तमभिवीक्षतः ।। १४४३ ।।

[युक्त्या मुक्तौ आनन्दतारतम्यसाधनम्]

युक्तं च साधनाधिक्यात् साध्याधिक्यं सुरादिषु ।
नाधिक्यं यदि साध्ये स्यात् प्रयत्नः साधने कुतः।। १४४४ ।।

यत्नश्च दृश्यते तेषां महानेव महात्मनाम् ।
यत्र साधनबाहुल्यं साध्यबाहुल्यमत्र च ॥ १४४५ ॥

दृष्टं नियमतो नो चेन्न यत्नं कुर्युरञ्जसा ।
कृच्छ्रेण साधनादेव न मुक्तवदुदीर्यते ॥ १४४६ ॥

''दशकल्पं तपश्चीर्णं रुद्रेण लवणार्णवे ।
त्यक्त्वा सुखानि सर्वाणि क्लिष्टेन लवणाम्भसा ॥ १४४७ ॥

शक्रेण वर्षकोटीश्च धूमः पीतोऽतिदुःखतः ।
वर्षायुतं च सूर्येण तपोऽवाक्शिरसा कृतम् ॥ १४४८ ॥

सुदुःखेन सुखं त्यक्त्वा धर्मेणाकाशशायिना ।
पीता मरीचयो वर्षसाहस्रमतिसादरम् ॥ १४४९ ॥

अतिकृच्छ्रेण कुर्वन्ति यत्नं ब्रह्मविदोऽपि च'' ।
इत्येतदखिलं मोक्षविशेषाभावतः कथम् ॥ १४५० ॥

[मोक्षे तारतम्यप्रतिपादकश्रुतिस्मृतिवचनानि]

''दैवी सम्पद्विमोक्षाय निबन्धायासुरी मता'' ।
इति मोक्षविशेषश्च स्वयं भगवतोदितः ॥ १४५१ ॥

''तमेव यूयं भजतात्मवृत्तिभिर्मनोवचःकायगुणैः स्वकर्मभिः ।
अमायिनः कामदुघाङ्घ्रिपङ्कजं यथाधिकारावसितार्थसिद्धये''
॥ १४५२ ॥

''अक्षण्वन्तः कर्णवन्तः सखायो मनोजवेष्वसमा बभूवुः ।

आदघ्नास उपकक्षास उ त्वे ह्रदा इव स्नात्वा उ त्वे ददृश्रे''
॥ १४५३ ॥

इत्यादीनि च वाक्यानि तारतम्यं विमुक्तिगम् ।
व्यक्तं वदन्ति तत्केन साम्यं मुक्तेषु गम्यते ॥ १४५४ ॥

[**परमं साम्यमुपैतीति श्रुतिः दुःखाद्यभावसाम्यमाह**]

दुःखाद्यभावसाम्यं च साम्यवाक्यार्थ ईयते ।

**साधनतारतम्येन मोक्षे फलतारतम्यं भारते निरूपितम्**

भक्त्यादिगुणसद्भावे ह्यतुल्यत्वं च भारते ॥ १४५५ ॥

उक्तम् ........ ...... ......

[**साधनतारतम्ये प्रमाणानि**]

.... साधनवैचित्र्यमपि सर्वत्र कथ्यते ।
''दुर्ज्ञेयं घोररूपस्य त्रैलोक्यध्वंसिनः प्रभोः ॥ १४५६ ॥

दैवतैर्मुनिभिः सिद्धैर्महायोगिभिरेव च ।
नित्ययुक्तैर्महाभागैर्विमोहक्लेशसाध्वसैः ॥ १४५७ ॥

महोत्साहैर्महाधैर्यैः सत्त्वस्थैर्व्यवसायिभिः ।
अतीतानागतज्ञानप्रभावाप्ययवेदिभिः ॥ १४५८ ॥

शौचस्वाध्यायसन्तोषतपःसत्वदयान्वितैः ।
किमु मर्त्यैर्भयभ्रान्तिध्वंसमोहरुजान्वितैः ॥ १४५९ ॥

अल्पायुर्वीर्यधीसत्त्वव्यवसायश्रुतिव्रतैः'' ।
''कस्तं मदामदं देवं मदन्यो ज्ञातुमर्हति'' ॥ १४६० ॥

''ब्रह्मैव किञ्चिज्जानति न तदन्यो हि कश्चन'' ।
''मुक्तानामपि सिद्धानां नारायणपरायणः ।। १४६१ ।।

सुदुर्लभः प्रशान्तात्मा कोटिष्वपि महामते'' ।
''इयं विसृष्टिर्यत आ बभूव यदि वा दधे यदि वा न ।
यो अस्याध्यक्षः परमे व्योमन् सो अङ्ग वेद यदि वा न वेद''
।। १४६२ ।।

''यः स्वात्ममायाविभवं स्वयं गतो
नाहं नभस्वांस्तमथापरे कुतः ।
ब्रह्मापि यं वेत्ति न चेह सम्यक्
अन्ये कुतो देवमुनीन्द्रमर्त्याः'' ।। १४६३ ।।

''नमस्तेऽमिततत्त्वाय ब्रह्मादीनां च सूतये ।
निर्गुणाय च सत्काष्ठां नाहं वेदापरे कुतः'' ।। १४६४ ।।

''नाहं परायुर्ऋषयो न मरीचिमुख्याः
जानन्ति यद्विरचितं खलु सत्त्वसङ्घाः ।
यन्मायया मुषितचेतस ईशदैत्य-
मर्त्यादयः किमुत शश्वदभद्रवृत्ताः'' ।। १४६५ ।।

''अहं महेन्द्रो निर्ऋतिः प्रचेताः
सोमोऽग्निरीशः पवनोऽर्को विरिञ्चः ।
आदित्यविश्वेवसवोऽथ साध्या
मरुद्गणा रुद्रगणाः ससिद्धाः ।। १४६६ ।।

अन्ये च ये विश्वसृजोऽमरेशा-
भृग्वादयोऽस्पृष्टरजस्तमस्काः ।
यस्येहितं न विदुः स्पृष्टमायाः
सत्त्वप्रधाना अपि किं ततोऽन्ये''  ।। १४६७ ।।

''सर्वस्यादौ स्मृतो ब्रह्मा तस्माद्देवादनन्तरः ।
जानाति देवप्रवरं भूयश्चातोऽधिकं नृप''  ।। १४६८ ।।

''न त्वामतिशयिष्यन्ति मुक्तावपि कथञ्चन ।
मद्भक्तियोगात् ज्ञानाच्च सर्वानतिशयिष्यसि''  ।। १४६९ ।।

''यथा भक्तिविशेषोऽत्र दृश्यते पुरुषोत्तमे ।
तथा मुक्तिविशेषोऽपि ज्ञानिनां लिङ्गभेदने''  ।। १४७० ।।

''सायुज्यं समनुप्राप्ता अपि देवादयोऽखिलाः ।
तारतम्याद्धि तिष्ठन्ति तारतम्यं हि साधने''  ।। १४७१ ।।

''मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये ।
यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः''।। १४७२ ।।

''य इमं परमं गुह्यं मद्भक्तेष्वभिधास्यति ।
भक्तिं मयि परां कृत्वा मामेवैष्यत्यसंशयः  ।। १४७३ ।।

न च तस्मान्मनुष्येषु कश्चिन्मे प्रियकृत्तमः ।
भविता न च मे तस्मादन्यः प्रियतरो भुवि  ।। १४७४ ।।

अध्येष्यते च य इमं धर्म्यं संवादमावयोः ।
ज्ञानयज्ञेन तेनाहमिष्टः स्यामिति मे मतिः  ।। १४७५ ।।

श्रद्धावाननसूयश्च शृणुयादपि यो नरः ।
सोऽपि मुक्तः शुभान् लोकान् प्राप्नुयात्पुण्यकर्मणाम्''
॥ १४७६ ॥

''ध्यानेनात्मनि पश्यन्ति केचिदात्मानमात्मना ।
अन्ये साङ्ख्येन योगेन कर्मयोगेन चापरे ॥ १४७७ ॥

अन्ये त्वेवमजानन्तः श्रुत्वान्येभ्य उपासते ।
तेऽपि चातितरन्त्येव मृत्युं श्रुतिपरायणाः'' ॥ १४७८ ॥

''सुसूक्ष्मैरप्यशेषैश्च विशेषैः सह पश्यति ।
स्वात्मानं भगवान् विष्णुः सर्वरूपोऽपि सर्वदा॥ १४७९ ॥

सर्वत्र चान्यदप्येवं तेनादृष्टं न हि क्वचित् ।
सर्वत्र सर्वदैवेशं पश्यत्येव रमापि तु ॥ १४८० ॥

न तु सर्वैर्विशेषैस्तं पश्यन्त्यप्यन्यतोऽधिकम् ।
स्वात्मानमन्यच्चाशेषं पश्यत्येव हि सर्वदा ॥ १४८१ ॥

ब्रह्मा तु सर्वगं पश्येद् गुणानप्यन्यतोऽधिकम् ।
न तु सर्वेषु कालेषु तथा पश्यत्यमुक्तिगः ॥ १४८२ ॥

मुक्तस्तु सर्वदा पश्येत् सर्वगत्वेन चापि तु ।
न रमावद्विशेषाणां दर्शनं शक्नुयात् क्वचित् ॥ १४८३ ॥

स्वात्मानमन्यच्च सदा विशेषैरखिलैरपि ।
पश्यत्यज्ञस्तथा वाणी विशेषांस्तावतो न तु ॥ १४८४ ॥

त्रैगुण्यात्परतः पश्येद्व्याप्तं शतगुणं हरिम् ।
गिरिशो गरुडश्चैव तमोमात्रगतं हरिम् ।। १४८५ ।।

पश्येद्विशेषानपि हि वाणीदृष्टान्न पश्यति ।
उमा सुपर्णी च महत्तत्त्वं यावत्प्रपश्यति ।। १४८६ ।।

रुद्रदृष्टान्विशेषांश्च नैव पश्येत् कदाचन ।
स्वरूपमन्यरूपं च मुक्ता देवाः समस्तशः ।। १४८७ ।।

जानन्तीन्द्रश्च कामश्च ब्रह्म यावदहङ्कृतिः ।
पश्यन्तो मनुदक्षाद्या बुद्धितत्त्वस्थितं हरिम् ।। १४८८ ।।

पश्यन्ति सोमसूर्यौ तु मनःस्थं परमेश्वरम् ।
अन्ये भूतस्थितं विष्णुं देवाः पश्यन्ति सर्वदा ।। १४८९ ।।

बहुसाहस्रवर्षेण महत्तत्त्वे कचित्कचित् ।
अन्ये चैव यथायोगमण्डान्तर्वर्तिनं हरिम् ।। १४९० ।।

श्वेतद्वीपपतिं चैव हृद्येवान्ये तु केचन ।
कदाचिदेव तत्रापि केचित्पश्यन्ति केशवम् ।। १४९१ ।।

उमा यावदनन्तांशान् पूर्वदृष्टेभ्य एव तु ।
विशेषान् वासुदेवस्य पश्चादुक्तान्विचक्षते ।। १४९२ ।।

शक्रकामादयश्चैव विशेषान् ब्रह्मणि स्थितान् ।
उमादिभिः प्रबुद्धेभ्यः शतांशानेव चक्षते ।। १४९३ ।।

इत्यादिवेदस्मृतिगवचनेभ्यो यथार्थतः ।
तारतम्यं च मुक्तानां साधनानां च दृश्यते ।। १४९४ ।।

[**साधनवैचित्र्यमङ्गीकृत्य साध्यवैचित्र्यानङ्गीकारोऽनुपपन्नः**]

साध्यसाधनवैरूप्यमदृष्टं केन कल्प्यते ।

[**विचित्रफलदातुरीश्वरस्य वैषम्यनैर्घृण्यप्रसङ्गं परिहरता सूत्रकारेण साधनवैचित्र्यं निरूपितम्**]

वैषम्यं निर्घृणत्वं च तेन स्यातां परस्य च ।। १४९५ ।।

सापेक्षत्वादिति च तौ विद्याधीशेन वारितौ ।
तारतम्यात् साधनानां साध्यतादृक्त्वमीशतः ।। १४९६ ।।

अवैषम्यादिहेतुः स्यात् सदैव परमेश्वरे ।
स्वातन्त्र्ये विद्यमानेऽपि साधनादौ परेशितुः ।। १४९७ ।।

अपेक्ष्यानादिवैचित्र्यं न दोष इति तद्वचः ।
नानादित्वादिति ह्युक्तमुपपद्यत इत्यपि ।। १४९८ ।।

[**सेवाकर्तरि अनुरूपफलदानं, वैपरीत्यकर्तरि वैषम्यादिकं च राजादावपि दृश्यते**]

अपेक्ष्योपायवैषम्यमुपेयस्य तथा स्थितिः ।
मया कया विरुद्धा स्याद् राजादावपि दृश्यते ।। १४९९ ।।

[**साध्यसाधनवैरूप्याङ्गीकारे दृष्टत्यागादिदोषचतुष्टयम्**]

त्यागो दृष्टस्य चादृष्टकल्पनेति सुदुष्करौ ।
मायिभ्योऽन्येन केनापि तत्किमन्यैश्च वादिभिः ।। १५०० ।।

मायिनोऽत्रानुगम्यन्ते श्रुतहान्यश्रुतग्रहौ ।
अप्यत्र मायिनां लिङ्गे तत्के दोषास्ततोऽधिकाः ।। १५०१ ।।

[मुक्तेषु तारतम्याङ्गीकारे परस्परं द्वेषप्रसङ्ग इति न युक्तं, द्वेषं प्रति दोषित्वस्यैव प्रयोजकत्वात्]

निःशेषगतदोषाणां बहुभिर्जन्मभिः पुनः ।
स्यादापरोक्ष्यं हि हरेर्द्वेषेर्ष्यादिस्ततः कुतः ॥ १५०२ ॥

भवेयुर्यदि चेर्ष्याद्याः समेष्वपि कुतो न ते ।
तप्यमानाः समान् दृष्ट्वा द्वेषेर्ष्यादियुता अपि ॥ १५०३ ॥

दृश्यन्ते बहवो लोके दोषा एवात्र कारणम् ।
यदि निर्दोषता तत्र किमाधिक्येन दूष्यते ॥ १५०४ ॥

[मोक्षे अन्यदर्शनाभावान्न द्वेष इत्यपि न युक्तं, तथा सति अरतिप्रसङ्गात्]

यद्यन्यदर्शनाभावादीर्ष्यादिर्विनिवार्यते ।
अदर्शनादरत्यादिः कथं तेन निवार्यते ॥ १५०५ ॥

ब्रह्मणोऽप्यरतिर्दृष्टा पूर्वमेकाकिनः श्रुतौ ।
नैव रेमे स चैकाकी तस्मान्न रमते क्वचित् ॥ १५०६ ॥

द्वितीयमैच्छत्तेनासाविति श्रुतय ऊदिरे ।
यदीच्छा नैव तत्रास्तीत्येव तत्कल्प्यते मृषा ॥ १५०७ ॥

श्रुत्युक्तनिर्दोषतैवं किं नाङ्गीक्रियते स्वयम् ।

[मुक्तानां साम्याङ्गीकारे अप्रामाणिकानेककल्पनम्, प्रमाणाभावश्च]

तारतम्यं च कामं च श्रुतमेवातिहाय तु ॥ १५०८ ॥

अश्रुता समता केन कल्प्यते युक्तिमानिना ।
किं तन्मानं समत्वे ते मुक्तानामुपलभ्यते ॥ १५०९ ॥

वृथाऽयमाग्रहः केन श्रुतहान्यश्रुतग्रहे ।

[चेतनत्वहेतुना मुक्तेषु तारतम्यसाधनम्]

मोक्षेऽपि तारतम्येतश्चेतनत्वाद्यथा पुरा ॥ १५१० ॥

इत्युक्त उत्तरं किं ते कल्पनामात्रवादिनः ।
न च दुःखादिकं कल्प्यं निर्दुःखत्वश्रुतेर्बलात् ॥ १५११ ॥

[मुक्तस्य निर्दुःखत्वादिप्रतिपादकश्रुतयः]

शोकं तरत्यात्मवेत्ता तीर्णः सर्वानदुःखभाक् ।
'येनानन्येव भवति न शोचति कदाचन' ॥ १५१२ ॥

'किल्बिषस्पृत्पितुषणिररं हित इहेश्वरः' ।
'यं यमन्तमभिप्रेप्सुः स सङ्कल्पाद्भवेदिह' ॥ १५१३ ॥

इत्यादिश्रुतयो मानं निर्दुःखत्वादिसम्पदि ।
अतो दुःखाद्यनुमया नावकाशोऽत्र लभ्यते ॥ १५१४ ॥

तारतम्यानुमा तस्माद्भवेन्नातिप्रसङ्गिनी ।

[मुक्ततारतम्यसाधनोपसंहारः]

श्रुतियुक्तिवलादेव तारतम्यं विभाव्यते ॥ १५१५ ॥

मुक्तावपि ततः केऽत्र विरोधं कर्तुमीशते ।

॥ इति स्तुत्यधिकरणम् ॥ ४ ॥

### उभयलिङ्गाधिकरणम् - ५

**।। ॐ सर्वथाऽपि तु त एवोभयलिङ्गात् ॐ ।। ३-४-३४ ।।**

**।। ॐ अनभिभवं च दर्शयति ॐ ।। ३-४-३५ ।।**

**।। ॐ अन्तरा चापि तु तद्दृष्टेः ॐ ।। ३-४-३६ ।।**

**।। ॐ अपि स्मर्यते ॐ ।। ३-४-३७ ।।**

**।। ॐ विशेषानुग्रहं च ॐ ।। ३-४-३८ ।।**

**।। ॐ अतस्त्वितरज्ज्यायो लिङ्गाच्च ॐ ।। ३-४-३९ ।।**

**।। ॐ तद्भूतस्य तु तद्भावो जैमिनेरपि नियमातद्रूपाभावेभ्यः ॐ ।। ३-४-४० ।।**

इति उभयलिङ्गाधिकरणम् ।। ५ ।।

### आधिकारिकाधिकरणम् - ६

**।। ॐ न चाऽधिकारिकमपि पतनानुमानात्तदयोगात् ॐ ।। ३-४-४१ ।।**

**।। ॐ उपपूर्वमपीत्येके भावशमनवत्तदुक्तम् ॐ ।। ३-४-४२ ।।**

**।। ॐ बहिस्तूभयथापि स्मृतेराचाराच्च ॐ ।। ३-४-४३ ।।**

।। इति आधिकारिकाधिकरणम् ।। ६ ।।

**[जीवाः उत्कर्षापकर्षहेतुभूतानादिनित्यनानाविधयोग्यतावन्तः हरेः महालक्ष्म्याश्च न ब्रह्मण आधिक्यं, ऋजवः समाः,**

**एतदतिरिक्तेभ्यः सर्वेभ्यः ब्रह्मा अधिक इति स योग्यतोत्कर्षपरम्परायाः अवधिः, कलिः योग्यतापकर्षपरम्परायाः अवधिः ।]**

अनादियोग्यतां चैव कलिवाणीश्वरावधिम् ॥ १५१६ ॥

को निवारयितुं शक्तो युक्त्यागमबलोद्धताम् ।
ब्रह्मणोऽन्यत आधिक्ययुक्तः कालो विवादवान् ॥ १५१७ ॥

कालो ह्ययं यथेत्यादि मानुमामानिनो भवेत् ।
अन्यशब्दो हरिश्रीस्वसमेभ्योऽन्यविवक्षया ॥ १५१८ ॥

प्रयुक्तो नैव दोषाय रुद्रादिषु च युक्तितः ।
उत्तमत्वं तु मुक्तानामपि न ब्रह्मणो भवेत् ॥ १५१९ ॥

व्यक्तिः सुखस्य तु भवेन्न त्वाधिक्यं सुखस्य च ।
बलज्ञानाधिकत्वं तु तेभ्यो हि ब्रह्मणः सदा ॥ १५२० ॥

आधिक्यस्य त्वनित्यत्वे न किञ्चिन्मानमीयते ॥ १५२१ ॥

[**ब्रह्मादिजीवेषु अनादिनित्यनानाविधयोग्यतासत्त्वे श्रुतयः**]

शृण्वे वीर उग्रमुग्रं दमायन् अन्यमन्यमतिनेनीयमानः ।
एधमानद्विळुभयस्य राजा चोष्कूयते विश इन्द्रो मनुष्यान्
॥ १५२२ ॥

परा पूर्वेषां सख्या वृणक्ति वितर्तुराणो अपरेभिरेति ।
अनानुभूतीरवधून्वानः पूर्वीरिन्द्रः शरदस्तर्तरीति॥ १५२३ ॥

दिवे दिवे सदृशीरन्यमर्धं कृष्णा असेधदप सद्मनोजाः ।
अहं दासा वृषभो वस्नयन्तोदव्रजे वर्चिनं शम्बरं च।।१५२४।।

तं भूतिरिति देवा उपासाञ्चक्रिरे ते बभूवुस्तस्मा-
द्धाप्येतर्हि सुप्तो भूर्भूरित्येव प्रश्वसित्यभूतिरित्य-
सुरास्ते ह पराबभूवुः     ।। १५२५ ।।

तद्यथा पेशस्कारी पेशसो मात्रामुपादायान्यन्न-
वतरं कल्याणतरं रूपं तनुते एवमेवायमात्मेदं
शरीरं निहत्याविद्यां गमयित्वान्यन्नवतरं कल्या-
णतरं रूपं कुरुते पित्र्यं वा गान्धर्वं वा दैवं वा
प्राजापत्यं वा ब्राह्मं वाऽन्येषां भूतानाम्     ।। १५२६ ।।

[तत्रैव स्मृतयः]

''प्रयान्ति परमां सिद्धिमैहिकामुष्मिकीं द्रुतम् ।
या न प्राप्यासुरैः सर्वैरक्षय्या क्लेशवर्जिता     ।। १५२७ ।।

न तां गतिं प्रपद्यन्ते विना भागवतान्नरान् ।''
''अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम् ।। १५२८ ।।

परं भावमजानन्तो मम भूतमहेश्वरम् ।
मोघाशा मोघकर्माणो मोघज्ञाना विचेतसः     ।। १५२९ ।।

राक्षसीमासुरीं चैव प्रकृतिं मोहिनीं श्रिताः ।
महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः     ।। १५३० ।।

भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम् ।
अभयं सत्त्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः ॥ १५३१ ॥

दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्जवम् ।
अहिंसा सत्यमक्रोधस्त्यागः शान्तिरपैशुनम् ॥ १५३२ ॥

दया भूतेष्वलोलुत्वं मार्दवं ह्रीरचापलम् ।
तेजः क्षमा धृतिः शौचमद्रोहो नातिमानिता ॥ १५३३ ॥

भवन्ति सम्पदं दैवीमभिजातस्य भारत ।
दम्भो दर्पोऽभिमानश्च क्रोधः पारुष्यमेव च ॥ १५३४ ॥

अज्ञानं चाभिजातस्य पार्थ सम्पदमासुरीम्'' ।
''मामात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयकाः ॥ १५३५ ॥

तानहं द्विषतः क्रूरान् संसारेषु नराधमान् ।
क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु ॥ १५३६ ॥

आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि ।
मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम्''॥ १५३७ ॥

''द्विविधो भूतसर्गोऽत्र दैव आसुर एव च ।
विष्णुभक्तिपरो दैवो विपरीतस्तथाऽऽसुरः ॥ १५३८ ॥

देवानां परमो धर्मः सदा यज्ञादिकाः क्रियाः ।
स्वाध्यायस्तत्त्ववेदित्वं विष्णुपूजारतिः स्मृतिः ॥ १५३९ ॥

दैत्यानां बाहुशालित्वं मात्सर्यं युद्धसत्क्रिया ।
नीतिशास्त्रप्रवेदित्वं शिवपूजारतिः स्मृतिः ।। १५४० ।।

वर्णाश्रमाचारवत्त्वं स्वाध्यायो भक्तिरच्युते ।
शिवे सूर्ये तथा देव्यां स्वभावो मानुषः स्मृतः ।। १५४१ ।।

अनादिवैष्णवा एव देवतास्तु स्वभावतः ।
विपरीताः स्मृता दैत्याः सदैवानादिकालतः ।। १५४२ ।।

मानुषा मिश्रमतयो विमिश्रगतयोऽपि च'' ।
इत्यादिवाक्यसन्दर्भैर्ज्ञायतेऽनादियोग्यता ।। १५४३ ।।

[**अनादियोग्यतासाधकानुमानागमानामनुग्राहकतर्कः**]

यद्यनादिविशेषो न साम्प्रतं कथमेव सः ।
अदृष्टादेव चादृष्टं स्वीकृतं सर्ववादिभिः ।। १५४४ ।।

आकस्मिको विशेषश्चेददृष्टे क्वचिदिष्यते ।
सर्वत्राकस्मिकत्वं स्यान्नादृष्टापेक्षता भवेत् ।। १५४५ ।।

अदृष्टाचेद्विशेषोऽयमनादित्वं कुतो न तत् ।

[**'रामकृष्णादिभगवद्रूपाणां परस्परं भेदः प्रत्यक्षदृष्टः, ततश्च भेदानुषङ्गिणो दोषास्तत्र स्युः' इत्याक्षेपनिरासः । भगवतो निर्दोषत्वसमर्थनम् ।**]

''न चान्यभेदवद्विष्णौ भेदस्तद्दर्शिनामपि ।। १५४६ ।।

दृश्यते प्रत्यभिज्ञैव बहुरूपेषु दृश्यते ।
बहुत्वं च विशेषेण न भेदेन कथञ्चन ।। १५४७ ।।

प्रत्यभिज्ञा च येषां न तेऽपि तन्मुष्टदृष्टयः ।
भेदं नैव प्रपश्यन्ति भेदमन्येभ्य एव ॥ १५४८ ॥

पश्यन्त्येवं हरिस्तेषां सन्दर्शयति नान्यथा'' ।
एवं बृहत्संहितायां वचनं न पुराणगम् ॥ १५४९ ॥

लोकदर्शनवाद्येव वेदरोधाय शक्नुयात् ।
अपरीक्षितदृष्टिश्च परीक्षापूर्वदर्शनम् ॥ १५५० ॥

निषेद्धुं शक्नुयात्क्वापि देवदत्तादिदृष्टिवत् ।
न च निश्चितभेदस्य दर्शनेऽस्ति पुराणगम् ॥ १५५१ ॥

वाक्यं क्वचिद्धि संमुग्धं दर्शनं तत्र गम्यते ।
अपरीक्षितमेवात्र वेधादिकमधीशितुः ॥ १५५२ ॥

परीक्षादर्शने नैव दृश्यते केनचित्क्वचित् ।
निर्दोषमेव तं ब्रह्मा ददर्शाशेषरूपिणम् ॥ १५५३ ॥

निर्दोषमेव रुद्रोऽद्राङ्निर्दोषं तं पुरन्दरः ।
निर्दोषाण्यस्य रूपाणि दृष्टान्येवं सुरोत्तमैः ॥ १५५४ ॥

अन्ये सदोषाः सर्वेऽपि निर्दोषो हरिरेकलः'' ।
इति बर्कश्रुतेश्चैव सदोषं नास्य दर्शनम् ॥ १५५५ ॥

''अविद्धो विद्धवद्विष्णुरजातो जातवन्मृषा ।
अबद्धो बद्धवच्चैव दर्शयत्यमितद्युतिः'' ॥ १५५६ ॥

इति पैङ्गिश्रुतिश्चैव प्राह निर्दोषतां हरेः ।
''अपरीक्षितदृष्ट्यैव सदोषो दृश्यते हरिः     ।। १५५७ ।।

परीक्षादर्शने नैव दोषो दृश्यो हरेः क्वचित्'' ।
इति पैङ्गिश्रुतिश्चाह ...... ........

**[परीक्षितस्यैव प्रामाण्यम्]**

.... ........ प्रमाणं हि परीक्षितम्     ।। १५५८ ।।

**[प्रामाण्यग्रहस्य परीक्षाधीनत्वे अनवस्थेति न वाच्यं, सम्भावितदोषे अन्तःकरणपरिणामरूपे वृत्तिज्ञाने एव परीक्षापेक्षा न तु बाधरहिते साक्षिज्ञाने ।]**

न परीक्षानवस्था स्यात्साक्षिसिद्धे त्वसंशयात् ।
मानसे दर्शने दोषाः स्युर्न वै साक्षिदर्शने     ।। १५५९ ।।

सुदृढो निर्णयो यत्र ज्ञेयं तत्साक्षिदर्शनम् ।
इच्छा ज्ञानं सुखं दुःखं भयाभयकृपादयः     ।। १५६० ।।

साक्षिसिद्धा न कश्चिद्धि तत्र संशयवान् क्वचित् ।
यत्क्वचिद् व्यभिचारि स्यात् दर्शनं मानसं हि तत्।। १५६१ ।।

मनश्चक्षुर्दर्शनादेरपि यत्रैव साक्षिणा ।
प्रामाण्यं सुगृहीतं स्यात्तत्परीक्षितदर्शनम्     ।। १५६२ ।।

न ज्ञानदृष्टिमात्रेण प्रामाण्यं तस्य दृश्यते ।
नियमेन सुखाद्येषु प्रामाण्यं साक्षिगोचरम्     ।। १५६३ ।।

स्वप्रामाण्यं सदा साक्षी पश्यत्येव सुनिश्चयात् ।
ज्ञानस्य ग्राहकेणैव साक्षिणा मानतामितेः ॥ १५६४ ॥

दोषाभावे प्रमाणत्वं दोषाभावस्य साक्षिणा ।
निश्चितत्वं क्वचिच्चैव स्वतःप्रामाण्यमिष्यते ॥ १५६५ ॥

अतो न सर्वमानानां प्रामाण्यं निश्चितं भवेत् ।
साक्षिणा निश्चितं यत्र तत्प्रामाण्यं स्वलक्षणम् ॥ १५६६ ॥

न हि कश्चित्सुखाद्येषु संशयं कुरुते जनः ।
न चैवाखिलमानानि निश्चिनोत्यखिलो जनः ॥ १५६७ ॥

तस्मादनुभवारूढं किमर्थमपलप्यते ।
दोषाभावादिकं चैव साक्षी सम्यक्प्रपश्यति ॥ १५६८ ॥

[ **अनवस्थापरिहारोपसंहारः** ]

तत्परीक्षितमानेन न दोषो विष्णवि क्वचित् ।

[ **अपरीक्षितस्य साधकत्वे अतिप्रसङ्गः** ]

अपरीक्षितदृष्टिस्तु कस्मिन्नर्थे न विद्यते ॥ १५६९ ॥

[ **प्रत्यक्षागमयोरुपजीव्यत्वविवेकः** ]

तत्प्रत्यक्षविरुद्धार्थे नागमस्यापि मानता ।
उपजीव्यमक्षजं यत्र तदन्यत्र विपर्ययः ॥ १५७० ॥

लौकिकव्यवहारेऽत्र प्रत्यक्षस्योपजीव्यता ।
अवतारादिदृष्टौ स्यादागमस्योपजीव्यता ॥ १५७१ ॥

आगमेन हि विष्णुत्वं ज्ञात्वा दोषोऽत्र कल्प्यते ।
न चेत्स्याद्दोषवानन्यः शास्त्रसिद्धं हि लक्षणम् ॥ १५७२ ॥

कस्यचिद्दोषवत्त्वं स्यादितिमात्रेऽक्षजं भवेत् ।
न विष्णोर्दोषवत्त्वे हि प्रत्यक्षं वर्तते स्वतः ॥ १५७३ ॥

केचित्पश्यन्ति दोषानित्यत्रापि स्यान्न चाक्षजम् ।

[उपजीव्यवेदविरोधे पुराणवाक्यस्य न प्रामाण्यम्]

पौराणं वाक्यमेवात्र तच्छ्रुत्यैव विरुद्ध्यते ॥ १५७४ ॥

पुराणस्योपजीव्यश्च वेद एव न चापरः ।
तद्विरोधे कथं मानं तत्तत्र च भविष्यति ॥ १५७५ ॥

[अपरीक्षितस्य न प्रमाणत्वम्]

अपरीक्षितदृष्टिश्च कथमेवाक्षजं भवेत् ।
यद्येवं देवदत्तादिभ्रमः किं नाक्षजं भवेत् ॥ १५७६ ॥

[परीक्षया शोधितमुपजीव्यमुपजीवकं बाधते, न तु यथाश्रुतम्]

यावच्छक्ति परीक्षायामुपजीव्यस्य बाधने ।
दोषो नाशोधिते दोष उपजीव्यत्वमस्त्वलम् ॥ १५७७ ॥

[भ्रमस्य धर्मिसमर्पकत्वेन उपजीव्यत्वं, धर्म्यंशे च न बाधः]

भ्रमेऽप्यभ्रमभागोऽस्ति तन्मात्रमुपजीव्य हि ।
बाधकज्ञानवृत्तिः स्यात् ... .... ......

[उपजीव्यायाः 'यः सर्वज्ञः' इत्यादिश्रुतेः उपजीवक-
'तत्वमस्या'दिश्रुत्या न बाधः]

........ ..... न चैवं सुपरीक्षिते ॥ १५७८ ॥

सर्वं तदुपजीव्यैव प्रमाणं वर्तते यतः ।
कथं ब्रह्मेति तज्ज्ञेयं सर्वज्ञत्वादिलक्षणम् ॥ १५७९ ॥

विहाय यस्मात्कस्माच्चित् स्वरूपस्यैव चेद्यदि ।
उपजीव्यत्वमेतस्माद्व्यावृत्तं यावता भवेत् ॥ १५८० ॥

तावतैवोपजीव्यत्वं स्वरूपस्यैव न क्वचित् ।
सर्वलक्षणयुक्तं च स्वरूपं यदि भण्यते ॥ १५८१ ॥

अस्तु नो नैव हानिः स्यात् स्वपक्षश्चायमञ्जसा ।
यस्मादन्वित एवार्थः शब्दानामपि सर्वशः ॥ १५८२ ॥

विशेषसामान्यतया स्वरूपमखिलं भवेत् ।
पुरोवर्तित्वपूर्वाणि देवदत्तादिकभ्रमे ॥ १५८३ ॥

व्यावर्तयन्ति तद्रूपं चैत्रमात्राद्भिनैव तु ।
ब्रह्मणो निर्विशेषत्वाद् व्यावर्तयति किं पुनः ॥ १५८४ ॥

यस्मात्कस्माच्चिदप्यर्थात्तावच्चेत्सिद्धसाधनम् ।

[चिन्मात्रत्वादिना ब्रह्मणः उपजीव्यत्वमिति न युक्तम्]

चिन्मात्रत्वं च नैवेष्टमविशेषत् ववादिनः ॥ १५८५ ॥

तावन्मात्रं यदीष्टं स्यात् सर्वज्ञत्वं कुतो न तत् ।
चिन्मात्राभेदसाध्येऽपि सिद्धं तत्प्रतिवादिनः ॥ १५८६ ॥

स्वाभेदाङ्गीकृतेरेव चित्त्वं स्वस्यापि यन्मतम् ।
सर्वापेक्षतया सर्वज्ञत्वमित्येव तन्न हि ॥ १५८७ ॥

इति चेच्चेतनत्वं च ज्ञत्वं न ज्ञेयवर्जितम् ।
स्वज्ञेयत्वं च नैवासौ मन्यते सविशेषतः ॥ १५८८ ॥

[स्वरूपमात्रमुपजीव्यमिति न युक्तम्]

स्वशब्दोऽपि परापेक्षस्तस्माद् व्यावृत्तिरेव हि ।
स्वशब्दार्थ इति प्रोक्तः स्वरूपं नाम किं न चेत् ॥ १५८९ ॥

रूपशब्देन पूर्णत्वात्तच्च सामान्यतावचः ।
न स्वरूपाभिधायि स्याद्वैयर्थ्यं स्वपदस्य यत् ॥ १५९० ॥

[ज्ञातृज्ञेयादिसापेक्षज्ञानात्मकं चैतन्यं न ब्रह्मस्वरूपं, तव मते ब्रह्मणः निर्विशेषत्वाङ्गीकारात्]

चेतनस्य स्वभावो हि चैतन्यमिति गीयते ।
तस्माद्विशेषबाहुल्यं चैतन्यस्य विशेषतः ॥ १५९१ ॥

[ज्ञातृज्ञेयविहीनं ज्ञानं नैव सम्भवति]

न ज्ञेयज्ञातृहीनं हि ज्ञानं नाम कचिद्भवेत् ।
ज्ञेयज्ञानविहीनश्च ज्ञ इत्यत्र न च प्रमा ॥ १५९२ ॥

ज्ञातृज्ञेयविहीनं च ज्ञानं चेद्भोक्तृभोग्यतः ।
हीनं भोजनमेव स्यात्ताडनं कर्तृताड्यतः ॥ १५९३ ॥

नित्यत्वात्तादृशं च स्यादिति चेन्नित्यवागपि ।
वाच्यवक्तृविहीना स्यान्न हि सा चैव तादृशी ॥ १५९४ ॥

द्रष्टारो वेदवाचो हि सन्ति वाच्यानि चाञ्जसा ।
नित्यो द्रष्टा च वाच्यश्च भगवानेव च स्वयम् ।। १५९५ ।।

न हि वक्तृविहीना च वाच्यहीनापि वाक् क्वचित् ।
ज्ञातृज्ञेयविहीनं च ज्ञानमेव न तद्भवेत् ।। १५९६ ।।

न हि नित्योऽपि वक्ताऽस्ति वाक्यवाच्यविवर्जितः ।
ज्ञानज्ञेयविहीनश्च ज्ञोऽप्येवं नैव विद्यते ।। १५९७ ।।

[**प्रपञ्चमिथ्यात्वमप्रामाणिकम् । 'नेह नानास्ति किञ्चन' इति श्रुतेः न सर्वमिथ्यात्वे तात्पर्यम्**]

किञ्च सर्वविलोपश्च केन मानेन गम्यते ।
सर्वेण सह तद्वाक्यमर्थश्च यदि गृह्यते ।। १५९८ ।।

तदभावे न सर्वस्य नापलापो भवेत्तदा ।
न गृह्यते चेत्तन्न्यायादपलापो न हि क्वचित् ।। १५९९ ।।

उपपत्तिविहीनस्य वाक्यस्यार्थो न गम्यते ।

[**उपक्रमादिलिङ्गेषु उपपत्तेः प्राबल्यम्**]

उपक्रमादिलिङ्गानां बलीयो ह्युत्तरोत्तरम् ।। १६०० ।।

श्रुत्यादौ पूर्वपूर्वं च ब्रह्मतर्कविनिर्णयात् ।
प्रत्यक्षमुपपत्तिश्च बहवश्चागमा यदा ।। १६०१ ।।

विरुध्यन्ते न चार्थोऽस्ति यत्र लिङ्गविरोधिता ।
स एवार्थः कथं ग्राह्य उपपन्नेऽविरोधिनि ।। १६०२ ।।

[**'सर्वं तदुपजीव्यैव' इत्यादिना उक्तस्यार्थस्योपसंहारः**]

मुख्यार्थे विद्यमाने तु क सार्वज्ञं निषिध्यते ।
अतः सर्वगुणैर्युक्तं ब्रह्माङ्गीकार्यमेव हि     ।। १६०३ ।।

[**जीवानामनादियोग्यतायाः मुक्तानां तारतम्यस्य च प्रामाणिकत्वेन जीवब्रह्मणोरैक्यासम्भवेन तत्सिद्धये सर्वमिथ्यात्वकल्पनं न युक्तम्**]

अपलापोऽपि सर्वस्य न कथञ्चन युज्यते ।
अनादियोग्यता चोक्ता तेन ग्राह्यैव सर्वथा     ।। १६०४ ।।

मुक्तानां तारतम्यं च मानैरुक्तैर्न चाल्यते ।

[**मुक्तानां तारतम्यसमर्थनम्**]

ज्ञानिनोऽपि यतो नित्यं कुर्वन्ति शुभमेव हि ।। १६०५ ।।

तारतम्यं तु मुक्तौ च तेनैवाध्यवसीयते ।
तारतम्यं न चेन्मुक्तौ कुतः कुर्युः शुभं पुनः ।। १६०६ ।।

कृच्छ्रेणापि तपो ज्ञानं कर्माप्येते चरन्ति हि ।
बिभ्यति स्माशुभान्नित्यं सकामाश्च शुभे सदा ।। १६०७ ।।

न च स्वभाव एवायं भयपूर्वप्रवृत्तितः ।
कृच्छ्रेणाचरणाच्चैव शुभस्यैव पुनः पुनः     ।। १६०८ ।।

तादृशोऽपि स्वभावश्चेदज्ञस्यापि भवेत्तथा ।
फलवत्त्वे प्रमाणं चेत्तत्र ज्ञस्य समं हि तत्     ।। १६०९ ।।

'निष्कामं ज्ञानपूर्वं च निवृत्तमिह चोच्यते ।
निवृत्तं सेवमानस्तु ब्रह्माभ्येति सनातनम्' ॥ १६१० ॥

'शुभेनानन्दवृद्धिः स्यात् ह्रासश्चैवाशुभेन हि ।
ज्ञानिनोऽपि यतस्तेन कर्तव्यं शुभमेव तैः' ॥ १६११ ॥

'उपास्ते स य आत्मानं क्षीयते नास्य कर्म हि ।
अस्माद्ध्येवात्मनो यद्यत्कामयेत् सृजते च तत् ॥ १६१२ ॥

अविद्वान् बहुकर्माऽपि ह्यन्तवत्फलमाप्नुयात् ।
यदेव विद्यया कुर्यात्तदेव ह्यतिवीर्यवत्' ॥ १६१३ ॥

इत्यादिवाक्यसामर्थ्यात्तारतम्यं विमुक्तिगम् ।
न चात्रोपासकस्यैव फलमक्षयमुच्यते ॥ १६१४ ॥

न हि ज्ञानं विना क्वापि फलस्याक्षयता भवेत् ।
ज्ञानद्वारेण चेत्तस्य नास्मत्पक्षप्रतीपता ॥ १६१५ ॥

ज्ञानोत्तरस्यैवमपि ह्यक्षयत्वं न चान्यथा ।
पूर्वभाविशुभानां हि ज्ञानेनैव कृतार्थता ॥ १६१६ ॥

प्रारब्धानां तु भोगेन तज्ज्ञानोत्तरकर्मणाम् ।
मुक्तावनुप्रवेशः स्यादन्यथा तत्कृतिर्न हि ॥ १६१७ ॥

ज्ञानात्पूर्वाणि कर्माणि शुभानि ज्ञानसिद्धये ।
अकाम्यानि निषिद्धानि ज्ञानरोधाय भुक्तये ॥ १६१८ ॥

योग्यताया बलाद्यच्च शुभबाहुल्यमादितः ।
ज्ञानबाहुल्यमेवैतत् कुर्यान्नान्यस्य कारणम्  ।। १६१९ ।।

[मोक्षसाधनज्ञानस्य भक्तिभागत्वनिरूपणम्]

ज्ञानस्य भक्तिभागत्वाद्भक्तिर्ज्ञानमितीर्यते ।
ज्ञानस्यैव विशेषो यद्भक्तिरित्यभिधीयते  ।। १६२० ।।

परोक्षत्वापरोक्षत्वे विशेषौ ज्ञानगौ यथा ।
स्नेहयोगोऽपि तद्वत्स्याद्विशेषो ज्ञानगोचरः  ।। १६२१ ।।

इत्यभिप्रायतः प्रायो ज्ञानमेव विमुक्तये ।
वदन्ति श्रुतयः सोऽयं विशेषोऽपि ह्युदीर्यते  ।। १६२२ ।।

भक्तिर्ज्ञानमिति क्वापि .... .......

[द्वेषस्य सन्मुक्तिसाधनत्वनिरासः]

....... ..... न हि द्वेषयुता दृशिः ।
पुरुषार्थाय भवति सर्वश्रुतिविरोधतः  ।। १६२३ ।।

'चेतनस्य द्वयं भोग्यं संसारो मुक्तिरेव च ।
संसारस्त्रिविधस्तत्र स्वर्गो मध्यमधस्तथा  ।। १६२४ ।।

मुक्तिश्च द्विविधा तत्र सुखं नित्यं तथापरम् ।
नित्यदुःखमिति ज्ञेयं साधनं संसृतावपि  ।। १६२५ ।।

काम्यं कर्म निषिद्धं च साज्ञानमिति निश्चयः ।
द्वेषो भक्तिश्च मुक्तौ तु मुक्तिद्वयविधायकम्'  ।। १६२६ ।।

इति पैङ्गिश्रुतेर्द्वेषो नैव सन्मुक्तिकारणम् ।
असन्मुक्तेः कारणं च मुक्तावित्यत्र केशवः ।। १६२७ ।।

मुक्तिशब्दोदितो मोक्षं स्वभक्तानां करोति यत् ।
द्वेषतोऽपि विमुक्तिश्चेत् महातात्पर्यरोधनम् ।। १६२८ ।।

भक्त्या प्रसन्नतो देवान्मुक्तिरित्येव तद्गुणान् ।
वदन्ति श्रुतयः सर्वाः पुराणान्यागमा अपि ।। १६२९ ।।

यदि द्वेषेण मुक्तिः स्याद्भक्तव्यो दोषसञ्चयः ।
स्मर्तव्यो भगवान्नित्यमित्यर्थेनैव हि क्वचित् ।। १६३० ।।

द्वेषादिव गुणानाह पुराणे क्रुद्धवाक्यवत् ।
यथा क्रुद्धः पिता पुत्रं मरेत्याक्षेपपूर्वकम् ।। १६३१ ।।

प्रोक्तस्यान्यस्य कृत्यर्थं वदत्येवं पुराणगम् ।
वाक्यं श्रुतिविरोधेन स्वविरोधेन चाञ्जसा ।। १६३२ ।।

बह्वागमविरोधाच्च न द्वेषान्मुक्तिवाचकम् ।
'तमो द्वेषेण संयान्ति भक्त्या मुक्तिं तथैव च ।। १६३३ ।।

विष्णौ विष्णुप्रसादेन विलोमत्वेन चाञ्जसा' ।
इति षाड्गुण्यवचनमप्युक्तार्थनियामकम् ।। १६३४ ।।

महातात्पर्यरोधेन कथं वाक्यं प्रमाणताम् ।
याति सर्वार्थरूपं हि महातात्पर्यमिष्यते ।। १६३५ ।।

वाचकत्वं हि तात्पर्यं यदर्था अखिला रवाः ।
सोऽर्थः कथं परित्याज्य एकशब्दस्य संशये ।। १६३६ ।।

अतो विज्ञानभक्तिभ्यां पुरुषार्थः परो भवेत् ।

[भक्तेः परमपुरुषार्थसाधकत्वे प्रमाणानि]

'यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ।। १६३७ ।।

तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः' ।
'भक्त्या ज्ञानं ततो भक्तिस्ततो दृष्टिस्ततश्च सा ।। १६३८ ।।

ततो मुक्तिस्ततो भक्तिः सैव स्यात्सुखरूपिणी' ।
'भक्त्या प्रसन्नो भगवान् दद्याज्ज्ञानमनाकुलम् ।। १६३९ ।।

तयैव दर्शनं यातः प्रदद्यान्मुक्तिमेतया' ।
'नाहं वेदैर्न तपसा न दानेन न चेज्यया ।। १६४० ।।

शक्य एवंविधो द्रष्टुं दृष्टवानसि मां यथा ।
भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन ।। १६४१ ।।

ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप' ।
इत्यादिवाक्यतश्चैव सोऽयमुक्तार्थ ईयते ।। १६४२ ।।

[द्वेषस्य न भगवत्प्रसादसाधनत्वम्]

न च प्रसादमाप्नोति द्वेषाद्भक्त्या तमाप्नुयात् ।
इति दृष्टानुसारित्वमप्यस्मिन्नर्थ ईयते ।। १६४३ ।।

'ये पृथग्विहिता विष्णोर्गुणा वेदेन सादरम् ।
त एव दृष्टवैलोम्यादङ्गीकार्या न चापरम् ।। १६४४ ।।

अन्यदृष्टानुसारेण वासुदेवेऽपि गृह्यते ।
दोषाभावाश्च ये वेदैरुदिता अविहाय तान् ॥ १६४५ ॥

अनुक्ता अपि च ग्राह्या महातात्पर्यशक्तितः' ।
एवं बृहत्संहितावाक् सिद्धान्तो हि तदीरितः ॥ १६४६ ॥

**[न केवलं विष्णौ किन्तु तद्भक्तेषु रमादिषु तारतम्येन क्रियमाणा भक्तिरपि भगवद्भक्तिरेव]**

तारतम्येन तद्भक्तेष्वपि भक्तिर्विनिश्चयात् ।
कर्तव्यैषापि तद्भक्तिर्लोकवेदानुसारतः ॥ १६४७ ॥

यो हि भक्तः प्रधाने स्यात् तदीयेष्वपि भक्तिमान् ।
दृश्यतेऽसौ नियमतो विपरीतो विपर्यये ॥ १६४८ ॥

व्यभिचारो यदि क्वापि भक्तिह्रासोऽत्र कल्प्यते ।
भक्तिदोषो ह्यसौ यन्न तद्भक्तेष्वपि भक्तिमान् ॥ १६४९ ॥

तारतम्येन तेष्वद्धा भक्तिर्दृष्टानुसारतः ।
विष्णुप्रसादानुसारात् कार्या दोषस्तदन्यथा ॥ १६५० ॥

स्वप्रीत्यनुसृतौ प्रीतिर्लोकेऽप्यद्धैव दृश्यते ।
तारतम्यपरिज्ञानमप्येतेनैव साधनम् ॥ १६५१ ॥

**[उक्तार्थे आगमः]**

'लक्ष्मीविरिञ्चवाणीशगिरिजेन्द्रा गिरां पतिः ।
सूर्यादयश्च क्रमशो भगवत्प्रीतिगोचराः ॥ १६५२ ॥

तेषु भक्तिः क्रमेणैव कार्या नित्यं मुमुक्षुभिः ।
सर्वेऽपि गुरवश्चैते पुरुषस्य सदैव हि    ।। १६५३ ।।

तस्मात्पूज्याश्च नम्याश्च ध्येयाश्च परितो हरिम् ।'
इति षाड्गुण्यवचनादप्येषोऽर्थोऽवसीयते    ।। १६५४ ।।

'हरिभक्तिः क्रमेणैव तदीयेषु हरिस्मृतिः ।
हरिस्तुतिस्तत्स्मृतिश्च तत्स्तुतिर्हरिपूजनम्    ।। १६५५ ।।

तत्पूजा विहितात्याग इति मुक्तेः क्रमेण हि ।
नियमात्साधनान्येव नित्यसाध्यानि चाखिलैः' ।। १६५६ ।।

इति प्रवृत्तवचनं साधनस्य विनिर्णये ।
प्रवृत्ते पञ्चरात्रे हि साधनस्य विनिर्णयः    ।। १६५७ ।।

[हरिद्वेषो न कार्यः, हरौ तद्भक्तेषु च तारतम्यानुसारेण भक्तिः कार्या इत्यत्र युक्त्यन्तराणि]

हरिद्वेषो न शुभदः सद्वेषत्वाद्यथा गुरोः ।
क्रमाद्भक्तिर्हरिप्रीतिकारणं तत्प्रियोपगा    ।। १६५८ ।।

भक्तिर्यतो यथा स्वस्मिन्नित्याद्या युक्तिरत्र च ।
प्राधान्यतारतम्यानुसारिणी भक्तिरुत्तमा    ।। १६५९ ।।

प्रीतिदैव हरेर्यस्माद्भक्तिः सा स्वोपगा यथा ।
इति वा ......... .... ........

फलश्रुत्यधिकरणम् - ७

।। स्वामिनः फलश्रुतेरित्यात्रेयः ॐ ।। ३-४-४४ ।।

[जीवेन अनुष्ठितस्य शुभकर्मणः फलं स्वामित्वात् देवानां तारतम्येन भवति, अशुभकर्मणः फलं तु न भवति ।]

.... .... ज्ञानकर्मादिफलं चैषु क्रमोपगम् ।। १६६० ।।

स्वातन्त्र्यतारतम्येन फलं हि फलिनां भवेत् ।
अशुभं त्वशुभेऽप्येषां स्वातन्त्र्यात्प्रीतितो हरेः ।। १६६१ ।।

आज्ञया चान्यगं नैव भोगाय भवति क्वचित् ।
'पुण्यमेवामुमाप्नोति न देवान् पापमाप्नुयात्' ।। १६६२ ।।

इत्यादिश्रुतयो मानमुक्तेऽर्थे युक्तयोऽपराः ।
'उपासनाधर्मफलं यतो देहान्तरे स्थितिः ।। १६६३ ।।

वासुदेवाज्ञया चैव पूर्वकर्मानुसारतः ।
प्रेरयन्ति हि ते जीवान् पुण्यपापेषु नित्यशः ।। १६६४ ।।

अरागद्वेषतश्चैव कथं दोषानवाप्नुयुः ।
हर्याज्ञाकरणादेव पुण्यमेभिरवाप्यते ।। १६६५ ।।

हरिपूजेति चोद्देशात् कथं न शुभमाप्नुयुः ।
अतो यथाक्रमं धर्मज्ञानयोः फलमञ्जसा ।। १६६६ ।।

सर्वप्राणिगतं देवाः प्राप्नुवन्त्याविरिञ्चतः ।
देवा एव हि देवानां विशिष्टा विनियामकाः ।। १६६७ ।।

ब्रह्मा त्वखिलदेवानां नराणां च नियामकः ।
अतः सर्वगुणानेष प्राप्नोत्यधिकमन्यतः    ।। १६६८ ।।

द्रव्यस्वातन्त्र्यविज्ञानप्रयत्नैरधिकं फलम् ।
देवानामन्यगं चापि तेषु हि ब्रह्मणोऽधिकम्'    ।। १६६९ ।।

बृहत्तन्त्रोदितं वाक्यं हरिणा फलनिर्णये ।
लोकेऽप्येतादृशगुणैः फलाधिक्यं हि दृश्यते    ।। १६७० ।।

[जीवानुष्ठितस्य अशुभस्य कर्मणः फलं
असुराणां तारतम्येन भवति]

एवं च कलिपूर्वाणामसुराणां महत्फलम् ।
अशुभेषु सदैव स्यान्मिथ्याज्ञानादिकेषु हि    ।। १६७१ ।।

'शुभाशुभफलं देवा असुराश्च समाप्नुयुः ।
क्रमेणैव यथाशक्ति यथा ये ये प्रयोजकाः    ।। १६७२ ।।

प्रेरका अपि पापानां न देवाः पापमाप्नुयुः' ।
इति प्रकाशिकायां हि प्रोवाच हरिरञ्जसा    ।। १६७३ ।।

।। ॐ आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रियते ॐ
।। ३-४-४५ ।।

।। ॐ सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो
विध्यादिवत् ॐ ।। ३-४-४६ ।।

[कर्तुः जीवस्यापि शुभाशुभफलं स्यादेव]

'यद्यप्येवं सुराणां च दैत्यानां च महत्फलम् ।
शुभाशुभेभ्य एवं च कर्तुश्च स्याद्यथोदितम् ॥ १६७४ ॥

तस्मान्निरयमानुष्यस्वर्गमुक्त्युपभोगिनः ।
मानुषोत्तममारभ्य देवास्तु निरयं विना ॥ १६७५ ॥

असुरास्तु विना मुक्तिं तमोऽन्धमपि चाप्नुयुः' ।
इति तत्वविवेकोक्तं स्वयं भगवतो वचः ॥ १६७६ ॥

॥ इति फलश्रुत्यधिकरणम् ॥ ७ ॥

॥ कृत्स्नभावाधिकरणम् ॥

**॥ ॐ कृत्स्नभावात्तु गृहिणोपसंहारः ॐ ॥ ३-४-४७ ॥**

**॥ ॐ मौनवदितरेषामप्युपदेशात् ॐ ॥ ३-४-४८ ॥**

॥ इति कृत्स्नभावाधिकरणम् ॥ ८ ॥

**अन्वयाधिकरणम् - ९**

**॥ ॐ अनाविष्कुर्वन्नन्वयात् ॐ ॥ ३-४-४९ ॥**

[शिष्याः, ज्ञानदा आचार्याश्च तारतम्यानुसारेण ज्ञानदानफलं लभन्ते]

ज्ञानदा अपि चाचार्या विशेषात्फलमाप्नुयुः ।
'मुक्तावष्टगुणं शिष्याद्गुरुराप्नोति शोभनम् ॥ १६७७ ॥

तद्गुरुर्द्विगुणं तस्मात्सार्धं तावत्ततोऽपरे ।
देवाः सहस्रगुणितं क्रमात्तस्माद्यथोत्तरम्   ।। १६७८ ।।

ब्रह्मा महौघगुणितमेवं फलविनिर्णयः' ।
इत्याह भगवांश्छास्त्रे गुरुवृत्ताभिधे स्वयम्   ।। १६७९ ।।

युक्तं च तन्न गोदाता गोमात्रफलमाप्नुयात् ।
'य इदं परमं गुह्यं मद्भक्तेष्वभिधास्यति   ।। १६८० ।।

भक्तिं मयि परां कृत्वा मामेवैष्यत्यसंशयः ।
न च तस्मान्मनुष्येषु कश्चिन्मे प्रियकृत्तमः   ।। १६८१ ।।

भविता न च मे तस्मादन्यः प्रियतमो भुवि' ।
इत्याह भगवानेवमपि पात्रमपेक्ष्यते   ।। १६८२ ।।

।। इति अन्वयाधिकरणम् ।। ९ ।।

## ऐहिकाधिकरणम् - १०

**।। ॐ ऐहिकमप्रस्तुतप्रतिबन्धे तद्दर्शनात् ॐ ।।३-४-५०।।**

।। इति ऐहिकाधिकरणम् ।। १० ।।

## मुक्तिफलाधिकरणम् - ११

**।। ॐ एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः ॐ ।। ३-४-५१ ।।**

।। इति मुक्तिफलाधिकरणम् ।। ११ ।।

**[प्रारब्धस्य कर्मणः अविरोधेनैव ज्ञानं दृष्टफलं च, प्रारब्धकर्मप्रतिबन्धाभावे यस्मिन् देहे ज्ञानमुत्पन्नं तत्पातानन्तरमेव मुक्तिः ।]**

एवमेवाविरोधेन प्रारब्धस्यैव कर्मणः ।
ज्ञानं दृष्टफलं प्रोक्तं मुक्तिश्चैवेह लभ्यते ॥ १६८३ ॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीब्रह्मसूत्रानुव्याख्याने तृतीयाध्यायस्य चतुर्थः पादः ॥

॥ तृतीयाध्यायः समाप्तः ॥

***

# चतुर्थाध्यायस्य प्रथमः पादः

**[एतदध्यायप्रतिपाद्यनिरूपणम्, प्रथमं कैश्चित् सूत्रैः साधनस्यैव चिन्ता]**

समन्वयाविरोधाभ्यां सिद्धे वस्तुनि साधने ।
विचारितेष्वशेषेषु साधनेषु विशेषतः ॥ १६८४ ॥

नित्यशः कार्यमत्यन्तमवश्यम्भावि साधनम् ।
चिन्त्यते प्रथमं तत्र ............

## आवृत्त्यधिकरणम् - १

**॥ ॐ आवृत्तिरसकृदुपदेशात् ॐ ॥ ४-१-१ ॥**

**॥ ॐ लिङ्गाच्च ॐ ॥ ४-१-२ ॥**

**[श्रवणादेरावृत्तेरावश्यकत्वनिरूपणम्]**

...... ..... श्रवणादिसकृत्क्रिया ॥ १६८५ ॥

आवृत्तिर्वेति सन्देहे कर्तव्याऽऽवृत्तिरेव हि ।
उपदेशोऽतत्त्वमसीत्यादि ह्यसकृदेव यत् ॥ १६८६ ॥

''लिङ्गाल्लातव्यतः पूर्वमृजोर्ब्रह्मत्वतः शतात् ।
शुश्रावोग्रतपा नाम योग्यो रुद्रपदस्य यः ॥ १६८७ ॥

सार्धं परार्धं विष्णोस्तु गुणान् भक्त्या सदोद्यतः ।
तत्रिभागमुपासां च चक्रे सम्भृतमानसः ॥ १६८८ ॥

दशमन्वन्तरं शक्रपदयोग्यो गरुत्मतः ।
पदयोग्यात्सुमनसः सुनन्दो नाम चाशृणोत् ॥ १६८९ ॥

उपासां चक्र उद्युक्तो मन्वन्तरचतुष्टयम् ।
सूर्याचन्द्रमसोश्चैव पदयोग्यौ सुतेजसौ ।। १६९० ।।

सुरूपः शान्तरूपश्च मन्वन्तरचतुष्टयम् ।
अशृण्वतां सुमनसो मन्वन्तरमुपासताम् ।। १६९१ ।।

ततः प्रोक्तास्तु ते सर्वे भक्त्योग्रतपादयः ।
अपश्यन् परमं विष्णुं तत्प्रसादैधिताः सदा'' ।। १६९२ ।।

इत्युक्तं विष्णुना साक्षात् ग्रन्थे सत्तत्त्वसञ्ज्ञिते ।
।। इति आवृत्त्यधिकरणम् ।। १ ।।

## आत्माधिकरणम् - २

**।। ॐ आत्मेति तूपगच्छन्ति ग्राहयन्ति च ॐ ।।४-१-३।।**

**['आत्मा' इति मुख्यया वृत्त्या नारारणस्य नाम, विष्णुः आत्मा स्वामी इति सर्वथा उपास्यः]**

आत्मेति नाम कथितं साक्षान्नारायणस्य हि ।। १६९३ ।।

'आत्मा ब्रह्म महांस्तारः परमेशः शुचिश्रवाः ।
विष्णुर्नारायणोऽनन्त इति श्रीपतिरीर्यते' ।। १६९४ ।।

इति पैङ्गिश्रुतिश्चैव तथैव परमश्रुतिः ।
'ओमात्मा भगवान् विष्णुरात्मानन्दोऽक्षरः स्वराट्।।१६९५।।

विश्वत्राता नृसिंहोऽजो नारायण उरुक्रमः ।
अनसूया तथैवात्रेर्जज्ञे पुत्रानकल्मषान् ।। १६९६ ।।

दत्तं दूर्वाससं सोममात्मेशब्रह्मसम्भवान्' ।
इति भागवते चैव तस्मादात्मा जनार्दनः   ।। १६९७ ।।

तस्मादुपास्यो विष्णुरिति ज्ञातव्यः सज्जनैः सदा ।
तथैवोपासते सन्तस्तथैवोपदिशन्ति च   ।। १६९८ ।।

आदानार्थत्वतश्चायमात्मशब्दः पतिं वदेत् ।
स्वामी मे विष्णुरित्येव नित्यदोपास्यमञ्जसा   ।। १६९९ ।।

'स्वामी विष्णुरिति ध्यानं विशेषणविशेष्यतः ।
कर्तव्यं सर्वथैवैतन्न कथञ्चन विस्मरेत्'   ।। १७०० ।।

इति सत्तत्त्ववचनं षाड्गुण्यवचनं परम् ।
'मम स्वामी हरिर्नित्यं सर्वस्य पतिरेव च   ।। १७०१ ।।

इति ध्येयः सर्वदैव भगवान् विष्णुरव्ययः ।
।। इति आत्माधिकरणम् ।। २ ।।

### नप्रतीकाधिकरणम् - ३

## ।। ॐ न प्रतीके न हि सः ॐ ।। ४-१-४ ।।

[प्रतीकसंस्थितत्वेन विष्णुः ध्येयः न तु प्रतीकमेव विष्णुरिति]
प्रतीकविषयत्वेन न कार्या विष्णुभावना   ।। १७०२ ।।

प्रतीकं नैव विष्णुर्यन्मिथ्योपासा ह्यनर्थदा ।
योऽन्यथा सन्तमात्मेशमन्यथा प्रतिपद्यते   ।। १७०३ ।।

किं तेन न कृतं पापं चोरेणात्मापहारिणा' ।
''योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते ॥ १७०४ ॥

किं तेन न कृतं पापं चोरेणात्मापहारिणा'' ।
'योऽन्यथैव स्थितं विष्णुमन्यथा प्रतिपद्यते ॥ १७०५ ॥

किं तेन न कृतं पापं चोरेण ब्रह्महारिणा' ।
'स्वात्मानं प्रतिमां वापि देवतान्तरमेव वा ॥ १७०६ ॥

चेतनाचेतनं वान्यत् ध्यायेद्यः केशवस्त्विति ।
किं तेन न कृतं पापं चोरेणेशापहारिणा' ॥ १७०७ ॥

'योऽन्यद्विष्णुरिति ध्यायेज्ज्ञानीयाद्वा हरिं तथा ।
अन्धे तमसि मज्जेत् स यत्र नैवोत्थितिः क्वचित्'॥ १७०८ ॥

'योऽन्यद्विष्णुरिति ध्यायेद्विष्णुरन्यदिति स्म वा ।
अन्यथाध्यानदोषेण सोऽन्धे तमसि मज्जति' ॥ १७०९ ॥

'योऽन्यद्विष्णुरिति ध्यायेद्विष्णुरन्यदिति स्म वा ।
महातमसि मग्नस्य तस्य नैवोत्थितिः क्वचित्' ॥ १७१० ॥

'यत्किञ्चिदन्यथासंस्थमन्यथाध्यातमञ्जसा ।
ध्यातुर्महादोषकरं किमु सर्वेश्वरो हरिः' ॥ १७११ ॥

'यत्किञ्चिदन्यथासंस्थमन्यथाध्यातमञ्जसा ।
महादोषकरं विष्णुः किमु सर्वेश्वरेश्वरः' ॥ १७१२ ॥

'यत्किञ्चिदन्यथासंस्थमन्यथाध्यात(ज्ञात)मञ्जसा ।
अनर्थकारणं लोके किमु सर्वेश्वरेश्वरः ॥ १७१३ ॥

न किञ्चिदन्यथा ज्ञेयं ध्येयं वा तेन कुत्रचित् ।
किमु सर्वोत्तमो विष्णुर्ज्ञेयो नीचतया क्वचित् ॥ १७१४ ॥

तस्माद्वस्तु यथारूपं ज्ञेयं ध्येयं च सर्वदा ।
कारणं पुरुषार्थस्य नान्यथा भवति क्वचित्' ॥ १७१५ ॥

इति श्रुतिपुराणोक्तिबलतो न प्रतीकता ।
ध्येया विष्णोः क्वचिद्यस्मान्मिथ्याज्ञानमनर्थदम् ॥ १७१६ ॥

इत्यभिप्रेत्य 'न हि स' इत्याह भगवान् प्रभुः ।
प्रतीकसंस्थितत्वेन ध्येयो विष्णुर्न चान्यथा ॥ १७१७ ॥

॥ इति नप्रतीकाधिकरणम् ॥ ३ ॥

## ब्रह्माधिकरणम् - ४

## ॥ ॐ ब्रह्मदृष्टिरुत्कर्षात् ॐ ॥ ४-१-५ ॥

[विष्णुः ब्रह्मेति ध्येयः, ब्रह्मशब्दप्रवृत्तिनिमित्तं पूर्णत्वम् – उत्कर्षः]

ब्रह्मेति च सदा ध्येयो भगवान् विष्णुरञ्जसा ।
उत्कृष्टो ब्रह्मशब्दार्थः पूर्णत्वं ब्रह्मता यतः ॥ १७१८ ॥

आधिव्याधिनिमित्तेन विक्षिप्तमनसोऽपि तु ।
ध्येयैव ब्रह्मता नित्यं विष्णोर्भक्त्या निरन्तरम् ॥ १७१९ ॥

इति प्रकाशिकायां च वचनं विष्णुनेरितम् ।

**['आत्मेति तु' इति सूत्रे ईशस्य जीवत्वं प्रतिपाद्यत इत्यपव्याख्याननिरसनम्]**

नात्मेति सूत्रमीशस्य जीवत्वप्रतिपादकम् ॥ १७२० ॥

आत्मशब्दं यतो हेतुं कृत्वा जीवं न्यवारयत् ।
स्वशब्दात्प्राणभृच्चैव नोक्त इत्येव वेदराट् ॥ १७२१ ॥

यद्यात्मशब्दो जीवेऽपि कथं स विनिवारयेत् ।
आत्मशब्दोदितस्तस्माद्विष्णुरेव न चापरः ॥ १७२२ ॥

'आत्मब्रह्मादयः शब्दास्तमृते विष्णुमव्ययम् ।
न वदन्ति यतो नाम्ना क्वापि तैर्गुणपूर्णता' ॥ १७२३ ॥

नारायणाध्यात्मगतमिति यद्वैष्णवं वचः ।
यदि जीवेशयोर्वेदपतिरैक्यं च मन्यते ॥ १७२४ ॥

आत्मशब्दं कथं तस्मान्निवारयति युक्तितः ।
भेदस्य व्यपदेशं च स्थितिं चादनमेव च ॥ १७२५ ॥

भेददार्ढ्ये हेतुमाह तात्पर्यं स जगत्पतिः ।
व्यावहारिकभेदश्चेत् क्वासावव्यावहारिकः ॥ १७२६ ॥

व्यावहारिकमित्येव वचनं व्यावहारिकम् ।
उत नेति विकल्पे तु यदि स्याद्व्यावहारिकम् ॥ १७२७ ॥

तस्यापि बाध्यता चेत् स्यात् भेदः स्यात् पारमार्थिकः ।
अव्यावहारिकत्वं चेद्भेदोऽयं सत्यतां गतः ॥ १७२८ ॥

एकस्यासत्यतायां हि द्वयोरेव विरुद्धयोः ।
अन्यस्य सत्यतैव स्यादिति केन निवार्यते  ॥ १७२९ ॥

असत्यं नोक्तमित्युक्ते सत्यमुक्तमिति प्रजाः ।
जानन्त्युक्तं तु नो सत्यमित्युक्तेऽसत्यतामपि  ॥ १७३० ॥

न स्वप्नेऽपि द्वयं मिथ्या तत्रैकं सत्यमेव हि ।
भावाभावावुभौ तत्र कथं मिथ्या भविष्यतः  ॥ १७३१ ॥

भावस्य हि निषेधे तु नाभावस्य निषेधनम् ।
स्ववाचोऽसत्यता चेत्स्यात् तस्माद्भेदस्य सत्यता॥ १७३२ ॥

तस्माज्जीवेशयोर्भेद उक्तन्यायेन गम्यते ।

**[ 'न प्रतीके' इत्यादिसूत्रस्य 'प्रतीकेषु जीवमतिं न बध्नीयात्' इति अपव्याख्याननिरसनम् ]**

एतस्मादात्मशब्दोऽयं परमात्माभिधा भवेत्  ॥ १७३३ ॥

प्रतीकविषयत्वेन विष्णुदृष्टिर्न तद्भवेत् ।
प्रतीके विष्णुरित्येव तस्मात्कार्या ह्युपासना  ॥ १७३४ ॥

न च विष्णुः प्रतीकं यत्तस्मात् ..........

**[ 'ब्रह्मदृष्टिः' इत्यादिसूत्रस्य 'प्रतीके ब्रह्मदृष्टिः कार्या' इत्यपव्याख्याननिरसनम् ]**

........... ........ ..... नात्मेत्युपासना ।
इति पक्षो यदा ब्रह्मदृष्टिश्चात्र विरुध्यते  ॥ १७३५ ॥

स नेति युक्तिस्तत्रापि समेत्युक्तविरुद्धता ।
यद्यप्युत्कर्षमात्रेण ह्यतद्भावेऽप्युपासना ॥ १७३६ ॥

उत्कर्ष आत्मनोऽपि स्याच्चेतनत्वादचेतनात् ।
तस्मादतत्त्वं नोपास्यमिति वेदविदां मतम् ॥ १७३७ ॥

उत्कर्षाद्ब्रह्मताध्याने यदि स्यात्फलमञ्जसा ।
ब्रह्मणो नीचताज्ञानादनर्थः किं न जायते ॥ १७३८ ॥

अचेतनस्य ब्रह्मत्वध्याने तुष्टिर्न हि क्वचित् ।
नीचस्य स्वात्मताज्ञानात् कुप्यति ब्रह्म लोकवत् ॥१७३९॥

चण्डालो नृप इत्युक्ते नृपश्चण्डाल इत्यपि ।
को विशेषः परिज्ञाते नृपेण स्यात्कथञ्चन ॥ १७४० ॥

पुरतो नरदेवस्य चण्डालो यदि पूज्यते ।
राजवत्किं न कोपः स्याद्राज्ञो लोकेऽभिपश्यति ॥ १७४१ ॥

राज्ञस्तु पुरतः प्रोक्ते चण्डाले नृप इत्यपि ।
आत्मानं स इति प्रोक्तमितिवद्ध्येव कुप्यति ॥ १७४२ ॥

अभेदेनैतयोर्ध्याने को विशेषो वचस्यपि ।
अयं राजा त्वमित्युक्ते चण्डालेऽथ नृपेऽपि च ॥ १७४३ ॥

चण्डाल इति तु प्रोक्ते सममेव हि दूषणम् ।
ध्यातेऽप्येकस्य तद्भावे तद्भावोऽन्यस्य किं न तत् ॥१७४४॥

न चैव तदविज्ञातं सर्वज्ञब्रह्मणा क्वचित् ।
तस्मादपेशलं सर्वमन्यस्य ब्रह्मतावचः ॥ १७४५ ॥

तस्माद्यथोक्तमार्गेण ब्रह्मोपास्यं मुमुक्षुभिः ।

॥ इति ब्रह्माधिकरणम् ॥ ४ ॥

**आदित्याधिकरणम् - ५**

**॥ ॐ आदित्यादिमतयश्चाङ्ग उपपत्तेः ॐ ॥ ४-१-६ ॥**

॥ इति आदित्याधिकरणम् ॥ ५ ॥

**आसीनाधिकरणम् - ६**

**॥ ॐ आसीनः सम्भवात् ॐ ॥ ४-१-७ ॥**

**॥ ॐ ध्यानाच्च ॐ ॥ ४-१-८ ॥**

**॥ ॐ अचलत्वं चापेक्ष्य ॐ ॥ ४-१-९ ॥**

**॥ ॐ स्मरन्ति च ॐ ॥ ४-१-१० ॥**

**॥ ॐ यत्रैकाग्रता तत्राविशेषात् ॐ ॥ ४-१-११ ॥**

॥ इति आसीनाधिकरणम् ॥ ६ ॥

**आ प्रायणाधिकरणम् - ७**

**॥ ॐ आ प्रायणात्तत्रापि हि दृष्टम् ॐ ॥ ४-१-१२ ॥**

॥ इति आ प्रायणाधिकरणम् ॥ ७ ॥

## तदधिगमाधिकरणम् - ८

**।। ॐ तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् ॐ ।। ४-१-१३ ।।**

[**कर्मनाशाख्यज्ञानफलनिरूपणम्**]

तथोपास्याञ्जसा दृष्टं ब्रह्म पापं च भस्मसात् ।। १७४६ ।।

करोति निखिलं पूर्वं पाश्चात्यस्याप्यसङ्गताम् ।
करोति ....... ...........

**।। ॐ इतरस्याप्येवमसंश्लेषः पाते तु ॐ ।। ४-१-१४ ।।**

..... तद्विषश्चैवं पुण्यनाशोऽप्यसङ्गता ।। १७४७ ।।

**।। ॐ अनारब्धकार्ये एव तु पूर्वे तदवधेः ॐ ।।४-१-१५।।**

**।। ॐ अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् ॐ ।। ४-१-१६ ।।**

**।। ॐ अतोऽन्यदपीत्येकेषामुभयोः ॐ ।। ४-१-१७ ।।**

**।। ॐ यदेव विद्ययेति हि ॐ ।। ४-१-१८ ।।**

[**'यदेव विद्यया' इति सूत्रस्य 'तच्छ्रुतेः' इति सूत्रेण पुनरुक्तिपरिहारः**]

यदेव विद्ययेत्यत्र पूर्वोक्ताद्धि विशिष्यते ।
पूर्वं स्वर्गादिलब्ध्यर्थं वीर्यवत्त्वेन चोदितम् ।। १७४८ ।।

कर्म विद्यायुतं पश्चान्मोक्षे वीर्यप्रदं त्विति ।

**।। ॐ भोगेन त्वितरे क्षपयित्वाथ सम्पत्स्यते ॐ ।। ४-१-१९ ।।**

**[प्रारब्धकर्मानन्तरमेव ब्रह्मद्विट्ब्रह्मदर्शिनोः तमोमोक्षौ]**

ततो भोगेन पुण्यं च क्षपयित्वेतरत्तथा    ।। १७४९ ।।

ब्रह्मद्विट् ब्रह्मदर्शी च तमोमोक्षाववाप्नुतः ।

**[प्रारब्धकर्मणामानन्त्येव भोगेन तन्नाशोऽशक्य इति शङ्कापरिहारः]**

''ब्रह्मणां शतकालात्तु पूर्वमारब्धसङ्क्षयः    ।। १७५० ।।

ब्रह्मणस्त्वेव तावत्त्वं पश्चाच्छद्ब्रह्मणस्तथा ।
रुद्रस्य विंशदेव स्यादिन्द्रस्यार्कादिके दश    ।। १७५१ ।।

अन्येषां ब्रह्ममात्रस्य त्वन्त आरब्धसङ्क्षयः ।
ब्रह्मणैव सहातश्च परं नारायणं व्रजेत्''    ।। १७५२ ।।

इति सत्तत्त्ववचनं स्वयं भगवतोदितम् ।

।। इति तदधिगमाधिकरणम् ।। ८ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते ब्रह्मसूत्रानुव्याख्याने चतुर्थाध्यायस्य प्रथमः पादः ।।

***

## तदधिगमाधिकरणम् - ८

### ।। ॐ तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् ॐ ।। ४-१-१३ ।।

[कर्मनाशाख्यज्ञानफलनिरूपणम्]

तथोपास्याञ्जसा दृष्टं ब्रह्म पापं च भस्मसात् ।। १७४६ ।।

करोति निखिलं पूर्वं पाश्चात्यस्याप्यसङ्गताम् ।
करोति ....... ...........

### ।। ॐ इतरस्याप्येवमसंश्लेषः पाते तु ॐ ।। ४-१-१४ ।।

..... तद्विषश्चैवं पुण्यनाशोऽप्यसङ्गता ।। १७४७ ।।

### ।। ॐ अनारब्धकार्ये एव तु पूर्वे तदवधेः ॐ ।।४-१-१५।।

### ।। ॐ अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् ॐ ।। ४-१-१६ ।।

### ।। ॐ अतोऽन्यदपीत्येकेषामुभयोः ॐ ।। ४-१-१७ ।।

### ।। ॐ यदेव विद्ययेति हि ॐ ।। ४-१-१८ ।।

['यदेव विद्यया' इति सूत्रस्य 'तच्छ्रुतेः' इति सूत्रेण पुनरुक्तिपरिहारः]

यदेव विद्ययेत्यत्र पूर्वोक्ताद्धि विशिष्यते ।
पूर्वं स्वर्गादिलब्ध्यर्थं वीर्यवत्त्वेन चोदितम् ।। १७४८ ।।

कर्म विद्यायुतं पश्चान्मोक्षे वीर्यप्रदं त्विति ।

**।। ॐ भोगेन त्वितरे क्षपयित्वाथ सम्पत्स्यते ॐ ।। ४-१-१९ ।।**

[**प्रारब्धकर्मानन्तरमेव ब्रह्मद्विट्ब्रह्मदर्शिनोः तमोमोक्षौ**]

ततो भोगेन पुण्यं च क्षपयित्वेतरत्तथा ।। १७४९ ।।

ब्रह्मद्विट् ब्रह्मदर्शी च तमोमोक्षाववाप्नुतः ।

[**प्रारब्धकर्मणामानन्त्येव भोगेन तन्नाशोऽशक्य इति शङ्कापरिहारः**]

''ब्रह्मणां शतकालात्तु पूर्वमारब्धसङ्क्षयः ।। १७५० ।।

ब्रह्मणस्त्वेव तावत्त्वं पश्चाशद्ब्रह्मणस्तथा ।
रुद्रस्य विंशदेव स्यादिन्द्रस्यार्कादिके दश ।। १७५१ ।।

अन्येषां ब्रह्ममात्रस्य त्वन्त आरब्धसङ्क्षयः ।
ब्रह्मणैव सहातश्च परं नारायणं व्रजेत्'' ।। १७५२ ।।

इति सत्तत्त्ववचनं स्वयं भगवतोदितम् ।

।। इति तदधिगमाधिकरणम् ।। ८ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते ब्रह्मसूत्रानुव्याख्याने चतुर्थाध्यायस्य प्रथमः पादः ।।

***

## चतुर्थाध्यायस्य द्वितीयः पादः

[**प्रथमपादोक्तं कर्मनाशाख्यं फलं देवमनुष्यसाधारणम्, द्वितीयपादप्रतिपाद्या देहादुत्क्रान्तिः तृतीयपाद-प्रतिपाद्यार्चिरादिमार्गश्च देवानां प्रायेण न भविष्यतः**]

देवानां च मनुष्याणामेतावत्सममेव हि ॥ १७५३ ॥
उत्क्रान्तिमार्गो देवानां न प्रायेण भविष्यतः ।

[**पादचतुष्टयविषयनिरूपणम्**]

कर्मक्षयस्तथोत्क्रान्तिर्मार्गो भोगश्चतुष्टयम् ॥ १७५४ ॥
फलं मोक्ष इति प्रोक्तं क्रमात्पादेषु चोदितम् ।

[**देवानां मार्गस्य उत्क्रान्तेश्च स्वरूपनिरूपणम्**]

स्रष्टृष्वेव च सृज्यानां प्रवेशो ब्रह्मणो लये ॥ १७५५ ॥
देवानां मार्ग उद्दिष्टो नार्चिरादिर्न चोत्क्रमः ।
स्रष्टुस्तु ग्रासभूतस्य देहस्तत्र लयं व्रजेत् ॥ १७५६ ॥
यतः सृज्यस्य देवस्य नैवोत्क्रान्तिस्ततो भवेत् ।
लयाच्चैवार्चिरादीनां लोकानामपि सर्वशः ॥ १७५७ ॥
कथं मार्गो भवेत्तेषां विशतामुत्तरं स्वतः ।
जातानां मानुषे लोके देवानां तु कदाचन ॥ १७५८ ॥
उत्क्रान्तिमार्गौ भवतो न तदा मुक्तिरिष्यते ।
अन्येषामपि साक्षात्तु मुक्तिः प्राप्यापि तं हरिम् ॥ १७५९ ॥

सहैव ब्रह्मणा भूयादिति शास्त्रस्य निर्णयः ।

[उक्तार्थे श्रुतिपुराणोक्तयः]

'क्ष्माऽम्भोऽनलानिलवियन्मनइन्द्रियार्थ-
भूतादिभिः परिवृतः प्रतिसञ्जिघृक्षुः ।
अव्याकृतं विशति यर्हि गुणत्रयात्मा
कालं परं स्वमनुभूय परः स्वयम्भूः    ।। १७६० ।।

एवं परेत्य भगवन्तमनुप्रविष्टाः
ये योगिनो जितमरुन्मनसो विरागाः ।
तेनैव साकममृतं पुरुषं पुराणं
ब्रह्म प्रधानमुपयान्त्यगताभिमानाः    ।। १७६१ ।।

'भगवन्तमनुप्राप्ता अपि तु ब्रह्मणा सह ।
परमं मोक्षमायान्ति लिङ्गभङ्गेन योगिनः'    ।। १७६२ ।।

'प्राप्ता अपि परं देवं सहैव ब्रह्मणा पुनः ।
आनन्दव्यक्तिमायान्ति पूर्णां लिङ्गस्य भङ्गतः'  ।। १७६३ ।।

इति श्रुतिपुराणोक्तिबलाद्विज्ञायते च तत् ।

[चतुर्थपादोक्तः भोगः देवनरादिसाधारणः]

भोगस्तु सर्वदेवानां नरादीनां च विद्यते    ।। १७६४ ।।

[द्वितीयपादे देवानामुत्तरोत्तरेषु प्रवेशो प्रथमं निरूप्यते]

तत्र प्रवेशो देवानामुत्तरोत्तरतः क्रमात् ।
उच्यते देहगानां च वृत्तीनामेवमेव तु    ।। १७६५ ।।

[तत्तद्वादिभिः स्वोत्प्रेक्षामात्रेण निरूपितं
मोक्षस्वरूपं न प्रामाणिकम्]

तत्र मोक्षस्वरूपं तु वादिनः प्रतिभाश्रयात् ।
नाना वदन्ति .... ..... .......

[वादिनां मतिभेदे गुणभेदः कारणम्]

.... ...... पुंसां हि मतयो गुणभेदतः ॥ १७६६ ॥

पृथक् पृथक् प्रजायन्ते तमसैवान्यथामतिः ।
रजसा मिश्रबुद्धित्वं सत्त्वेनैव यथामतिः ॥ १७६७ ॥

[मुक्तमतिस्वरूपम्]

गुणातीता विमुक्तानां मतिः शुद्धचितिर्यतः ।
सम्यगेवाथ नित्या च तत्तन्माहात्म्ययोगतः ॥ १७६८ ॥

[श्रियः मतेः स्वरूपम्]

बहुला चातिविशदा स्पष्टा चैव श्रियो मतिः ।
महाशुद्धचितित्वेन ततोऽप्यतिमहाचितिः ॥ १७६९ ॥

[नारायणस्य मतेः स्वरूपम्]

अशेषोरुविशेषाणामतिस्पष्टतया दृशिः ।
नित्यमेकप्रकारा च नारायणमतिः परा ॥ १७७० ॥

सूर्यप्रभावदखिलं भासयन्ती निरन्तरा ।
निर्लेपा वीतदोषा च नित्यमेवाविकारिणी ॥ १७७१ ॥

**[भगवद्गताशेषविशेषविषयीकारित्वं**
**विहाय अन्यधर्मवत् लक्ष्मीज्ञानम्]**

विशेषांस्तद्गतांस्त्यक्त्वा प्रायस्तल्लक्षणा श्रियः ।
तथैव स्पष्टताभावात्तत्तन्त्रत्वात्तु केवलम्  ॥ १७७२ ॥

न तादृशी ....... ....... ......

**[लक्ष्मीमतिविशेषणानां मुक्तब्रह्ममतौ अतिदेशः]**

... ..... ब्रह्मणस्तु प्रायेणैवं श्रियो यथा ।

**[तदन्येषां मुक्तानां मतिः वृद्धिह्रासवती]**

मुक्तानां तु तदन्येषां समुद्रतरलोपमा  ॥ १७७३ ॥

अग्निज्वालावदेव स्यात्सृतिगानां दृशो भवः ।

**[गुणभेदनिमित्तं वादिनां मतिभेदनिरूपणोपसंहारः]**

एवं विधेषु ज्ञानेषु तमसा मुष्टदृष्टयः  ॥ १७७४ ॥

खद्योतसदृशात्यल्पज्ञानत्वादन्यथादृशः ।
वदन्ति वादिनो मोक्षं नानामतसमाश्रयात्  ॥ १७७५ ॥

**[जिनोदितमोक्षस्वरूपनिरूपणम्]**

आश्रित्य प्रतिभामाह जिनस्तत्रातितामसीम् ।
ज्ञानात्कर्मक्षयान्मोक्षो भवेद्देहाख्यपञ्जरात्  ॥ १७७६ ॥

पञ्जरोन्मुक्तखगवदलोकाकाशगोचरः ।
नित्यमूर्ध्वं व्रजत्येव पुद्गलो हस्तपादवान्  ॥ १७७७ ॥

इति ........... ......... ...........

[ **जिनोदितमोक्षस्वरूपनिरासः** ]

.... तत्केन मानेन मोक्षरूपं प्रदर्श्यते ।
गतिरूर्ध्वा च दुःखेता गतित्वाल्लौकिकी यथा ॥ १७७८ ॥

इत्युक्ते चानुमानैकशरणस्य किमुत्तरम् ।
अनूर्ध्वगतिता तत्र यद्युपाधिः खगस्य च ॥ १७७९ ॥

दूरोर्ध्वगमने दुःखमिति साध्यानुगो न सः ।
प्रतिसाधनरूपस्य नानुमानस्य दूषणम् ॥ १७८० ॥

उपाधिः प्रतिरूपं हि साधनं तन्न चापरम् ।
अथापि सशरीरत्वं चात्रोपाधिर्न वै भवेत् ॥ १७८१ ॥

गतित्वं यत्र देहित्वमिति यत्साधनानुगम् ।
आगमाननुसारित्वे प्रसङ्गोऽयं यतस्ततः ॥ १७८२ ॥

नापसिद्धान्तता दोषः प्रसङ्गे यदि सा भवेत् ।
तदैवातिप्रसङ्गः स्यान्न प्रसङ्गः क्वचिद्भवेत् ॥ १७८३ ॥

लोकाकाशगतित्वं चेदुपाधिः साधनानुगः ।
सोऽपीत्युक्ते वदेत्किं स तस्माद्वेदोदितो भवेत् ॥ १७८४ ॥

[ **बौद्धोक्तमोक्षस्वरूपनिरासः** ]

मोक्ष एवं स्वयं विष्णुर्यद्यपीशो ह्यशेषवित् ।
चकार सौगतमतं मोहायैव चकार यत् ॥ १७८५ ॥

असुराणामयोग्यानां वेदमार्गे प्रवर्तताम् ।
अतोऽसुराधिकारत्वान्न ग्राह्यं तन्मतं क्वचित्   ।। १७८६ ।।

चतुष्प्रकारं तच्चोक्तं शून्यं विज्ञानमेकलम् ।
अनुमेयबहिस्तत्त्वं तथा प्रत्यक्षबाह्यगम्   ।। १७८७ ।।

इति तत्र तु ये शून्यं वदन्त्यज्ञानमोहिताः ।
ते मोक्षं तादृशं ब्रूयुर्निःशङ्कं मायिनो यथा   ।। १७८८ ।।

न किञ्चिन्मुक्त्यवस्थायामात्मात्मीयमथापि वा ।
एकस्मिन् संसृतेर्मुक्ते न किञ्चिदवशिष्यते   ।। १७८९ ।।

तत्संवृत्यैव भेदोऽयं चेतनाचेतनात्मकः ।
दृश्यते संसृतेर्ध्वंसे निर्विशेषैव शून्यता   ।। १७९० ।।

न सत्त्वं नैव चासत्त्वं शून्यतत्त्वस्य विद्यते ।
न सुखत्वं न दुःखत्वं न विशेषोऽपि कश्चन   ।।१७९१।।

निर्विशेषं स्वयम्भातं निर्लोपमजरामरम् ।
शून्यं तत्त्वमसम्बाधं नानासंवृतिवर्जितम्   ।। १७९२ ।।

अशेषदोषरहितं मनोवाचामगोचरम् ।
मोक्ष इत्युच्यतेऽसद्भिर्नानासंवृतिदूषितम्   ।। १७९३ ।।

संसृत्यवस्था विज्ञेया संवृत्यैव विशिष्यते ।
स्थितया ध्वस्तया चैव संसृतिर्मोक्ष इत्यपि   ।। १७९४ ।।

केचित्तेष्वन्यथा प्राहुः संवृत्यैव त्वनेकधा ।
अवच्छिन्नं महाशून्यं नाना पुद्गलशब्दितम् ॥ १७९५ ॥

यस्य शून्यैकरसता ज्ञानात् सा त्वपगच्छति ।
स पुद्गलत्वनिर्मुक्तो महाशून्यत्वमेष्यति ॥ १७९६ ॥

संवृत्या यस्त्ववच्छिन्नो दुःखान्यनुभवत्यलम् ।
इति ... ....................... ..........

[शून्यवादिमायावादिनोः साम्यप्रदर्शनम्]

..... एवं मायिनश्चाहुरेकजीवत्ववादिनः ॥ १७९७ ॥

बहुजीवमताश्चेति माया तेषां तु संवृतिः ।
निर्विशेषत्ववाचैव शून्यं ब्रह्मेति नो भिदा ॥ १७९८ ॥

सच्चित्सुखादिकं चैव किं कुतोऽखण्डवादिनः ।
व्यावर्त्यमात्रभेदस्तु विद्यते शून्यवादिनः ॥ १७९९ ॥

अनृतादेरपोहं तु स्वयमेव हि मन्यते ।
निर्विशेषत्वतो नैव विशेषो ब्रह्मशून्ययोः ॥ १८०० ॥

प्रामाण्यादि च वेदस्य फलतः सममेव हि ।
अतत्त्वावेदकं यस्मात्प्रमाणं तेन कथ्यते ॥ १८०१ ॥

अतत्त्वावेदकत्वं यदप्रामाण्यं सतां मतम् ।
दीर्घभ्रान्तिकरी चेत् स्यादतत्त्वावेदकप्रमा ॥ १८०२ ॥

रज्जुसर्पादिविज्ञानादप्याधिक्यादमानता ।
स्यादागमस्यानिवर्त्यमहामोहप्रदत्वतः　　॥ १८०३ ॥

तलनैल्यादिविज्ञानमाकाशे मानतां व्रजेत् ।
छत्राकारत्वविज्ञानं चन्द्रप्रादेशतामितिः　　॥ १८०४ ॥

निर्भेदत्वं तु शून्यस्य तेनाप्यङ्गीकृतं सदा ।
सत्त्वासत्त्वादिधर्माणामभाव उभयोर्मतः　　॥ १८०५ ॥

न हि सत्प्रतियोगित्वं शून्यत्वं तेन चेष्यते ।
न च दुःखविरोधित्वादन्या ह्यानन्दतेष्यते　　॥ १८०६ ॥

मायिना शून्यपक्षेऽपि ज्ञानं जाड्यविरोधि च ।
धर्माः केऽपि न सन्त्येव को विशेषस्ततस्तयोः ॥१८०७ ॥

**[अद्वैतं न सूत्रकाराभिमतं, सूत्रेषु तन्निराकरणात्]**

एतादृशानां पक्षाणां दूषणं प्रभुणा कृतम् ।
स्वपक्षसाधनेनैव 'नाभाव' इति चोक्तितः　　॥ १८०८ ॥

**[आत्मविनाशस्य न मोक्षत्वं अपुरुषार्थत्वात्, एतद्दूषणं मायिनोऽपि समम्]**

आत्माभावे पुमर्थः क इष्टस्यात्मावधिर्यतः ।
यदि नात्मावधिर्मोक्षो मोक्षः स्याद्घटशून्यता　　॥ १८०९ ॥

कल्पितत्वाद्विशेषाणां मायिनोऽपि समं हि तत् ।
दृश्यमाने विशेषेऽपि यदि चेदविशेषता　　॥ १८१० ॥

घटाभावोऽविशेषः स्यात्पाश्चात्यश्चेदनागतः ।

[**शून्यभावब्रह्मभावयोः मोक्षत्वसाधकमनुमानं सत्प्रतिपक्षदूषितम्**]

न मोक्षो विमतो यस्माददेहो घटशून्यता ।। १८११ ।।

यथेत्युक्तो वदेत्किं स योऽनुमामात्रमानकः ।
न च मायी वदेदत्र पूर्वोक्तेनैव वर्त्मना ।। १८१२ ।।

अमानत्वात् श्रुतेस्तस्य .... .......

[**अदेहत्ववादिनी श्रुतिः प्राकृतशरीरराहित्यमेव वदति**]

....... ....... न चादेहत्ववादिनी ।
श्रुतिः काचिददेहत्वमप्राकृतशरीरता ।। १८१३ ।।

मोक्षे भोगं यतो ब्रूते जक्षन् क्रीडन्निति श्रुतिः ।

[**शून्यभावब्रह्मभावयोर्मोक्षत्वनिरासोपसंहारः**]

निर्दुःखत्वान्न तन्मोक्षः प्रतिपन्नं यथेति च ।। १८१४ ।।

अनुमादूषणं किं स्याद्वादिनोः शून्यमायिनोः ।
दुःखं दुःखादभिन्नत्वान्मोक्षोऽपि स्यादसंशयम् ।। १८१५ ।।

भेदे सद्वैततैव स्यादित्याद्यमितदोषतः ।
हेयं मायामतेनैव सह शून्यमतं बुधैः ।। १८१६ ।।

[**विज्ञानवाद्यभिमतमोक्षस्वरूपनिरासः**]

एवं विज्ञानवादोऽपि ज्ञानमात्रविशेषतः ।
तस्यापि भङ्गुरत्वादिविशेषमपहाय हि ।। १८१७ ।।

अद्वैततामतं साक्षादुक्तदोषस्ततो भवेत् ।
कालो न केवलज्ञानी कालत्वात्प्रतिपन्नवत्    ।। १८१८ ।।

एतयानुमया रोधान्न तादृङ्मोक्षरूपता ।
यदि कालोऽपि नेत्याह कदेति प्रश्न उत्तरम्    ।। १८१९ ।।

किं वक्ष्यति यदावस्थां वदेत्सा पक्षतां व्रजेत् ।
अवस्थात्वादिति ह्येव हेतुः सापि कदेति च    ।। १८२० ।।

पृष्टे कालश्च वक्तव्यो नाकालत्वं ततो भवेत् ।
न काल इति सामान्यनिषेधे कालगप्रमा    ।। १८२१ ।।

निरुणद्धि समश्चायं त्रयाणामुक्तवादिनाम् ।
एकजीवत्वपक्षे तु कालाभावादियं प्रमा    ।। १८२२ ।।

कुपिता कालमाधाय द्वैतमेवोपपादयेत् ।
विमतः प्रपञ्चवान् कालः कालत्वात्प्रतिपन्नवत् ।। १८२३ ।।

इति चान्यानुमैकत्वं जीवस्य विनिवारयेत् ।

**[कालैकत्व–शब्दैकत्व–शिवैकत्ववादिषु एतद्दोषाणामतिदेशः]**

कालशब्देश्वरैकत्वमतान्यप्येवमेव हि    ।। १८२४ ।।

निराकृतानि तेषां च समत्वात् पक्षदोषयोः ।

**[वैभाषिकसौत्रान्तिकाभिमतमोक्षस्वरूपनिरासः]**

ज्ञानं स्वरसभङ्ग्येव नित्यसन्तानमिष्यते    ।। १८२५ ।।

बौद्धाभ्यामपराभ्यां तु तत्राप्युक्तानुमा रिपुः ।
मोक्षो न शुद्धविज्ञानसन्तानी कालगत्वतः    ।। १८२६ ।।

प्रतिपन्नो यथेत्येतदनुमानं तदुत्तरम् ।
अनुमानानि सर्वाणि प्रतिसाधनयोगतः ॥ १८२७ ॥

निषिद्धान्युक्तभङ्ग्यैव श्रुतयश्चास्मदुक्तिगाः ।

**[साङ्ख्यनैयायिकाद्यभिमतस्य मोक्षे सुखराहित्यस्य निरासः]**

साङ्ख्यनैयायिकाद्याश्च प्राहुर्मोक्षं च निःसुखम् ॥ १८२८ ॥

इच्छाद्वेषप्रयत्नादेरपि सर्वात्मना लयम् ।
तत्राहुर्नैतदप्यत्र शोभनं श्रुतयो यतः ॥ १८२९ ॥

महानन्दं च भोगं च नियमेन वदन्ति हि ।

**['प्रियाप्रिये न स्पृशतः' इति श्रुत्यर्थनिरूपणम्]**

प्राकृतप्रियहानिस्तु प्रियास्पृष्टिरितीर्यते ॥ १८३० ॥

अप्रियं प्रतिकूलं तदविशेषेण शब्दितम् ।
नास्ति ह्यप्राकृतं दुःखं सतो जीवस्य कुत्रचित् ॥१८३१॥

प्रियं स्वरूपमेवास्य बलानन्दादिवाक्यतः ।
हेयत्वादप्रियस्यैव प्रियहानेरनिष्टतः ॥ १८३२ ॥

न समस्तप्रियाभावो मोक्षे प्रोक्ते तु युज्यते ।
अप्रियस्य स्वरूपत्वमसुरेष्वेव हि श्रुतम् ॥ १८३३ ॥

असुरा नैवमेवं च नैवं चाखिलमानुषाः ।
इत्यात्मप्रियहानाय को यतेत च बुद्धिमान् ॥ १८३४ ॥

['न प्रेत्य संज्ञास्ति' इत्यादिश्रुत्यर्थनिरूपणम्]

सञ्ज्ञा नास्तीत्यपि ह्यस्य नामुक्तज्ञेयतेति हि ।
धर्मानुच्छित्तिमेवास्य यतो वक्त्युत्तरश्रुतिः ॥ १८३५ ॥

आशङ्क्यास्य ज्ञानहानिं मैत्रेय्या मोहमाह माम् ।
भवानित्युक्तवत्या हि नाहं मोहं वदामि ते ॥ १८३६ ॥

इत्युक्त्वा याज्ञवल्क्यो हि स्वरूपानाशमूचिवान् ।
ज्ञानरूपस्य विज्ञाननाशस्तन्नाश एव यत् ॥ १८३७ ॥

इति शून्यमतोच्छित्त्यै पुनरानन्दपूर्वकान् ।
धर्मानाहाप्यनुच्छिन्नांस्तार्किकैर्विनिवारितान् ॥ १८३८ ॥

मात्रासंसर्गमप्याह तथा माध्यन्दिनश्रुतिः ।
आचिक्षेप मतं तच्च यस्मिन्न विषयादनम् ॥ १८३९ ॥

घ्राणादिभोगाभावस्य त्वनिष्टत्वहृदा श्रुतिः ।
येनेदमखिलं वेद विज्ञातारं स्वमेव च ॥ १८४० ॥

केन तं च विजानीयादित्यनिष्टं च सर्वथा ।
नाखिलज्ञापको विष्णुरज्ञेयो नियमेन हि ॥ १८४१ ॥

तज्ज्ञानार्थं हि वेदानामखिलानां प्रवर्तनम् ।
प्रत्यक्षमात्मविज्ञानाविरोधानुभवादपि ॥ १८४२ ॥

न स्वविज्ञानितायां च विरोधः कश्चनेयते ।
कर्तृकर्मविरोधश्च नित्यानुभवरोधतः ॥ १८४३ ॥

कथमेव पदं गच्छेद्विरोधोऽदृष्टबाधनम् ।

[**'सोऽश्नुते' इत्यादिश्रुतयः मुक्तस्य विषयभोगसद्भावं वदन्ति**]

''सोऽश्नुते सर्वकामांश्च'' ''कामान्नी कामरूप्यथ''

॥ १८४४ ॥

इत्यादिश्रुतयश्चोक्तमर्थमेव वदन्ति हि ।

[**'यत्र हि द्वैतमिव भवति' इति श्रुत्यर्थः**]

अस्वातन्त्र्यादिवेत्युक्तं न द्वैताभावतः क्वचित् ॥ १८४५ ॥

आत्मैवाभूदिति ह्यस्मादविशेषप्रसङ्गतः ।

''अस्वातन्त्र्योपमाभेदभेदेष्विव उदीरितः'' ॥ १८४६ ॥

शब्दतत्त्व इति प्रोक्तं मैत्रेय्युक्तोत्तरं च किम् ।

[**मोक्षे सुखाभावे तस्य अपुरुषार्थत्वस्य प्रपञ्चनम्**]

सुखादिधर्महानौ तु मुक्तेः किं च प्रयोजनम् ॥ १८४७ ॥

यद्यर्थो दुःखहानिः स्यादनर्थः सुखनाशनम् ।

तयोश्च दुःखहानाद्धि सुखनाशोऽधिको भवेत् ॥ १८४८ ॥

प्राप्यापि दुःखं महत्सुखलेशाप्तये जनः ।

यतते सुखहानौ हि को मोक्षाय यतेत्पुमान् ॥ १८४९ ॥

अल्पाच्च सुखनाशाद्धि बिभेत्यतितरां जनः ।

महच्च दुःखमाप्नोति सुखनाशनिवृत्तये ॥ १८५० ॥

न च रागनिमित्तं तद्वीतरागा अपि स्फुटम् ।

नारदाद्याः सुखार्थाय सहन्ते दुःखमञ्जसा ॥ १८५१ ॥

युद्धादिदर्शनं यस्मात्सुदुःखेनापि कुर्वते ।
''यदेन्द्रवैरोचनयोर्ब्रह्मास्त्राभ्यां सुतापिताः     ।। १८५२ ।।

अपि नैवाजहुर्युद्धरसात्ते नारदादयः'' ।
इति स्कान्दवचस्तस्मात्सुखाभावाय को यतेत्     ।।१८५३।।

विमतो दुःखयुग्यस्माच्चेतनः सन् सुखोज्झितः ।
प्रतिपन्नो यथेत्येव चानुमा केन वार्यते     ।। १८५४ ।।

[मोक्षे सुखसद्भावे श्रुतिपुराणप्रमाणानि]

सर्वश्रुतिपुराणेषु सुखभावोक्तितस्तथा ।
मुक्तौ न ग्राह्यमेवैतत्सुखाभावमतं बुधैः     ।। १८५५ ।।

''सोऽनानन्दाद्विमुक्तः सन्नानन्दी भवति स्फुटम्'' ।
''निर्गुणे ब्रह्मणि मयि धारयन् विशदं मनः     ।। १८५६ ।।

परमानन्दमाप्नोति यत्र कामोऽवसीयते'' ।
''न विष्णुसदृशं दैवं न मोक्षसदृशं सुखम्     ।। १८५७ ।।

न वेदसदृशं वाक्यं न वर्णोङ्कारसंमितः'' ।
''यत्रानन्दाश्च मोदाश्च मुदः प्रमुद आसते     ।। १८५८ ।।

कामस्य यत्राप्ताः कामास्तत्र माममृतं कृधि'' ।
इति श्रुतिपुराणानि तत्र तत्र वदन्ति हि     ।। १८५९ ।।

अतो मोक्षे सुखाभाव इति यत्किञ्चिदेव हि ।

[मुक्तानां स्वरूपभूतदेहवत्त्वप्रतिपादनम्]

शिरःकराद्यभावश्च न मुक्तस्य भवेत्क्वचित्     ।। १८६० ।।

श्रुतयश्च पुराणानि मानमत्र बहूनि च ॥ १८६१ ॥

''न वर्तते यत्र रजस्तमस्तयोः
सत्त्वं च मिश्रं न च कालविक्रमः ।
न यत्र माया किमुतापरे हरे-
रनुव्रता यत्र सुरासुरार्चिताः ॥ १८६२ ॥

श्यामावदाताः शतपत्रलोचनाः
पिशङ्गवस्त्राः सुरुचः सुपेशसः ।
सर्वे चतुर्बाहव उन्मिषन्मणि-
प्रवेकनिष्काभरणाः सुवर्चसः ॥ १८६३ ॥

प्रवालवैदूर्यमृणालवर्चसां
परिस्फुरत्कुण्डलमौलिमालिनाम् ।
भ्राजिष्णुभिर्यः परितो विराजते
लसद्विमानावलिभिर्महात्मनाम् ॥ १८६४ ॥

विद्योतमानप्रमदोत्तमाभिः
सविद्युदभ्रावलिभिर्यथा नभः ।
श्रीर्यत्र रूपिण्युरुगायपादयोः
करोति मानं बहुधा विभूतिभिः'' ॥ १८६६ ॥

''ऋचां त्वः पोषमास्ते पुपुष्वान्
गायत्रं त्वो गायति शक्करीषु ।
ब्रह्मा त्वो वदति जातविद्यां
यज्ञस्य मात्रां विमिमीत उ त्वः'' ॥ १८६६ ॥

कामान्नरूपी चरतीतिपूर्व-
श्रुत्या पुराणोक्तिभिरप्यदोषः ।
देहः स्वरूपात्मक एव तेषां
मुक्तिं गतानामपि चेयते हि    ।। १८६७ ।।

शिरःकराद्यैरपि मुक्तिभाजो
युक्ता यतस्ते पुरुषा इदानीम् ।
यथेति पूर्वा अनुमाश्च जीव-
स्वरूपमङ्गादिकमावयन्ति    ।। १८६८ ।।

[संसारे भिन्नस्य भिन्नाभिन्नस्य वा जीवस्य मोक्षे ब्रह्मणा अत्यन्तमैक्यमिति भास्करादिमतनिरासः ।]

न ब्रह्मरूपत्वममुष्य देहिनो
मुक्तावपि स्यात्प्रमया कथञ्चित् ।
स ब्रह्मणा सहितोऽशेषभोगान्
भुङ्क्ते तथोपेत्य सुखार्णवं तम्    ।। १८६९ ।।

यत्तत्परं ज्योतिरुपेत्य जीवो
निजस्वरूपत्वमवाप्य कामान् ।
भुङ्क्ते स देवः पुरुषोत्तमोऽजः
आत्मेति चोक्तो गुणपूर्तिहेतोः    ।। १८७० ।।

सेतुः स देवोऽखिलमुक्तिभाजा-
मुतामृतस्येष्ट इहेशिता यत् ।

इत्यादिवाक्यैर्भगवद्वशः सन्
भुङ्क्तेऽखिलान् मुक्तिगतोऽपि भोगान् ॥ १८७१ ॥

कालोऽप्यसौ नैक्ययुतः परेण
जीवस्य कालो यत एष यद्वत् ।
इत्यादिका अप्यनुमाः प्रमाणं
मुक्तौ च जीवस्य परत्वरोधे ॥ १८७२ ॥

कथं च यः पूर्वमसौ न पश्चा-
द्भवेत्स एवेत्यपि युक्तिमेति ।
यतो न दृष्टं यदभून्न पूर्वं
पश्चात्तदासेति कुतश्च किञ्चित् ॥ १८७३ ॥

[जीवः स्वभावत एव परमात्मना भिन्नाभिन्नः, संसारे भेद एव व्यक्तः, अभेदः अविद्यादिना आवृतः, मुक्तौ द्वावपि व्यक्ताविति यादवप्रकाशादिमतनिरासः ।]

न चैव मुक्तेन हरेः पृथक्त्व-
मैक्यं तथा स्यादिति युक्तिमेति ।
यतो न कुत्रापि भिदाभिदा च
दृष्टा चितश्चेतनया कुतश्चित् ॥ १८७४ ॥

[मोक्षवादार्थोपसंहारः]

इत्थं मतानि भ्रमजानि यस्मा-
न्मोक्षं समुद्देश्यमपि भ्रमेण ।

विदुर्न सम्यग्यदपीह लौकिकाः
सुखं मम स्याद्धि सदेति जानते　।। १८७५ ।।

[तृतीयाध्यायस्य चतुर्थपादे पूर्वपक्षयुक्तयः]

औदार्यमुच्चावचशक्तिरात्म-
स्वरूपदार्ढ्यं च निजस्वभावः ।
स्वातन्त्र्यमापूर्णविशेषयोग्यता
विरोधहानिश्च चतुर्थपादे　।। १८७६ ।।

[तत्रैव सिद्धान्तयुक्तयः]

व्यवस्थितिस्त्वविशेषस्थितिश्च
निषेधसामान्यविधिक्रियाणाम् ।
विभक्तता चात्वरयैव सिद्धि-
र्विपक्षसम्प्राप्तिविरुद्धहेतवः　।। १८७७ ।।

[चतुर्थाध्यायस्य प्रथमपादे पूर्वपक्षयुक्तयः]

सुशक्यता शश्वदतिप्रसिद्धि-
र्विवेकविन्यासविचारसञ्ज्ञाः ।
नानाप्रवृत्तिः कृतकृत्यता च
विपक्षतर्काः समतीतपादे　।। १८७८ ।।

[तत्रैव सिद्धान्तयुक्तयः]

महाफलत्वं प्रविविक्तता च
सन्धिग्रहः साधनमाप्तकृत्यम् ।

विशेषकार्यं कृतिसंस्थितिश्च
सुयुक्तयो निर्णयगाः स्वपक्षे ॥ १८७९ ॥

[चतुर्थाध्यायस्य द्वितीयपादे पूर्वपक्षयुक्तयः]

व्यामिश्रता कार्यकरत्वमर्थ-
क्लृप्तिः सुदार्ढ्यं परतन्त्रता च ।
समानधर्मः कृतशेषता च
लोकोपमा पूर्वमतानुसाराः ॥ १८८० ॥

[तत्रैव सिद्धान्तयुक्तयः]

विशेषसाम्यश्रुतिराढ्यता च
समानलोपो महिमाविशेषः ।
कृतार्थता शश्वदनुप्रवृत्तिः
सिद्धान्तनिर्णीतिविशिष्टहेतवः ॥ १८८१ ॥

**वाङ्मनसाधिकरणम् - १**

**॥ ॐ वाङ्मनसि दर्शनाच्छब्दाच्च ॐ ॥ ४-२-१ ॥**

**॥ ॐ अत एव च सर्वाण्यनु ॐ ॥ ४-२-२ ॥**

॥ इति वाङ्मनसाधिकरणम् ॥ १ ॥

**मनः प्राणाधिकरणम् - २**

**॥ ॐ तन्मनः प्राण उत्तरात् ॐ ॥ ४-२-३ ॥**

॥ इति मनः प्राणाधिकरणम् ॥ २ ॥

## अध्यक्षाधिकरणम् - ३

**।। ॐ सोऽध्यक्षे तदुपगमादिभ्यः ॐ ।। ४-२-४ ।।**

।। इति अध्यक्षाधिकरणम् ।। ३ ।।

## भूताधिकरणम् - ४

**।। ॐ भूतेषु तच्छ्रुतेः ॐ ।। ४-२-५ ।।**

।। इति भूताधिकरणम् ।। ४ ।।

## नैकस्मिन्नधिकरणम् - ५

**।। ॐ नैकस्मिन् दर्शयतो हि ॐ ।। ४-२-६ ।।**

[**'वायाविन्द्रः'** इत्यादिश्रुतौ **वायुशब्देन प्रधानवायुः विवक्षितः**]

प्रधानवायुस्त्विह वायुनामा
भूतेष्विति प्रोक्तगतोऽपि युक्त्या ।
यस्मात् श्रुतौ पवते चेति भूरि-
प्रोक्तो यतो भूतमानी च सोऽपि ।। १८८२ ।।

महामानी त्वल्पमानी च यस्मात्
तच्छब्देनाप्युच्यते तेन सोऽपि ।

।। इति नैकस्मिन्नधिकरणम् ।। ५ ।।

## समनाधिकरणम् - ६

**।। ॐ समना चासृत्युपक्रमादमृतत्वं चानुपोष्य ॐ ।। ४-२-७ ।।**

**॥ ॐ तदपीतेः संसारव्यपदेशात् ॐ ॥ ४-२-८ ॥**

**॥ ॐ सूक्ष्मं प्रमाणतश्च तथोपलब्धेः ॐ ॥ ४-२-९ ॥**

**॥ ॐ नोपमर्देनातः ॐ ॥ ४-२-१० ॥**

**॥ ॐ अस्यैव चोपपत्तेरूष्मा ॐ ॥ ४-२-११ ॥**

**॥ ॐ प्रतिषेधादिति चेन्न शारीरात् ॐ ॥ ४-२-१२ ॥**

**॥ ॐ स्पष्टो ह्येकेषाम् ॐ ॥ ४-२-१३ ॥**

**॥ ॐ स्मर्यते च ॐ ॥ ४-२-१४ ॥**

॥ इति समनाधिकरणम् ॥ ६ ॥

**पराधिकरणम् - ७**

**॥ ॐ तानि परे तथा ह्याह ॐ ॥ ४-२-१५ ॥**

[**श्रुत्युक्तक्रमेण देवानां प्रधानवायौ लयः, तस्य च विष्णौ लयः**]

तस्मिन् लयं यान्ति भूतान्यशेष-
क्रमाविरोधेन स एव विष्णौ ॥ १८८३ ॥

इन्द्रादीनां तत्र लयः क्रमं तु
प्रोक्तं विशेषादनुसृत्य नान्यत् ।

[**संक्षेपतः लयक्रमः**]

तस्मादशेषा गिरिजां प्रविश्य
तयैव रुद्रं सह तेन वाणीम् ॥ १८८४ ॥

तया पतिं प्राप्य सहैव तेन
लयं हरौ यान्ति समस्तजीवाः ।

[**शेषमार्गः**]

सोमस्तु वारीशयुतोऽनिरुद्धं
विशत्यसौ काममतौ तु वारुणीम्      ॥ १८८५ ॥

सा शेषदेवं स गिरं च सैव
वायुं विशत्यञ्ज इतीह निर्णयः ।
उमागिरीशाविति भारतीरा-
विति स्म वाग्वेदगता ब्रवीति      ॥ १८८६ ॥

अहीन्द्रपत्नीमहिपं विरिञ्च-
पत्नीं विरिञ्चं च विमुक्तिकाले ।
त एव यत्तत्पदमाप्नुवन्ति
तत्काल एतान् समुपास्य जीवाः      ॥ १८८७ ॥

ब्रह्मत्वकाले प्रविशन्ति चैता-
निति स्म वाक् तादृशतामुपैति ।

[**गरुडमार्गः**]

सूर्योऽग्नियुक्तो गुरुमाप्य तेन
शक्रं सहैतेन सुपर्णपत्नीम्      ॥ १८८८ ॥

तया सुपर्णं सह तेन वार्णी
ब्रह्माणमेतद्गत एव याति ।

इन्द्रप्रवेशस्तु यदोच्यतेऽत्र
तदा ह्युमेत्येव सुपर्णपत्नी ।। १८८९ ।।

उक्ता सुपर्णश्च गिरीशनाम्ना
ततो विरोधश्च न कश्चनात्र ।

[हिरण्यगर्भे लयप्रकारः]

भृग्वादयो दक्षमवाप्य तेन
प्राप्येन्द्रमेतेन सुपर्णपत्नीम् ।। १८९० ।।

विशन्ति ये मनवो राजमुख्या
मनुं प्रविश्यात्र गता महेन्द्रम् ।
आकाश उर्वी च गुरुं प्रविश्य
तेनैव यातः पुरुहूतदेवम् ।। १८९१ ।।

सनादयो यतयः काममेव
विशन्ति शिष्टा अपि हव्यवाहम् ।
वर्णाश्रमाचाररता मनुष्या
धर्मं मनुं सोऽपि समेति काले ।। १८९२ ।।

तमेव सर्वे पितरः सुरानुगाः
सर्वे कुबेरं स च सोममेव ।
विमुक्तिकाले प्रविशन्ति ......

[सायुज्यप्रकारः]

......... ............... अभीक्ष्णं
भोगांश्च तद्देहगताः प्रभुञ्जते ।। १८९३ ।।

आनन्दसुव्यक्तिरमुत्र तेषां
भवत्यतश्चेष्टत एव निर्गताः ।
क्रीडन्ति भूयश्च समाविशन्ति
तानेव सायुज्यमिदं वदन्ति   ।। १८९४ ।।

सायुज्यहीनास्तु लये तु सर्वे
प्रोक्तेन मार्गेण विशन्ति सृष्टौ ।
बहिश्च निर्यान्ति ततोऽन्यदापि
सायुज्यभाजां भवति प्रवेशः   ।। १८९५ ।।

उक्तं समस्तं परमश्रुतौ हि
प्रोक्तं च सर्गक्रमतो विपर्ययः ।
मुक्तौ लये यद्वदथो लयश्च
विपर्ययेणेत्यवदद्गिरां प्रभुः   ।। १८९६ ।।

[देवानां लयविषये ज्ञातव्यांशाः]

लयो यतो मुक्तिरियं सुराणां
भोगो विशेषेण च यं वदिष्यति ।

[उक्तश्च बिम्बप्रतिबिम्बभावः]

पैङ्गिश्रुतावुक्तलयानुसारतः   ।। १८९७ ।।

[बिम्बे प्रतिबिम्बस्य लयः, 'प्राणस्तेजसि' इत्यत्र तेजश्शब्दः श्रीवाचकः]

बिम्बे लयो यन्नियतश्च मुक्तौ
चिदात्मनां तद्वशता च सर्वदा ।

तेजोऽभिधां तु श्रियमाप्य विष्णु-
मग्रे ततः पुत्रतयैव वायुः ॥ १८९८ ॥

आप्तः प्रसूतः पुनरेव विष्णुं
प्रविश्य मुक्तः प्रलयेऽत्र तिष्ठति ।

**[सर्वे मुक्ताः लये भगवन्तं प्रविश्य आनन्दमनुभवन्ति, सृष्टौ बहिरायान्ति]**

सर्वेऽपि ते मुक्तगणा अमन्द-
सान्द्रं निजानन्दमशेषतोऽपि ॥ १८९९ ॥

भुञ्जन्त एवासत ईशदेहे
लयेऽथ सर्गे बहिरेव यान्ति ।

**[उक्तादन्ये देवाः अग्निं प्रविशन्ति इत्यस्यापवादप्रदर्शनपूर्वकं पादार्थोपसंहारः]**

प्रयाति धर्मं निर्ऋतिस्तु शक्रं
मरुद्गणाः पारिषदास्तथैव ॥ १९०० ॥

सर्वेऽनिरुद्धं पृतनाधिपाद्या-
स्तुरश्रुतिर्हीत्थमियं विमुक्तिः ।

इति पराधिकरणम् ॥ ७ ॥

## अविभागाधिकरणम् - ८

**॥ ॐ अविभागो वचनात् ॐ ॥ ४-२-१६**

इति अविभागाधिकरणम् ॥ ८ ॥

## तदोकोऽधिकरणम् - ९

**।। ॐ तदोकोऽग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात्तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया ॐ ।। ४-२-१७ ।।**

**।। ॐ रश्म्यनुसारी ॐ ।। ४-२-१८ ।।**

**।। ॐ निशि नेति चेन्न सम्बन्धात् ॐ ।। ४-२-१९ ।।**

**।। ॐ यावद्देहभावित्वाद्दर्शयति च ॐ ।। ४-२-२० ।।**

**।। ॐ अतश्चायनेऽपि हि दक्षिणे ॐ ।। ४-२-२१ ।।**

इति तदोकोऽधिकरणम् ।। ९ ।।

## योग्यधिकरणम् - १०

**।। ॐ योगिनः प्रति स्मर्येते स्मार्ते चैते ॐ ।।४-२-२२।।**

इति योग्यधिकरणम् ।। १० ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीब्रह्मसूत्रानुव्याख्याने चतुर्थाध्यायस्य द्वितीयः पादः ।।

# चतुर्थाध्यायस्य तृतीयः पादः

[एतत्पादप्रतिपाद्यार्थनिरूपणम्]

उत्क्रान्तमार्गश्च विमुक्तगम्यं
पादोदितम् ......... .........

[एतत्पादीयपूर्वपक्षसिद्धान्तयुक्तयः]

......... ......... सुक्रमविक्रमौ च ॥ १९०१ ॥

सान्तानिकप्राप्तिरभीष्टता च
सौकर्यमित्यन्यमतस्य तर्काः ।
विशेषसम्प्राप्तिरुरुत्वमाप्तिः
क्रमानुरागः कथितानुवृत्तिः ॥ १९०२ ॥

सिद्धान्तनिर्णीतिकराः ........

अर्चिराद्यधिकरणम् - १

**॥ ॐ अर्चिरादिना तत्प्रथितेः ॐ ॥ ४-३-१ ॥**

इति अर्चिराद्यधिकरणम् ॥ १ ॥

वायुशब्दाधिकरणम् - २

**॥ ॐ वायुशब्दादविशेषविशेषाभ्याम् ॐ ॥ ४-३-२ ॥**

इति वायुशब्दाधिकरणम् ॥ २ ॥

तटिदधिकरणम् - ३

**॥ ॐ तटितोऽधि वरुणः सम्बन्धात् ॐ ॥ ४-३-३ ॥**

इति तटिदधिकरणम् ॥ ३ ॥

### आतिवाहिकाधिकरणम् - ४

**।। ॐ आतिवाहिकस्तल्लिङ्गात् ॐ ।। ४-३-४ ।।**

**।। ॐ उभयव्यामोहात्तत्सिद्धेः ॐ ।। ४-३-५ ।।**

इति आतिवाहिकाधिकरणम् ।। ४ ।।

### वैद्युताधिकरणम् - ५

**।। ॐ वैद्युतेनैव ततस्तच्छ्रुतेः ॐ ।। ४-३-६ ।।**

इति वैद्युताधिकरणम् ।। ५ ।।

### कार्याधिकरणम् - ६

**।। ॐ कार्यं बादरिरस्य गत्युपपत्तेः ॐ ।। ४-३-७ ।।**

**।। ॐ विशेषितत्वाच्च ॐ ।। ४-३-८ ।।**

**।। ॐ सामीप्यात्तु तद्व्यपदेशः ॐ ।। ४-३-९ ।।**

**।। ॐ कार्यात्यये तदध्यक्षेण सहातः परमभिधानात् ॐ ।। ४-३-१० ।।**

**।। ॐ स्मृतेश्च ॐ ।। ४-३-११ ।।**

**।। ॐ परं जैमिनिर्मुख्यत्वात् ॐ ।। ४-३-१२ ।।**

**।। ॐ दर्शनाच्च ॐ ।। ४-३-१३ ।।**

**।। ॐ न च कार्ये प्रतिपत्त्यभिसन्धिः ॐ ।। ४-३-१४ ।।**

**।। ॐ अप्रतीकालम्बनान्नयतीति बादरायण उभयथा च दोषात्तत्क्रतुश्च ॐ ।। ४-३-१५ ।।**

................ प्रतीकं
देहादिकं तद्गतमेव ये नराः ।
उपासते ते पुरतः समाप्नुयु-
र्ब्रह्माणमस्मान्मतिमाप्य विष्णुम् ।। १९०३ ।।

प्राप्स्यन्त्यतोऽन्येऽपि तमाप्य तस्मात्
हरिं गता मुक्तिभाजः परान्ते ।

**।। ॐ विशेषं च दर्शयति ॐ ।। ४-३-१६ ।।**

।। इति कार्याधिकरणम् ।। ६ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीब्रह्मसूत्रानुव्याख्याने चतुर्थाध्यायस्य तृतीयः पादः ।।

## चतुर्थाध्यायस्य चतुर्थः पादः

[**एतत्पादीयपूर्वपक्षसिद्धान्तयुक्तयः**]

अतिक्रमोक्तिः पुरुषार्थलाभः
परागतिः पारगतिस्तदोकः ।। १९०४ ।।

समस्तकार्यं वशिता च विश्व-
सम्भावना युक्तयस्त्वन्यपक्षे ।
सामान्यरूपं प्रतिभानमुक्ति-
राश्चर्यता कृत्रिमतास्तदोषः ।। १९०५ ।।

विशेषक्लृप्तिः कृतनिश्चयश्च
माहात्म्यमित्येव सुनिर्णयार्थाः ।

**सम्पद्याधिकरणम् - १**

**।। ॐ सम्पद्याविहाय स्वेन शब्दात् ॐ ।। ४-४-१ ।।**

।। इति सम्पद्याधिकरणम् ।। १ ।।

**मुक्ताधिकरणम् - २**

**।। ॐ मुक्तः प्रतिज्ञानात् ॐ ।। ४-४-२ ।।**

।। इति मुक्ताधिकरणम् ।। २ ।।

**आत्माधिकरणम् - ३**

**।। ॐ आत्मा प्रकरणात् ॐ ।। ४-४-३ ।।**

।। इति आत्माधिकरणम् ।। ३ ।।

**अविभागाधिकरणम् - ४**

**।। ॐ अविभागेन दृष्टत्वात् ॐ ।। ४-४-४ ।।**

।। इति अविभागाधिकरणम् ।। ४ ।।

**ब्राह्माधिकरणम् - ५**

**।। ॐ ब्राह्मेण जैमिनिरुपन्यासादिभ्यः ॐ ।। ४-४-५ ।।**

**।। ॐ चितिमात्रेण तदात्मकत्वादित्यौडुलोमिः ॐ ।। ४-४-६ ।।**

**।। ॐ एवमप्युपन्यासात्पूर्वभावादविरोधं बादरायणः ॐ ।। ४-४-७ ।।**

।। इति ब्राह्माधिकरणम् ।। ५ ।।

**सङ्कल्पाधिकरणम् - ६**

**।। ॐ सङ्कल्पादेव च तच्छ्रुतेः ॐ ।। ४-४-८ ।।**

।। इति सङ्कल्पाधिकरणम् ।। ६ ।।

**अनन्याधिपत्यधिकरणम् - ७**

**।। ॐ अत एव चानन्याधिपतिः ॐ ।। ४-४-९ ।।**

**[मुक्तानां भगवान् अधिपतिः । यथासम्भवं अन्येऽपि । तेषां सर्वथा अनन्याधिपतित्वं नात्र सूत्रे प्रतिपाद्यते ।]**

अनन्यभृत्यत्वमिहोदितेभ्य-
स्त्वन्यस्य भृत्यत्वनिवारणाय ।। १९०६ ।।

पतिं यदेषामपि विष्णुमाह
ह्युतामृतत्वस्य पतित्ववाग्घरेः ।
एतेऽपि चान्याधिपतित्वयुक्ता
विष्णवन्यचित्त्वेन यथा पुमांसः ।। १९०७ ।।

प्रसिद्धिभाजस्त्विति चानुमैव
ह्यभीष्टसिद्ध्यै भवतीह निश्चयात् ।
मुक्तस्वकीयावरयन्तृतास्ति
मुक्तावपि ब्रह्मपुरस्सराणाम् ।। १९०८ ।।

अनेन देवेन तथामुना च
हीष्टे परार्वाक्तनलोकिनामिति ।
फलं श्रुतिर्ज्ञानत आह मुक्ता-
वेतच्च सर्वाशुभनाशलिङ्गात्  ।। १९०९ ।।

[मुक्तौ सर्वात्मना लोकाधिपत्यरूपफलं, निरवधिकं सर्वदेवपूज्यत्वं च विधातुरेव, अन्येषां तु यथायोग्यम्]

लोकाधिपत्यं च विधातुरेव
सर्वात्मनेत्याह तुरश्रुतिश्च ।
सर्वे बलिं देवगणा वहन्ती-
त्येतच्च नान्यस्य तु युक्तिमेति  ।। १९१० ।।

[मुक्तानां स्वकीयावरयन्तृत्वनिरूपणम्]

लोका इतीहापि तु लोकिनां वचो
लोका इति ह्येव रवः प्रजासु ।
प्रयुज्यते सर्वजनैः सदैव
तन्मानिनो लोकपदेन चोक्ताः  ।। १९११ ।।

तद्वास्तु मुक्ता इह लोकशब्दा
अन्योन्यनाथा इति पैङ्गिनां श्रुतिः ।
अलोकशब्देन विमुक्तिभाजो
वाच्याः पदं तादृगपीह युक्तम्  ।। १९१२ ।।

लोकाभिधाश्चापि यतो हि मुक्ताः
प्रकाशरूपाः सततं च सर्वे ।

ब्रह्मैव लोकाधिपतिर्विमुक्तो
भवेदिति प्राह तुरश्रुतिश्च ।। १९१३ ।।

[आदित्यमण्डले परमेश्वरमुपासीनस्य विदुषः
लोकाधिपत्यमित्यपव्याख्याननिरसनम्]

न चेह विज्ञानफलं समुक्तं
लोकाधिपत्यं रविबिम्बगे हरौ ।
उक्तं पृथक् तच्च पुरैव यस्मात्
भेदोऽमुनेत्यादि च सम्यगुक्तः ।। १९१४ ।।

त्वप्रत्ययं चाप्यतिहाय नैव
रूपेण तेनेति भवेदिहार्थः ।
भवत्यसावित्यणुशब्दमत्र
विहाय वाक्यानि बहूनि दोषः ।। १९१५ ।।

[अपव्याख्याननिराकरणोपसंहारपूर्वकं पादार्थस्य संक्षेपेणोक्तिः]

अतो जगद्व्यापृतिमन्त एव
ब्रह्मादयः पूर्णगुणाः क्रमेण ।
अमन्दमानन्दमजस्रमेव
भुञ्जन्त आत्मीयमजात्समासते ।। १९१६ ।।

।। इति अनन्याधिपत्यधिकरणम् ।। ७ ।।

अभावाधिकरणम् - ८

**।। ॐ अभावं बादरिराह ह्येवम् ॐ ।। ४-४-१० ।।**

**।। ॐ भावं जैमिनिर्विकल्पाम्नानात् ॐ ।। ४-४-११ ।।**

**।। ॐ द्वादशाहवदुभयविधं बादरायणोऽतः ॐ ।। ४-४-१२ ।।**

**।। ॐ तन्वभावे सन्ध्यवदुपपत्तेः ॐ ।। ४-४-१३ ।।**

**।। ॐ भावे जाग्रद्वत् ॐ ।। ४-४-१४ ।।**

**।। ॐ प्रदीपवदावेशस्तथा हि दर्शयति ॐ ।। ४-४-१५ ।।**

**।। ॐ स्वाप्ययसम्पत्त्योरन्यतरापेक्षमाविष्कृतं हि ॐ ।। ४-४-१६ ।।**

।। इति अभावाधिकरणम् ।। ८ ।।

जगद्व्यापाराधिकरणम् - ९

**।। ॐ जगद्व्यापारवर्जम् ॐ ।। ४-४-१७ ।।**

**।। ॐ प्रकरणादसन्निहितत्वाच्च ॐ ।। ४-४-१८ ।।**

**।। ॐ प्रत्यक्षोपदेशादिति चेन्नाधिकारिकमण्डलस्थोक्तेः ॐ ।। ४-४-१९ ।।**

**।। ॐ विकारावर्ति च तथाहि दर्शयति ॐ ।।४-४-२०।।**

।। इति जगद्व्यापाराधिकरणम् ।। ९ ।।

### स्थित्यधिकरणम् - १०

**।। ॐ स्थितिमाह दर्शयतश्चैवं प्रत्यक्षानुमाने ॐ ।। ४-४-२१ ।।**

**।। ॐ भोगमात्रसाम्यलिङ्गाच्च ॐ ।। ४-४-२२ ।।**

।। इति स्थित्यधिकरणम् ।। १० ।।

### अनावृत्त्यधिकरणम् - ११

**।। ॐ अनावृत्तिः शब्दादनावृत्तिः शब्दात् ॐ ।। ४-४-२३ ।।**

।। इति अनावृत्त्यधिकरणम् ।। ११ ।।

[परिसमापितग्रन्थो भगवानाचार्यः पुरुषोत्तमं पौनःपुन्येन प्रणमति]

नमो नमोऽशेषविशेषपूर्ण-
गुणैकधाम्ने पुरुषोत्तमाय ।
भक्तानुकम्पादतिशुद्धसंवि-
द्दात्रेऽनुपाधिप्रियसद्गुणात्मने ।। १९१७ ।।

[श्रीमदाचार्याणां स्वरूपाविष्करणम्]

यस्य त्रीण्युदितानि वेदवचने रूपाणि दिव्यान्यलं
बट् तद्दर्शतमित्थमेव निहितं देवस्य भर्गो महत् ।
वायो रामवचोनयं प्रथमकं पृक्षो द्वितीयं वपु-
र्मध्वो यत्तु तृतीयमेतदमुना ग्रन्थः कृतः केशवे ।। १९१८।।

[**भगवत्स्वरूपप्रतिपादनपुरस्सरं भगवत्स्तवेन ग्रन्थोपसंहारः**]

निःशेषदोषरहित कल्याणाखिलसद्गुण ।
भूतिस्वयम्भुशर्वादिवन्द्यं त्वां नौमि मे प्रियम् ।। १९१९ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीब्रह्मसूत्रानुव्याख्याने चतुर्थाध्यायस्य चतुर्थः पादः ।।

## ।। ब्रह्मसूत्रानुव्याख्यानं सम्पूर्णः ।।

।। श्रीमध्वेशार्पणमस्तु ।।

****

### श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितम्

# ब्रह्मसूत्रानुव्याख्यान्यायविवरणम्

## प्रथमाध्यायस्य प्रथमः पादः

### जिज्ञासाधिकरणम् १-१-१

चेतनाचेतनजगन्नियन्त्रेऽशेषसंविदे ।
नमो नारायणायाजशर्वशक्रादिवन्दित ।। १ ।।

कृत्वा भाष्यानुभाष्येऽहमपि वेदार्थसत्पतेः ।
कृष्णस्य सूत्रानुव्याख्यासन्न्यायविवृतिं स्फुटम् ।। २ ।।

करोमि मन्दबुद्धीनां बुधानां चोपकारिकाम् ।
प्रीत्यै तस्यैव दैवस्य तत्प्रसादपुरःसरः ।। ३ ।।

जीवव्यतिरिक्तेश्वरस्याभावात् तस्य च स्वप्रकाशत्वान्न जिज्ञास्यतेति प्राप्ते 'अथातो ब्रह्मजिज्ञासा' इत्याह । 'तद्विजिज्ञासस्व तद्ब्रह्म' इति ब्रह्मशब्देन पूर्णगुणत्वोक्तेर्नानुभवसिद्धाल्पगुणजीवाभेदः । अथ कस्मादुच्यते ब्रह्मेति । 'बृहन्तो ह्यस्मिन् गुणाः' इति श्रुतेः ।। १ ।।

### जन्माधिकरणम् १-१-२

न जीव एवायं ब्रह्मशब्दः । 'यतो वा इमानि भूतानि जायन्ते' इत्यादिना जन्मादिकारणत्वस्यैव ब्रह्मलक्षणत्वोक्तेः ।। २ ।।

### शास्त्रयोनित्वाधिकरणम्  १-१-३

न च रुद्रादौ सममेतल्लक्षणम् । शास्त्रैकसमधिगम्यत्वात् कारणत्वस्य ।

### समन्वयाधिकरणम्  १-१-४

न च पाशुपतशास्त्रोदितत्वादिशास्त्रप्रतिपाद्यत्वे कारणम् । किंतूपक्रमादिलक्षणः समन्वय एव ।। ४ ।।

### ईक्षत्यधिकरणम्  १-१-५

न च तस्यावाच्यत्वं श्रुत्यभिप्रायः । 'सर्वे वेदा यत्पदमामनन्ति' इत्यादिश्रुतिसहितानुभवस्य बलवत्त्वात् ।। ५ ।।

### आनन्दममयाधिकरणम्  १-१-६

न चावयवत्वविरोधः । 'नेह नानास्ति किञ्चन' इति श्रुतेरवयवाद्यभेदात् ।। ६ ।।

### अन्तःस्थत्वाधिकरणम्  १-१-७

न च 'ब्रह्मेन्द्रमग्निं जगतः प्रतिष्ठां दिव आत्मानं सवितारं बृहस्पतिम् । चतुर्होतारं प्रदिशोऽनुकॢप्तं वाचो वीर्यं तपसाऽन्वविन्दत्' इत्यादिशब्दानामन्यविषयत्वम् । श्रुतिसन्देहेऽनन्यथासिद्धलिङ्गेन निर्णयोपपत्तेः ।। ७ ।।

### आकाश-प्राण-ज्योति-गायत्र्यधिकरणम्  १.१.८-११

अधिभूताध्यात्माधिवेदगतानामपि शब्दानामचेतनत्वजीवान्वय-

व्यतिरेकित्वनित्यत्वेषु विद्यमानेष्वपि भगवद्विषयत्वमेवानन्यथासिद्धलिङ्गैः ।। 'एतावानस्य महिमा ततो ज्यायांश्च पुरुषः' इत्यादिशब्दसहितलिङ्गैश्च ।। सन्दिग्धश्रुतिलिङ्गाभ्यामुक्ताभ्यामपि असन्दिग्धयोः केवलयोरेव बलवत्त्वात् ।। ८-११ ।।

### पादान्त्यप्राणाधिकरणम् १-१-१२

न चानन्यथासिद्धत्वमन्यत्र श्रुतिलिङ्गादेः । अन्यगतलिङ्गादीनामपि तद्गतभगवदपेक्षया युक्तेः ।। १२ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीमद्ब्रह्मसूत्रानुव्याख्यान्यायविवरणे प्रथमाध्यायस्य प्रथमः पादः ।।

## प्रथमाध्यायस्य द्वितीयः पादः

### सर्वगतत्वाधिकरणम् १-२-१

बहुलिङ्गसहितश्रुतेरपि सावकाशायाः निरवकाशश्रुत्यादीनामेव बलवत्त्वम् । बहवो ह्यत्रादित्यशब्दाः । क्षित्यादिषूक्त्वाऽऽदित्येऽनुक्तिरित्यादिलिङ्गं च । तथापि निरवकाशा एतमेवेत्यवधारणादयः ।। १ ।।

### अत्तृत्वाधिकरणम् १-२-२

सन्दिग्धश्रुतिलिङ्गाभ्यां, निश्चितलिङ्गप्रकरणयोरेव बलवत्त्वम् । सन्दिग्धश्रुतिर्लिङ्गं चादितिशब्दोऽदितित्वं च ।। २ ।।

## गुहाधिकरणम्  १-२-३

द्विवचनश्रुतेरपि बलं निरवकाशत्वं नास्ति । विष्णोरेव-(बलत्त्वात्)द्विरूपत्वात् ।। ३ ।।

## अन्तराधिकरणम्  १-२-४

'सोऽहमस्मि, 'स एवाऽहमस्मि' इत्याद्यभ्यासार्थवादसहित-बहुश्रुतिभ्योऽपि निरवकाशोपपत्तेरेव प्राबल्यम् ।। ४ ।।

## अन्तर्याम्यधिकरणम्  १-२-५

पृथिव्यादिशरीरत्वं च न निरवकाशम् । यौगिकशरीर-त्वोपपत्तेर्विष्णोरपि ।। ५ ।।

## अदृश्यत्वाधिकरणम्  १-२-६

'अक्षरात्परतः परः' इति श्रुतेरपि नाक्षरात्सम्भवतीत्यस्याः निरवकाशत्वम् । अक्षरात्परतः परस्याप्यक्षरान्तरत्ववचनात् ।। ६ ।।

## वैश्वानराधिकरणम्  १-२-७

श्रुतिसाधारण्ये विशेषश्रुत्यादेर्निश्चयः । उभयत्र विशेषश्रुत्यादौ पुनः सावकाशत्वनिरवकाशत्वबलान्निश्चयः ।। ७ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्ब्रह्मसूत्रानुव्याख्यान्यायविवरणे प्रथमाध्यायस्य द्वितीयः पादः ।।

# प्रथमाध्यायस्य तृतीयः पादः

## युभ्वाद्यधिकरणम् १-३-१

'प्राणानां ग्रन्थिरसि' । 'रुद्रो वै लोकायतनम्' । 'वायुना वै गौतम सूत्रेणायं च लोकः परश्च लोकः सर्वाणि भूतानि सन्दृब्धानि भवन्ति' । 'सर्वे वा एते प्राणाश्च प्राणिनश्च देवाश्च दिव्यानि च लोकाश्च लोकिनश्चालोकाश्चालोकिनश्च विष्णावेवोताश्च प्रोताश्च भवन्ति' इत्यादेर्द्युभ्वाद्यायतनत्वमज्ञानां साधारणं लिङ्गम् ।। १ ।।

## भूमाधिकरणम् १-३-२

'प्राणो वा आशाया भूयान् विष्णुर्वै देवेभ्यो भूयांस्तस्माद्भूयान्नाम' इत्यादेर्भूमशब्दोऽज्ञानां साधारणः ।। २ ।।

## अक्षराधिकरणम् १-३-३

विष्णोश्चेतनप्रकृतेश्चाविनाशित्वसाम्यादक्षरशब्दः साधारणः ।। ३ ।।

## सदधिकरणम् १-३-४

कारणत्वसाम्याद्विष्णोः अचेतनप्रकृतेश्च, 'सदेव सोम्येदमग्र आसीत्' इत्यादिसृष्टिस्थानं साधारणम् ।। ४ ।।

## दहराधिकरणम् १-३-५

लिङ्गं हृत्पद्मस्थितत्वं साधारणम् ।। ५ ।।

### अनुकृत्यधिकरणम् १-३-६

'कथं नु तद्विजानीयाम्' इत्यानुकूल्येन ग्रहणं कस्येति विचार्यमनुग्रहः ।। ६ ।।

### वामनाधिकरणमारभ्य सुषुप्त्यधिकरणपर्यन्तम् १.३.७-१३

पुनः शब्दाः 'ईशानो वज्रो ज्योतिराकाशः' इति । लिङ्गं स्वप्नादिदर्शनं कस्येति ।। ७-१३ ।।

### ब्राह्मणाधिकरणम् १-३-१४

शब्दो ब्राह्मण इति ।। १४ ।।

### पूर्वपक्षन्यायनिरूपणम्

### द्युभ्वाद्यधिकरणम् १-३-१

'यस्मिन्द्यौः पृथिवी चान्तरिक्षमोतं मन ओतं प्राणा ओताः' इत्यत्रोक्तानां लिङ्गानामन्यत्र रुद्रादिविषयत्वे, शब्दबाहुल्यम् । 'प्राणानां ग्रन्थिरसि रुद्रो माऽऽविशान्तकः' । 'प्राणेश्वरः कृत्तिवासाः पिनाकी' 'मनो वै रुद्र ओतं च प्रोतं च' 'रुद्रो वाव लोकाधारः' इत्यादिकं शब्दबाहुल्यम् ।। १ ।।

### भूमाधिकरणम् १-३-२

'प्राणो वा आशाया भूयान्' इत्युक्त्वा प्राणाद्भूयसोऽनुक्तिः ।। २ ।।

### अक्षराधिकरणम् १-३-३

अत्तेत्युक्त्वा, 'न तदश्नाति किञ्चन' इति विरुद्धता ।। ३ ।।

### सदधिकरणम् १-३-४

'बहु स्यां प्रजायेय' इत्यन्यस्यान्यभावादृष्टिः ।। ४ ।।

### दहराधिकरणम् १-३-५

'दहरोऽस्मिन्नन्तर आकाशस्तस्मिन्यदन्तस्तदन्वेष्टव्यम्' इत्यनेन 'यावान् वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाशः' इत्यस्यान्वयाभावः ।। ५ ।।

### अनुकृत्यधिकरणम् १-३-६

'तदेतदिति मन्यन्ते' 'कथं नु तद्विजानीयाम्' इति 'तेषां सुखं शाश्वतम्' इत्युक्तज्ञानिसुखग्रहणमिति विपरीतश्रुतिभ्रमः।। ६ ।।

### वामनाधिकरणम् १-३-७

'ऊर्ध्वं प्राणमुन्नयति' इत्यादिलिङ्गानां प्राणादन्यत्रावकाश-राहित्यमिति भ्रमः । 'एवमेवैष प्राण इतरान् प्राणान् पृथक्पृथगेव सन्निधत्ते' इत्यादिवाक्याद्भ्रमः ।। ७ ।।

### कम्पनाधिकरणम् १-३-१०

वज्रशब्द उद्यतत्वलिङ्गं च तादृग्द्वयम् ।। १० ।।

### ज्योतिरधिकरणम् १-३-११

आदित्यादिज्योतिष्ट्वमुभयलोकसञ्चरणं 'आदित्येनैवायं ज्योति-

षाऽऽस्ते' इत्यवधारणमित्यादीनां परमात्मन्यवकाशाभावो बहुतादृक्त्वम् ।। ११ ।।

**आकाशाधिकरणम्  १-३-१२**

'वै नाम' इति प्रसिद्धिद्योतकनिपातद्वयं, रूढित्यागेनोक्त-यौगिकार्थस्वीकारे विरोधि(धः) ।। १२ ।।

**सुषुप्त्यधिकरणम्  १-३-१३**

जीवेश्वराभेदे ईश्वरोक्तावप्यर्थाज्जीव एवोच्यत इत्यर्थात्तथागतिः ।। १३ ।।

**ब्राह्मणाधिकरणम्  १-३-१४**

ब्राह्मणशब्दस्य पापालेपलिङ्गस्य च चतुर्मुखेन सह परमात्मनोऽभेदं विनाऽवकाशराहित्यादर्थादभेदप्राप्तिरिति समस्तमेतत् ।।१४।।

।। इति पूर्वपक्षन्यायनिरूपणम् ।।

**सिद्धान्तन्यायनिरूपणम्**

**द्युभ्वाद्यधिकरणम्  १-३-१**

तेषामेव लिङ्गशब्दानां 'प्राणानां ग्रन्थिरसि' इत्यादीनां विष्णौ मुख्यवृत्तिरिति बलवत्त्वम् । तस्य हि रुद्रावणादिकर्तृत्वं मुख्यम् ।। १ ।।

**भूमाधिकरणम्  १-३-२**

प्राणस्य विष्णोः सकाशाद्भूयस्त्वाऽनुक्तिः, चशब्देन 'एष तु

वा अतिवदति यः सत्येनातिवदति' इति प्राणाद्विष्णोर्भूयस्त्वोक्तिश्च ।। २ ।।

अक्षराधिकरणम् १-३-३

सर्वाधारप्रकृत्याधारत्वं, विष्णोरन्यस्य विरुद्धम् । 'पतिं विश्वस्यात्मेश्वरं' 'विश्वात्मानं परायणम्' इत्यादिश्रुतेः । अनशनोक्तिस्त्वनुपजीवनार्थत्वेनैव सावकाशा ।। ३ ।।

सदधिकरणम् १-३-४

अचेतनस्येक्षणाऽदृष्टिः । बहुभावश्रुतिस्त्वन्यभावं विना तन्नियामकतया स्वरूपबहुत्वार्थत्वेनैव युज्यते ।। ४ ।।

दहराधिकरणम् १-३-५

आकाशपक्ष एवान्वयाभावः । विष्णुपक्षे तु, 'योऽन्वेष्टव्यो भगवान् तस्यान्तर्हृदये यावान्वाऽयमाकाशस्तावानाकाशः, तस्मिन् द्यावापृथिवी अन्तरेव समाहिते, स भगवानपहतपाप्मे'त्यन्वयः ।। ५ ।।

अनुकृत्यधिकरणम् १-३-६

यज्ज्ञानाच्छाश्वतं सुखं स भगवान् यद्ब्रह्मानिर्देश्यं सुखमिति वदन्ति तदेतत्स्वरूपमिति मन्यन्ते । अतः पूर्ववादविपरीतैव श्रुतिः । पूर्ववादोक्तयोजना तु भ्रम एव ।। ६ ।।

## वामनाधिकरणम्  १-३-७

लिङ्गानां परमात्मन्यवकाशो वियत एवेति तद्राहित्यं भ्रम एव । वामनश्रुतेरेवानवकाश इति ईशानशब्दोक्तो विष्णुरेव ।। ७ ।।

## कम्पनाधिकरणम्  १-३-१०

वज्रशब्दस्योद्यतत्वस्य च विष्णावेवावकाशः । उद्यमित्व-मेवोद्यतत्वमिति ।। १० ।।

## ज्योतिरधिकरणम्  १-३-११

'अयं पुरुषः' इति संसारी । आत्मशब्दोदित एव विष्णुः । अत आदित्यादिज्योतिष्ट्वं संसारिण एव । 'आदित्येनैव' इत्यवधारणं बाह्यज्योतिषु प्राधान्यापेक्षयेत्यादि । लोकसञ्चरणं तु जीवमादाय तस्यैवादुःखेन स्वातन्त्र्यात् ।। ११ ।।

## आकाशाधिकरणम्  १-३-१२

वै नामेति निर्वहितृत्वे श्रुत्यादिप्रसिद्धिबाहुल्यम् । प्रसिद्धाकाश-स्योक्तमनामरूपत्वं विरुद्धम् ।। १२ ।।

## सुषुप्त्यधिकरणम्  १-३-१३

सुषुप्त्युत्क्रान्त्योर्जीवेश्वरयोर्भेदोक्तेरसङ्गत्वादि चेश्वरस्यैवेत्यर्थाद्भेद एव भवति । जीवस्य तदयुक्तेरीशे सावकाशत्वाच्च ।। १३ ।।

## ब्राह्मणाधिकरणम्  १-३-१४

'ब्रह्मणा वेदेन गम्यते' इति ब्राह्मणशब्दो विष्णावेव युज्यत

इत्यर्थादजशब्दोऽपि तस्मिन्नेव । चतुर्मुखस्य कर्मफलाभावा-युक्तेस्तयोर्भेदोऽर्थादापद्यते । उक्तविरोधश्च तत्रैव । भेदश्रुति-बाहुल्यात् । तल्लिङ्गं स शब्दश्च चतुर्मुखेऽनवकाश इति समस्तमेतत् ।। १४ ।।

।। इति सिद्धान्तन्यायनिरूपणम् ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीमद्ब्रह्मसूत्रानुव्याख्यान्यायविवरणे प्रथमाध्यायस्य तृतीयः पादः ।।

## प्रथमाध्यायस्य चतुर्थः पादः

### आनुमानिकाधिकरणम् १-४-१

अवरत्वादिधर्मनियन्तृत्वं तत्तादात्म्यवत्त्वं चेति द्विविधं ह्यवरत्वादि । 'निरनिष्टो' 'निरवद्यः' इत्यादिश्रुतेस्तत्तद्दोष-तादात्म्यात्यस्पृष्टिनियमात् विष्णोः 'नामानि सर्वाणि यमा-विशन्ति' इति श्रुतिबलाच्च नियन्तृत्वमवरत्वादिकमित्यापतति । श्रुतिद्वयस्यापि निरवकाशत्वात् । मृत्युशब्दादिषु प्रसिद्धेश्च । प्रसिद्धत्वात्कर्तृव्युत्पत्तेः । 'तमेव मृत्युममृतं, तात दैवं सर्वात्मनावैहि परं परायणम्' इत्यादेश्च । उपचारकल्पनायाश्च क्लिष्टत्वात् । प्रमाणाभावाच्च । नाव्यक्तादिशब्दानां परमात्म-विषयत्वाङ्गीकारे सर्वमानविरोधः ।। १ ।।

### ज्योतिरुपक्रमाधिकरणम् १-४-२

रूढो, रूढियोगो, महायोगो, महारूढियोगो, रूढोपचारो ,

रूढलक्षणोपचारो , लक्षणेति शब्दवृत्तिभेदाद्रूढिपूर्वकत्वेन महायोगवृत्त्या परमेश्वरेऽखिलशब्दव्युत्पत्त्युपपत्तेः ॥ २ ॥

### न सङ्ख्योपसङ्ग्रहाधिकरणम् १-४-३

बहुरूपत्वादधिकरणाधेयत्वादि तस्यैव युज्यते ।

### आकाशाधिकरणम् १-४-४

व्यक्त्यपेक्षया (कार्यत्वं) कारणत्वं च ॥ ४ ॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्ब्रह्मसूत्रानुव्याख्यान्यायविवरणे प्रथमाध्यायस्य चतुर्थः पादः ॥

॥ प्रथमाध्यायः समाप्तः ॥

## द्वितीयाध्यायस्य प्रथमः पादः

### स्मृत्यधिकरणम् २-१-१

रुद्रादीनां सकाशाद्विष्ण्वादीनामेवाप्तत्वम् । श्रुत्यनुसारित्वात् ॥ १ ॥

### नविलक्षणत्वाधिकरणम् २-१-२

न श्रुतेः रुद्रादिस्मृतिसाम्यं किन्तु साक्षिप्रत्यक्षसाम्यमेव निरपेक्षत्वात् ॥ २ ॥

### अभिमान्यधिकरणम् २-१-३

न मृदादीनां वचनाद्यदृष्टिः श्रुत्यप्रामाण्यकारणम् । अपि तु वचनादिशक्ताया देवताया मृदादिशब्दवाच्यत्वद्योतिकैव ॥ ३ ॥

### असदधिकरणम् २-१-४

ईश्वरस्य स्रष्टृत्ववदसतोऽपि स्रष्टृत्वं श्रूयत इति नास्ति । सोऽसच्छब्दो ब्रह्मशब्दवदेव ब्रह्मवाचक इति श्रुतेः साम्यम् ।। ४ ।।

### भोक्त्रधिकरणम् २-१-५

'कर्माणि विज्ञानमयश्च आत्मा परेऽव्यये सर्व एकीभवन्ति' इति श्रुतिबलान्नैक्यम् । किन्तु , भेदापादकमेवैतत् , 'निरञ्जनः परमं साम्यमुपैति' 'परात्परं पुरिशयं पुरुषमुपैति दिव्यम्' इति सन्निहितवाक्यबलात् । एकीभावशब्दस्तु सान्निध्येऽपि भवति ।

'एकीभूता तु सा सेना पाण्डवानभ्यवर्तत' इतिवत् ।

'यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति ।
एवं मुनेर्विजानत आत्मा भवति गौतम' ।।

इति वाक्यान्तराच्च ।। ५ ।।

### आरम्भणाधिकरणम् २-१-६

न लौकिकसर्वकार्यानुसारेणाकर्तृतन्त्रत्वं सर्वानुसारः । किं तर्हि, तद्वैलक्षण्येन सर्वकर्तृविलक्षणसर्वशक्तित्वमेवाशेषयुक्तिश्रुत्यनुसारि । 'एष सर्वेश्वरः' इत्यादिश्रुतेः । युक्तिमात्राच्छ्रुतियुक्ता हि युक्तिर्बलवती ।। ६ ।।

### इतरव्यपदेशाधिकरणम् २-१-७

न चेश्वरत्यागेन जीवस्यैव कर्तृत्वाङ्गीकारे कल्पनालाघवम् ।

श्रुतिसिद्धत्वेनाकल्पनात् । अश्रुतजीवकर्तृत्वाङ्गीकारे गौरवमेव । तदभावे सिद्धान्ते लघुता । 'नान्यः कर्ता, स हि स्वतन्त्रः, परमात् परमो हरिः' इत्यादेश्च । अभेदपक्षस्तु निराकृतः । श्रुत्यनुभवविरोधाच्च ॥ ७ ॥

**श्रुतेस्तु शब्दमूलत्वाधिकरणम् २-१-८**

शब्दैकसमधिगम्यत्वसर्वशक्तित्वादीनां विशेषाणामदर्शनं जीवे । न जीवाद्विशेषादर्शनं परमेश्वरे । विशेषश्रुतेरेव ॥ ८ ॥

**न प्रयोजनाधिकरणम् २-१-९**

न च प्रयोजनाभावोऽकर्तृत्वे कारणम् । अशेषकर्तृत्वापादकश्च । फलापेक्षिणस्त्वपूर्णत्वादेव न सर्वकर्तृत्वादिशक्तिः, इतरस्य पूर्णत्वादेवानन्तशक्तित्वाल्लीलयैव कर्तृत्वम् ॥ ९ ॥

**वैषम्यनैर्घृण्याधिकरणम् २-१-१०**

नेशस्य पूर्णत्वासिद्धिः । कर्मसापेक्षत्वेऽनीशत्वमनपेक्षत्वे श्रुतेरप्रामाण्यमिति । कर्मणोऽपि तदधीनत्वम् । तथापि तदनुसारेण फलदानमित्यनङ्गीकार एवेष्टश्रुतिप्रामाण्यासिद्धिः॥ १० ॥

**सर्वधर्मोपपत्त्यधिकरणम् २-१-११**

सर्वचेतना अपूर्णगुणा इति नियमो न । स्वतन्त्रस्य पूर्णगुणत्वनियमात् ।

'अपूर्णोऽयं जीवसङ्घोऽस्वतन्त्रः
पूर्णो हरिर्यः स्वतन्त्रः सदैव ।

न हि स्वतन्त्रोऽपूर्णतां कामयीत
पूर्णो यदि स्यादस्वतन्त्रः कुतः सः' ।। इति श्रुतेः ।।११।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीमद्ब्रह्मसूत्रानुव्याख्यान्यायविवरणे द्वितीयाध्यायस्य प्रथमः पादः ।।

****

## द्वितीयाध्यायस्य द्वितीयः पादः

उक्तविरोधिनस्तत्तत्समयसिद्धाः पूर्वपक्षन्यायाः, तद्विरोधिनोऽन्ये, इति प्रसिद्धा एव ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीमद्ब्रह्मसूत्रानुव्याख्यान्यायविवरणे द्वितीयाऽध्यायस्य द्वितीयः पादः ।।

## द्वितीयाध्यायस्य तृतीयः पादः

### वियदधिकरणम् २-३-१

न च वियत उत्पत्तिमत्त्वेऽनुभूतियुक्तिबहुवाग्विरोधोऽस्ति । व्यवस्थाऽयोगात् । अवकाशमात्रस्याव्याकृतात्मकत्वादनुत्पत्तिवचनानां तद्विषयत्वं, उत्पत्तिवचनानामसितवर्णभूततदभिमानिशरीरविषयत्वं पराधीनविशेषवत्त्वमात्रविषयत्वं चेति व्यवस्था ।

'आकाशो नीलिमोदेति न प्रदेशः कथञ्चन ।
अभावो हि प्रदेशस्य न ह्यत्राभाव इत्यपि' ।।
इति पैङ्गिश्रुतेः ।। १ ।।

## मातरिश्वाधिकरणम्  २-३-२

ततोऽधिकमेतत्सर्वमनुभूत्यादिविरुद्धत्वं वायूत्पत्ताविति, न वायोरेव मुख्यानुत्पत्त्यनुपपत्तेः । पराधीनविशेषवत्त्वमात्रं ह्युत्पत्तिः । तदभावे उभयोः स्वातन्त्र्यं विरुद्धमेव । सर्वोत्तमत्वानुपपत्तेः । उभयोरपि पराधीनत्वप्राप्तेश्चान्योन्यानुरोधे, अननुरोधे तु न सर्वैश्वर्यम् । ज्ञानाविस्मृत्या वायावपि व्यवस्थेत्यतिदेशः । अनुपपत्तिस्तु तत्प्रापिका । पराधीनविशेषवत्त्वमात्रं त्वव्याकृताकाशस्य तदभिमानिप्रकृतेश्च सममेव ।। २ ।।

## असम्भवाधिकरणम्  २-३-३

न च सतः पराधीनविशेषवत्त्वं स्वातन्त्र्यात् ।। ३ ।।

## तेजोऽधिकरणम्  २-३-४

न च विष्णोरेव तेजस उत्पत्तौ द्वारकारणवैयर्थ्यम् । द्वारमनुसृत्यैव विष्णोः प्रवृत्तेः ।। ४ ।।

## अबधिकरणम्  २-३-५

न च तेजस एवापामुत्पत्त्यङ्गीकारे घर्मात्स्वेदादिदृष्ट्यनुसारित्वमिति गुणाधिक्यम् । मुख्यार्थपरित्यागप्राप्तेः ।। ५ ।।

## पृथिव्यधिकरणम्  २-३-६

'न चाद्भ्यो वाऽन्नमुत्पद्यत' इत्याद्युक्तप्रसिद्धान्नाख्यान्यार्थाविरोधेन प्रसिद्धान्ननामस्वीकारे बहुवाक्यानुवर्तितेति गुणः । अन्नशब्दस्य प्रयोगबाहुल्यात्पृथिव्यामपि शक्तिमत्त्वात् ।

अधिकारादीनां निरवकाशत्वाच्च । बहुवाक्यानुरोधोऽप्यत्रैवेति ॥ ६ ॥

### तदभिध्यानाधिकरणम् २-३-७

न च रुद्रादीनां लयकारित्वाङ्गीकारे, पितुरन्यस्यैव मारकत्वदृष्टेर्लोकदृष्ट्यनुसारित्वमिति गुणः । लोकपितृवैरूप्याद्विष्णोर्यथावाक्यमङ्गीकारोपपत्तेः । अन्यथा 'न विष्णोरन्यो विलयकृन्न विष्णोरन्यो विमुक्तिदः' इत्यादिश्रुतिविरोधात् । रुद्रस्य तु क्वचित्संहारद्वारत्वेनैव तद्वाक्यानां सावकाशत्वात् ॥ ७ ॥

### विपर्ययाधिकरणम् २-३-८

न च लोकानुसारित्वम् । 'क्रमादुत्पद्यते, क्रमाद्विलीयते, क्रमेणैवोत्पत्तिर्विलयश्च, क्रमेणैवास्योत्पत्तिविलयौ' इत्यादिलोकानुसारिबहुवाक्यानुरोधश्च यथोत्पत्तिलये ।

'द्विविधः क्रम उद्दिष्टो व्युत्क्रमोऽनुक्रमस्तथा ।
सृष्टावन्यो लये चाऽन्य इति वेदविदो विदुः' ॥

इति श्रुतेः क्रमवाक्यस्य सावकाशत्वाद्वैरूप्यं बहुप्रकारत्वं क्रमस्य ॥ ८ ॥

### अन्तराधिकरणम् २-३-९

न च केषाञ्चित्क्रमाल्लयः, केषाञ्चिद्व्युत्क्रमाल्लय इत्यङ्गीकारे लोकदृष्ट्यनुसारादन्तरा विज्ञानमनसी व्युत्क्रमः । 'सर्वं वा एत-

त्क्रमादुत्पद्यते, व्युत्क्रमाल्लीयते' इति श्रुतौ, सर्वस्यापि व्युत्क्रमाल्लयसङ्ग्रहात् । तल्लिङ्गस्य तु चराचरव्यपाश्रयविज्ञानादि-विषयत्वेनैव सावकाशत्वात् ।। ९ ।।

### आत्माधिकरणम् २-३-१०

न च चेतनत्वेन साम्याद्विष्णोरपि देहलयः । 'सर्वे वा एते चिदात्मानो ब्रह्मन् लयमनुप्राप्य विष्णोरुदरे संविशन्ति' इति तस्योदरे सर्वसङ्ग्रहणादिश्रुतिभ्यो नित्यत्वावगमात्तदेहस्य । अश्रुतत्वाच्चान्यथा ।। १० ।।

### ज्ञाऽधिकरणम् २-३-११

न चानादित्वाज्जीवस्य पराधीनविशेषाप्राप्तिः । 'इदं सर्व-मसृजत' इति सर्वस्मिन् गृहीतत्वात् । पराधीनविशेषवत्त्वेऽप्य-नादित्वस्याविरोधात् ।। ११ ।।

### उत्क्रान्त्यधिकरणम् २-३-१२

न च सर्वदेहस्पर्शज्ञानाद्रसादीनां च तत्र तत्र परिज्ञानाज्जीव-स्यानणुत्वम् । उत्क्रान्तिगत्यादेः । आदिशब्देन सूक्ष्मतेजोरूपेण व्याप्त्या स्पर्शादिज्ञानोपपत्तिः । अतोऽणुत्वमनणुत्वं चेति भावः ।। १२ ।।

### व्यतिरेकाधिकरणम् २-३-१३

न च जीवस्य बहुरूपत्वशक्तावीशेन गुणसाम्यम् । ईशशक्त्यैव बहुरूपत्वादेः ।। १३ ।।

### पृथगुपदेशाधिकरणम् २-३-१४

न च श्रुत्या जीवेश्वरैक्यम् । सर्वमानविरोधात् । श्रुतेः सादृश्यैक्यादिना सावकाशत्वात् । बहुमानविरोधे एकस्य दौर्बल्यात् । धर्मिग्राहकविरोधाच्च ।। १४ ।।

### यावदधिकरणम् २-३-१५

न चोत्पत्तिमत्त्वाद्विनाशित्वं जीवस्य । अनित्यत्वे तदभीष्ट-मोक्षाद्यसिद्धेः । न हि पराधीनविशेषवत्त्वमात्रेण विनाशित्वम् । तादृशानामेव नित्यत्वश्रुतिविरोधात् ।। १५ ।।

### पुंस्त्वाधिकरणम् २-३-१६

न च स्वगुणाननुभूत्यनुपपत्तेः पूर्वज्ञानादीनां सामस्त्येनाभावः । पूर्वमव्यक्तानां पश्चात्सुव्यक्त्युपपत्तेः ।। १६ ।।

### कर्त्रधिकरणम् २-३-१७

न चेश्वरस्यैव कर्तृत्वे कल्पनालाघवम् । जीवस्याकर्तृत्वे शास्त्र-वैयर्थ्यात् । तस्यापि कर्तृत्वे शास्त्रार्थसिद्धेश्च ।। १७ ।।

### अंशाधिकरणम् २-३-१८

न च नानाश्रुतेरप्रामाण्यम् । दृष्टभेदानुसारेण तासामर्थोपपत्तेः । अप्रामाण्यकल्पनस्य विपरीतज्ञानमूलत्वात् ।। १८ ।।

### अदृष्टाधिकरणम् २-३-१९

न च वैचित्र्यमनाभासत्वे कारणम् । जीवानां सामान्यतः आभासत्वेऽपि विशेषादृष्टाद्वैचित्र्योपपत्तेः ।। १९ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीमद्ब्रह्मसूत्रानुव्याख्यान्यायविवरणे द्वितीयाध्यायस्य तृतीयः पादः ।।

# द्वितीयाध्यायस्य चतुर्थः पादः

## प्राणोत्पत्त्यधिकरणम् २-४-१

न च प्राणानामुत्पत्त्यङ्गीकारे, 'प्राणा एवानादयः' इत्यादिस्पष्टार्थवद्विशेषश्रुतिविरोधः । 'आत्मैवेदमग्र आसीत्स प्राणमसृजत, स प्राणान्' इत्यादिवचनादनादित्व एव स्पष्टार्थ-वद्विशेषश्रुतिविरोधात् । 'इदं सर्वमसृजत' इति सामान्य-वचनस्याधिक्यं सिद्धान्ते । विशेषमात्रश्रुतेः सावकाशाया उभयश्रुतेः प्राबल्यात् ।। १ ।।

## तत्प्रागधिकरणम् २-४-२

न च 'नित्यं मनोऽनादित्वात्' इति विशेषश्रुतिविरोधः । 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च' इति विशेषश्रुतेः ।। २ ।।

## तत्पूर्वकत्वाधिकणम् २-४-३

न च 'वाग्वाव नित्या' इति विशेषश्रुतिविरोधः, 'मनसो वा व वागुत्पद्यते, वाचो व्याहरणम्' इति विशेषश्रुतेः ।। ३ ।।

## सप्तगत्यधिकरणम् २-४-४

न च 'दशेमे पुरुषे प्राणाः आत्मैकादशः' 'सप्त प्राणाः

प्रभवन्ति तस्मात्' इति संख्याविशेषश्रुत्योरेव परस्परं विरोधः । 'गुहाशयां निहिताः सप्त सप्त' इति सप्तभावस्य बुद्धीन्द्रियविषयत्वेन विशेषितत्वात्सङ्ख्याश्रुत्योर्विषयवैलक्षण्यात् ।। ४ ।।

### अण्वधिकरणम् २-४-५

न च 'दिवीव चक्षुराततम्' इति व्याप्त्याख्यविशेषवाचकश्रुतिविरोधः 'अणूनि वा इन्द्रियाणि तेषां प्रकाशो व्याततः' इति ततोऽप्यणुत्ववाचकविशेषश्रुतिविरोधात् ।। ५ ।।

### (मुख्यप्राणा) श्रेष्ठाधिकरणम् २-४-६

न च-

'यत्प्राप्तिर्यत्परित्याग उत्पत्तिर्मरणं तथा ।
तस्योत्पत्तिर्मृतिश्चैव कथं प्राणस्य युज्यते' ।।

इत्यादिमाहात्म्यवचनात् मुख्यप्राणस्य नोत्पत्तिरिति वाच्यम् ।

'महत्त्वात् महतां विष्णुः कर्ता प्राणस्य चैकराट् ।
किं नाम न सृजेदेष येन शक्त्येदमावृतम्' ।।

इति श्रुतेस्ततोऽपि माहात्म्याद्विष्णोः ।। ६ ।।

### चक्षुराद्यधिकरणम् २-४-७

### पञ्चवृत्त्यधिकरणम् २-४-८

न च प्राणादिपञ्चकस्य व्यक्तसद्गुणत्वात् मुख्यप्राणवृत्तित्वमेव ।

'अशेषगुणपूर्णानि मुख्यरूपाणि पञ्च च ।
तद्दासाः पञ्च चान्येऽपि प्राणाद्याः सद्गुणैर्युताः' ।।

इति श्रुतेर्मुख्यप्राणस्य ततोऽपि व्यक्तसद्गुणत्वात् ।। ८ ।।

### अण्वधिकरणम् २-४-९

न चाणुत्वे प्राणस्य 'महान्वै मुख्यप्राणो येन व्याप्तं चराचरम्' इति दृष्टायुक्तिः । 'अणुर्वै मुख्यप्राणो य उत्क्रामति नाडीभिः' इति दृष्टाऽयुक्तिरनणुत्वे प्राणस्य ।। ९ ।।

### ज्योतिराद्यधिकरणम् २-४-१०

न चेन्द्रियाणां जीवाकरणत्वे दृष्टाऽयुक्तिः। क्वचिदतद्वशत्वस्यापि दृष्टत्वात् । 'यश्चक्षुषि तिष्ठन्' इत्यादिदृष्टायुक्तेरीशाधीनत्वानङ्गीकारे । लौकिकदृष्टेस्त्वीशेनैव जीवानुसारित्वक्लृप्त्योपपत्तेः ।।१०।।

### त इन्द्रियाधिकरणम् २-४-११

न चेशवशत्वसाम्यात् मुख्यप्राणस्याप्यन्यसाम्यम् । 'यदस्मिन्निदं सर्वमध्याधृोत्' । 'प्राणस्यैतद्वशे सर्वं त्रिदिवे यत् प्रतिष्ठितम्' इत्यादिश्रुतेरीशसाम्यस्यापि भावात् । 'प्राणस्यैतद्वशे सर्वं प्राणः परवशे स्थितः' इति श्रुतेर्मध्यमत्वोपपत्तेः ।। ११ ।।

### संज्ञाधिकरणम् २-४-१२

न च विरिञ्चस्यापि कर्तृत्वशक्तेः स एव शरीरादिस्रष्टा ।

'त्रिवृत्क्रिया यतो विष्णो रूपं च तदपेक्षया ।
रूपापेक्षं तथा नाम व्यवहारस्तदात्मकः ।।
अतो रूपस्य नाम्नश्च व्यवहारस्य चैकराट् ।
हरिरेव यतः कर्ता पिताऽतो भगवान् प्रभुः' ।।

इत्यादेस्तस्यैव कर्तृत्वशक्तेर्विरिञ्चस्य तु द्वारतयोपपत्तेः ।।१२।।

## मांसाधिकरणम् २-४-१३

न च विमिश्रितत्वाद्भूतानां विमिश्रतायामविशेषः । 'अन्नमशितं त्रेधा विधीयते' इत्यादिना मिश्रतायामपि विशेषोक्तेः ।

'सर्वं च भौतिकं मिश्रं मिश्रत्वेऽपि विशेषिता ।
भौमं मांसमसृग्वारि तेजो मज्जा विशेषतः' ।।

इत्यादेश्च ।। १३ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्ब्रह्मसूत्रानुव्याख्यान्यायविवरणे द्वितीयाध्यायस्य चतुर्थः पादः ।।

।। द्वितीयाध्यायः समाप्तः ।।

***

# तृतीयाध्यायस्य प्रथमः पादः

## तदन्तराधिकरणम् ३-१-१

'भूतबन्धस्तु संसारो मुक्तिस्तेभ्यो विमोचनम्' इति वचनात् स्वाभाविकमरणमेव मुक्तिरिति न मन्तव्यम् । मुक्तिसाधनत्वेन ज्ञानादिगुणाधिक्योपदेशान्मरणे भूतवियोगस्यैवाभावात् । 'भूतयुक्तः परं लोकमिमं लोकं च गच्छति' इत्यादिवचनाच्च ।। १ ।।

## त्र्यात्मकत्वाधिकरणम् ३-१-२

'इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति' इत्यत्र भूतानीति सामान्यनामानुक्त्वाऽपामिति विशेषनामकथनादपामेव सहगतिरिति न वाच्यम् । त्र्यात्मकत्वादपामर्थतः सर्वभूतानां गतिप्राप्तेः ।। २ ।।

## प्राणगत्यधिकरणम् ३-१-३

न च भूतानि गच्छन्तीति सहैवानुक्तेस्तदभावः । प्राणगतेरुपपत्तित उक्तत्वात् ।। ३ ।।

## अग्न्याद्यधिकरणम् ३-१-४

न च 'अग्निं वागप्येति' इत्याद्यन्यथोक्तेः प्राणानां च न सहगतिः । द्विरूपत्वात् प्राणानाम् ।। ४ ।।

## प्रथमाधिकरणम् ३-१-५

न च 'प्रथमतो भूतानि जुह्वति' इति विशेषानुक्तेर्भूतानाम-

सहगतिः । 'भूतानि जुह्वति' इत्युपक्रमादपि 'इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति' इत्युपसंहारस्याधिक्यात् तदनुसारेणोपक्रमोक्तश्रद्धाशब्दस्यापि ता एवार्थ इत्यापत्तेः । उपक्रमविरोधेनोपसंहारानुपपत्तेः । उपक्रमप्रामाण्यार्थमेवोपसंहारानुसारित्वमङ्गीकर्तव्यम् । व्याख्यानस्य पश्चात्तनत्वनियमात् । उपक्रमानुसारित्वनियमेऽप्युपसंहारस्योपसंहारेणैवोपक्रमार्थो ज्ञायते ।। ५ ।।

## अश्रुतत्वाधिकरणम् ३-१-६

न च विशेषाश्रवणनियम एव बलवान् । स्थानान्तरश्रवणस्याप्येतदनुरूपत्वात् । आर्थिकश्रवणमप्यनुक्तिं बाधत एव । किमु स्थानान्तरगतं स्पष्टश्रवणमिति कैमुत्यार्थमेव ''नेष्टादिकारिणां प्रतीतेः'' इति परिहारान्तरमुक्तम् ।। ६ ।।

## भाक्ताधिकरणम् ३-१-७

न च 'अपाम सोमममृता अभूम' इति विशेषत एव मोक्षफलस्याप्युक्तेः कर्मैव मोक्षसाधनमिति मन्तव्यम् । 'नान्यः पन्था अयनाय विद्यते' । 'स य आत्मानमेव लोकमुपास्ते' 'यावदिन्द्रो यावन्मनुः' । इत्यादिश्रुतिबलादमृतशब्दस्य यथायोग्यमेवार्थकल्पनोपपत्तेः ।। ७ ।।

## कृतात्ययाधिकरणम् ३-१-८

न चानुशयस्य सहभावात् स्वर्ग एव फलदत्वम्, भुक्तशेषानुशयवान्' इत्यादिवचनाद्यथायोग्यमेव फलदानोपपत्तेः ।। ८ ।।

## यथेताधिकरणम्  ३-१-९

न च मार्गस्यापि सहभावाद्यथागतमेवागमनमिति नियमः । वचनबलाद्यथायोग्यमेवागमनोपपत्तेः ।। ९ ।।

## चरणाधिकरणम्  ३-१-१०

न च 'इष्टापूर्ते दत्तमित्युपासते' इत्युपशब्देनेष्टादिभिराचारस्य सहपाठाच्चरणफलं पुनरावृत्तिं करणफलत्वेन भ्रमाद्वदन्तीति वाच्यम् । 'नान्यः पन्थाः' इत्यादिवचनादेवोभयोरपि चरण-शब्देनैवोक्तेर्योग्यत्वात् ।। १० ।।

## अनिष्टाधिकरणम्  ३-१-११

न च भयफलकामादिमिश्रबुद्धित्वादिष्टादिकारिणां संसारः । अनिष्टादिकारिणां तदभावान्मुक्तिरिति वाच्यम् । तेषां प्रबल-दोषश्रुतेः ।। ११ ।।

## अपिसप्ताधिकरणम्  ३-१-१२

न च नरकभोगस्यानित्यत्वकथनान्नित्यनरकोक्तिर्विरुद्धा ।

'रौरवोऽथ महांश्चैव वह्निर्वैतरणी तथा ।
कुम्भीपाक इति प्रोक्तान्यनित्यनरकाणि तु ।
तामिस्रश्चान्धतामिस्रो द्वौ नित्यौ सम्प्रकीर्तितौ' ।।
इति विभागात् ।। १२ ।।

### तत्राप्यधिकरणम् ३-१-१३

न च सहस्थानादीशस्यापि नरकदुःखप्राप्तिः । स्वातन्त्र्यात्कारणाभावात् ।। १३ ।।

### विद्याधिकरणम् ३-१-१४

न च साधनेन सह श्रुतेस्तद्वत्फलेऽपि जीवस्य स्वातन्त्र्यम् । अविहितत्वेन कारणाभावात् । 'अथैतयोः पथोः' इत्यस्य च साधनार्थत्वात् ।। १४ ।।

### न तृतीयाधिकरणम् ३-१-१५

न च दुःखसहस्थायित्वादन्धेतमस्यपि सुखम् । ईशस्याप्रियत्वेनैव कारणाभावात् ।। १५ ।।

### तत्स्वाभाव्याधिकरणम् ३-१-१६

न च धूमादिदेवतासहावस्थानात्कर्मिणोऽपि तत्पदप्राप्तिः । तन्निमित्तविद्याख्यकारणाभावात् ।। १६ ।।

### नातिचिरेणाधिकरणम् ३-१-१७

न च तैस्तैः सहावस्थानादतिचिरत्वम् । 'वत्सरात्पूर्वमेव तु' इति क्लृप्तकालादधिकावस्थाने कारणाभावात् ।। १७ ।।

### अन्याधिकरणम् ३-१-१८

न च व्रीह्यादिजीवैः सहावस्थानाद्दुःखप्राप्तिः । शब्दविहितत्वेन पापाख्यकारणाभावात् ।। १८ ।।

### रेतोऽधिकरणम् ३-१-१९

न च वैयर्थ्यं पितृशरीरागमने, 'ईशक्त्यैव पितरं प्रविश्यायाति मातरम्' इतीशक्तत्ववचनात् ।। १९ ।।

### योन्यधिकरणम् ३-१-२०

न च पितुः सकाशादन्यतो वौदर्यगर्भस्थशरीरमेव प्रवेष्टुमुपपत्तेर्योनिप्रवेशाभाव इति वाच्यम् । 'योनिद्वारेण देहं च प्राप्नोति प्रायशो नरः' इति वचनात्सामान्यतो गत्यन्तराभावात् ।

'विशेषकारणादेव विशेषाज्जनिरिष्यते ।
सामान्यजननं चैव नृणां सामान्यहेतुतः' ।

इति वचनाच्च ।। २० ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीमद्ब्रह्मसूत्रानुव्याख्यान्यायविवरणे तृतीयाध्यायस्य प्रथमः पादः ।।

***

## तृतीयाध्यायस्य द्वितीयः पादः

### सन्ध्याधिकरणम् ३-२-१

पश्चाददृष्टेः स्वप्नविषयस्यासत्वं न वाच्यम् । अशक्यक(का)रणशक्तिमत्त्वादीश्वरस्य संस्कारेण सृष्ट्वा पुनः संस्कारमात्रतामापाद्य तस्यापि तिरोधानोपपत्तेः । जाग्रत्त्वप्रतीतिमात्रस्य भ्रान्तित्वात् ।। १ ।।

### पराभिध्यानाधिकरणम् ३-२-२

न चाविज्ञानमात्रेण स्वप्नप्रतीत्या ज्ञानशक्त्यैव स्वप्रतिरोधानं नेशेनेति वाच्यम् । बोधे जीवस्यास्वातन्त्र्यात् । ज्ञानाज्ञानयोस्तदन्यत्वे, जडत्वात् कैमुत्येनास्वातन्त्र्यात् । तत्स्वरूपत्वे तेनैव व्याख्याततत्वात् । उभयात्मकत्वे दोषद्वयापातात् । अनुभयात्मकत्वे स्वव्याहतेः । तावन्मात्रनिमित्तत्वे मानाभावात् । सर्वस्येश(हेतुत्वे)वशत्वे मानाच्च ।। २ ।।

### देहयोगाधिकरणम् ३-२-३

न च कालापेक्षयैव जागरितम् । अचेतनत्वादेव कालस्य । चेतनान्तरस्याप्यस्वातन्त्र्यात् ।। ३ ।।

### तदभावाधिकरणम् ३-२-४

न च परमात्मनोऽन्यत्रावस्थाने दुःखित्वप्राप्तेर्नाडीषु सुप्तिर्न भवति । उभयस्वीकारोपपत्तौ मानस्य क्लृप्त्यकारणमित्यनवस्थितिदोषादतिप्रसङ्गात् ।। ४ ।।

### प्रबोधाधिकरणम् ३-२-५

न च प्रबोधस्य पृथगपि कारणदृष्टेः क्वचित्तदेव । 'न ऋते त्वत्क्रियते' इति श्रुतेस्तत्रापि ईशकृतत्वे सम्यङ्ज्ञानात् ।। ५ ।।

### कर्मानुस्मृत्यधिकरणम् ३-२-६

न च राजादीनां पृथग्दर्शनादीशान्तरकल्पना ।

'देशकालविशेषेऽपि स्वप्नादीनां स एव हि ।
तिरस्कर्ता च कर्ता च न खण्डेशः स राजवत्' ।।
इति श्रुतिमानात् ।। ६ ।।

### सम्पत्त्यधिकरणम् ३-२-७

न च मोहे ब्रह्मप्राप्तिरेव पृथगवस्थात्वादिति वाच्यम् । परिशेषमानादर्धप्राप्तित्वावगमात् ।। ७ ।।

### न स्थानतोऽप्यधिकरणम् ३-२-८

न च स्थानभेदाद्विष्णोरपि भेदः । 'अयमेव सः,' 'नेह नानास्ति किञ्चन' इत्यादिश्रुतिबलात् स्थानानां भेदस्तस्याभेद (एव)इति व्यवस्थोपपत्तेः ।। ८ ।।

### अरूपाधिकरणम् ३-२-९

न च रूपवत्त्वारूपवत्त्ववचनयोर्विरोधादप्रामाण्यम् । अप्राकृत-रूपवत्त्वमिति व्यवस्थोपपत्तेः ।। ९ ।।

### उपमाधिकरणम् ३-२-१०

न च परमात्मना चेतनत्वन्यायसाम्येन जीवस्याप्यभेदः । अल्पगुणत्वादिविरोधात् ।। १० ।।

### अम्बुवदधिकरणम् ३-२-११

न च सादृश्यस्य सत्वात्साधनं विनैव तादृक्त्वव्यक्तिः । अनादितः संसारस्यानिवृत्तत्वेन भावात् ।। ११ ।।

### वृद्धिह्रासाधिकरणम् ३-२-१२

न च मुक्तत्वादिगुणसाम्याद्ब्रह्मादीनां भक्त्यादिगुणसाम्यम् । यथा यथाऽधिकारो विशिष्यते, एवं ज्ञानं भक्तिर्बलं च विशिष्यते । मुक्तावानन्द एते च गुणा विशिष्यन्ते । अत आहुर्ब्रह्मणे मुक्ता बलिं हरन्ति' इत्यादिविशेषदृष्टेः ।। १२ ।।

### प्रकृतैतावत्त्वाधिकरणम् (पालकत्वाधिकरणम्) ३-२-१३

न च संहारकर्तुरसंहारादन्यरक्षाया अयोगः । 'स सृजति स पालयति स विनाशयति' इत्यादि विशेषवाक्यात् । अन्नदाना-द्युपपत्तेश्च ।। १३ ।।

### अव्यक्ताधिकरणम् ३-२-१४

न चाव्यक्तस्वभावस्य दर्शने तर्कबाधः । अनन्तशक्तित्वा-द्विष्णोस्तच्छक्त्याऽव्यक्तस्यापि दर्शनोपपत्तेः ।। १४ ।।

### अहिकुण्डलाधिकरणम् ३-२-१५

न च गुणानां गुणिस्वरूपत्वं विरुद्धम् । कालादिदृष्टान्तात् ।। १५ ।।

### परमताधिकरणम् ३-२-१६

न च ब्रह्मा(नन्दा)दीनामन्यथात्वात्तदतच्छब्दत्वं तच्छब्दत्वे लोकोपमत्वं चेति विलोमता ।

'अलौकिकास्तस्य शब्दास्तथाऽर्था अलौकिको ह्येष विष्णुः

परत्वात् । तथापि शब्दा लौकिका अप्यमुष्मिन् प्रवर्तमाना अधिकार्थान् वदन्ति' ।। इत्यादिश्रुतिभ्योऽलौकिकत्वावगमात् ।। १६ ।।

### स्थानविशेषाधिकरणम् ३-२-१७

न च ब्रह्माद्यानन्दवैचित्र्ये बिम्बभूतविष्ण्वानन्दवैचित्र्यम् आदित्यादिवदाधिक्यात् । न हि सूर्यकान्तप्रतिबिम्बस्याग्नि-जनकत्वशक्तिर्न जलगतस्येत्येतावता सूर्ये वैचित्र्यम् । आधिक्यं हि तत्र निमित्तम् । सूर्यचन्द्रादिप्रतिबिम्बं विनाऽन्यत्र तथा विशेषादृष्टेः ।। १७ ।।

### तथाऽन्यत्वाधिकरणम् ३-२-१८

न च नानाभावाद्विष्णोश्चित्तप्रतिबिम्बरूपता । आधिक्यादेव । प्रतिबिम्बे हि दोषाश्च प्रतीयन्ते । अतो हि श्रुतिः प्रतिषेधति 'नेदं यदिदमुपासते' इति ।। १८ ।।

### सर्वगतत्वाधिकरणम् ३-२-१९

न च नानावतारकौतुकदर्शनाद्विष्णोः क्वचिद्देशकालान्तरे कौतुकादेव सृष्ट्यादि कुर्वन्नन्यमेव सामस्त्येन नियोजयति । 'सर्वत्र सर्वमेतस्मात्' इत्यादिश्रुत्या क्रीडायामपि स्वातन्त्र्यात् ।

'स्वातन्त्र्यात् क्रीडते विष्णुर्न च स्वातन्त्र्यमन्यगम् ।
करोति क्वापि नियता क्रीडा सृष्ट्यादिकाऽस्य च ।।

नियतक्रीडनादेव कर्ता नान्योऽस्ति कस्यचित् ।
अस्वतन्त्रो हि चलति चलचित्तादशक्तितः ।
स्वतन्त्रः पूर्णशक्तिः सन् कुतोऽसौ नियतिं त्यजेत्' ।।
इति श्रुतेश्च ।। १९ ।।

फलाधिकरणम् ३-२-२०

न च कर्मान्वयव्यतिरेकात् फलस्येश्वरः फलदातेति प्रलोभमात्रम् । तस्यैव स्वातन्त्र्यात् ।

'कर्माण्यनन्तानि यथेष्टमीशः सम्पाद्य तेषां फलमिच्छयैव ।
क्वचिद्ददाति क्व च नो ददाति न ह्यानन्त्यात्कर्मणां भोगनाशः ।।
स्वातन्त्र्यं चेत्कर्मणां सर्वभोगः स्यान्न ह्येवं क्वापि तत्केनचित्स्यात् ।
अतो हि स स्वेच्छया किंचिदेव फलं कुर्याद्विफलं प्रायशश्च ।।
क्वचिज्ज्ञानं जनयन् भस्म कुर्यात्स्वेच्छावृत्तिस्तस्य विष्णोः सदैव' ।। इति ब्रह्माण्डे ।

'स्वतन्त्र ईश एवैकस्तद्वशं कर्म सर्वदा ।
अत ईशत्वमीशस्य न हीशोऽन्यः कथञ्चन ।' इति श्रुतेः ।
अतः प्रलोभकल्पने श्रुतहानिरश्रुतकल्पना चेति हरिरेव फलप्रदः ।। २० ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीमद्ब्रह्मसूत्रानुव्याख्यान्यायविवरणे तृतीयाध्यायस्य द्वितीयः पादः ।।

# तृतीयाध्यायस्य तृतीयः पादः

## सर्ववेदाधिकरणम् ३-३-१

न च प्रतिशाखमुच्यमानानामर्थानां पृथक्त्वात् तत्तच्छाखिभिरेव तत्र तत्रोक्तं ज्ञेयमिति नियमः ।

'नानावेदैरितिहासैः पुराणैः सुज्ञेय एको भगवान् युक्तिभिश्च' । इति श्रुतेः सुष्ठु ज्ञेयत्वाद्विष्णोः ।। १ ।।

## उपसंहाराधिकरणम् ३-३-२

न चाशक्यतया कस्यापि सर्वगुणोपसंहारो नास्ति । 'सर्वे गुणाः सर्वदैव ह्युपास्यास्तेनैव विद्वान् विधिकृन्नान्यथा स्यात्' इति श्रुतेः विहितक्रियालोपप्रसङ्गात् ।। २ ।।

## प्राप्त्यधिकरणम् ३-३-३

केषांचित्सर्वगुणोपसंहारस्य कर्तव्यत्वे सर्वेषामपि तथा स्यात् अनेनोपसंहर्तव्या, (इति) अनेन नोपसंहर्तव्या इति अनिर्णीतेरिति न मन्तव्यम् ।

'यस्य यावद्गुणाः स्पष्टं प्रतिभासन्त्युपासने ।
युगपत्स्वभुजौ यद्वद् ध्यायेत्तावत एव सः ।
युगपद्ब्रह्मणः सर्वे भासन्ते हि गुणा हरेः ।
तदन्येषां यथायोग्यं स्वमाहात्म्यानुसारतः' ।।

इति श्रुतेर्युगपद्गुणप्रतीत्यादिमाहात्म्यान्निर्णयोपपत्तेः ।। ३ ।।

### सर्वभेदाधिकरणम् ३-३-४

न च फलानिर्णीतिः । माहात्म्येनैवान्यत्फलं महतामिति निर्णयोपपत्तेः ।। ४ ।।

### आनन्दाद्यधिकरणम् ३-३-५

आनन्दादीनां केषांचित्समुच्चये प्राप्ते सर्वगुणसमुच्चयः सर्वेषां स्यादिति न मन्तव्यम् । अल्पशक्तित्वात्तेषां पुंसाम् ।। ५ ।।

### प्रियशिरस्त्वाधिकरणम् ३-३-६

प्रियशिरस्त्वादीनामानन्दादिविशेषत्वेनैव दर्शनात्तेषामपि सर्वोपसंहार्यत्वमिति न मन्तव्यम् ।

'यथायोग्यान् गुणपूगानुपास्य फलं भवेन्मुक्तिगं नान्यथा स्यात् ।
नित्यैकाग्र्यव्यङ्ग्यताहेतुतश्च साक्षाद्दृशिर्नो तद्विशेषैः स्मृतैश्च ।।'

इति श्रुतेः स्वयोग्यगुणैरेव (फल)भावात् ।। ६ ।।

### इतराधिकरणम् ३-३-७

तर्हि ब्रह्मणोऽन्येषां देवादीनामपि बहुगुणोपासनया कार्यं नास्ति । मध्ये नियमासिद्धेरिति न मन्तव्यम् । तेषां भाव्युत्कर्षं ज्ञात्वा तदभिज्ञस्य ब्रह्मण एव गुणनियमोपदेशोपपत्तेः ।

'यो यो भावो देवतानां विमुक्तौ तत्तत्प्राप्तौ सुगुणानीशितुश्च ।
ब्रह्माऽऽदिशत्यथ ताँस्ते विचिन्त्य तत्तद्भावं प्राप्नुवन्त्यात्मशक्त्या'

इति श्रुतेः ।। ७ ।।

### आध्यानाधिकरणम् ३-३-८

न च नानास्थानेषूक्तगुणानामनुपासनार्थत्वम् । विप्रकीर्णान् गुणान् पिण्डीकृत्योपासितुस्तत्सदृशफलप्राप्तेस्तथा ध्यानार्थमेव गुणानामुक्तिरित्युपपत्तेः ॥ ८ ॥

### आत्मगृहीत्यधिकरणम् ३-३-९

न चाश्वापरोक्ष्यायानन्दादीनामपि लोपेनात्मेत्येतावता पूर्यते । आत्मशब्दार्थविशेषत्वादानन्दादीनाम् ॥ ९ ॥

### अन्वयाधिकरणम् ३-३-१०

न चात्मशब्दो विभ्रमकरः । गुणाधिकानामधिकारिणां भगवद्गुणानधिकान् प्रकाशयतीत्यवधारणत्वोपपत्तेः ॥ १० ॥

### कार्याधिकरणम् ३-३-११

अलौकिकगुणानामप्रतीतेर्लौकिकगुणाध्याने तदपाकृतिरेव भवतीति न मन्तव्यम् । लौकिकविलक्षणा अत्त्युत्तमा इति ध्यानस्यैव प्राधान्यात् ॥ ११ ॥

### समानाधिकरणम् ३-३-१२

ब्रह्मणश्च ब्रह्माण्याश्च स्थानैक्यं गुणतारतम्यं च यथा गुणोपासनं मुक्तावाधिक्यं न भवतीत्यत्र लिङ्गम् । समविषमोपासनायुक्तेरिति न मन्तव्यम् ।

'यथाशक्ति स्मृतान् धात्रा गुणान्विष्णोः सरस्वती ।
स्मरेत् त्रैविक्रमाद्याँस्तु नित्यविक्रान्तिपूर्वकैः ।
कदाचिल्लोपयेद्देवी स्थानैक्यं न गुणैस्ततः ।
साम्यं तयोर्यथा विष्णोर्गुणोपासा फलं भवेत्' ।।

इत्यध्यात्मवचनाद्यथाशक्तिक्रिया देव्याः ।। १२ ।।

## नवाधिकरणम् ३-३-१३

न चात्मशब्देनास्य पुरुषस्यैतावन्तो गुणा उच्यन्त इति व्यवस्थित्यभावः । यस्य यावन्तोऽर्था युगपद्ध्यातुं शक्यन्ते तस्य तावन्त इति सन्धेः ।। १३ ।।

## सम्भृत्यधिकरणम् ३-३-१४

न च मुमुक्षव इत्यविशेषाद्भरणस्य द्युतेश्च सर्वेषामपेक्षितत्वाच्च सम्भृतिद्युव्याप्ती अपि सामान्ये ।

'सत्यो ज्ञानं परमानन्दरूप आत्मेत्येवं नित्यदोपासनं स्यात् ।
नान्यत्किंचित्समुपासीत धीरः सर्वैर्गुणैर्देवगणा उपासते ।।

गुण्याकारस्मृतेरेव द्युतिमात्रं प्रतीयते ।
न व्याप्तिर्जगदस्मृत्या नानाशक्तिर्यतो मता ।।
देवानां युगपज्ज्ञानं मनुष्याणां तथा न तु ।
पर्यायेणैव सत्याः स्युर्नैवान्येषां कथञ्चन' ।।

इत्यादिप्रमाणवलात् ।। १४ ।।

## पुरुषविद्याधिकरणम्  ३-३-१५

कचिद्बहुगुणाः कचिदल्पगुणाः श्रुतिष्वेवोच्यन्त इत्युपसंहारस्याप्रयोजनतेति न वाच्यम् । 'गुणाः सर्वे ब्रह्मणैव ह्युपास्या नान्यैर्देवैः किमु सर्वैर्मनुष्यैः' इत्यादिश्रुतेः । सर्वगुणोपासकस्याप्यधिकारिणोऽभावादेकत्रापृथक्सर्वगुणानुक्तेश्च बलादुपसंहारानतेः ।। १५ ।।

## वेधाधिकरणम्  ३-३-१६

## हान्यधिकरणम्  ३-३-१७

न च मुक्तावुपासनाभावे फलादिकमपि स्यादित्यतिप्रसङ्गः । उपासनायाः संस्काराख्यकारणस्य सत्वात् । 'न हीयते यत्र गत्वा यत्र गत्वा न वर्धते' इत्यवृद्धिप्रमाणभावाच्च ।। १७ ।।

## छन्दाधिकरणम्  ३-३-१८

न च कर्मकरणशक्तेरप्यदूरत्वात्तत्संश्रयनियमः। उपासनाख्ये कार्ये नित्यकृतिसंस्कारो न तथा कर्मणीति कार्यवैशेष्यात् ।। १८ ।।

## अनियमाधिकरणम्  ३-३-१९

न चायोग्यताख्यविशिष्टकारणाज्ज्ञानिष्वपि केषांचिन्मोक्षो न भवतीति नियमः । ज्ञानिनां मोक्षं ददात्येवेश्वरः । स्वभावात् । अयोग्यानां ज्ञानस्यैवोत्पत्त्यनुपपत्तेः ।। १९ ।।

## यावदधिकाराधिकरणम्  ३-३-२०

न च प्रयत्नानुसारिणो मुक्तावाधिकारिकानन्दादयः ।

अधिकारानुसारित्वात्प्रयत्नस्य । कथञ्चिदधिके यत्ने तत्साधनादि-वस्तूनां दूषणप्राप्तेः ।

'स्वाधिकाराधिको यत्नः प्रायशो नोपपद्यते ।
कथंचिदधिके यत्ने दोषः कश्चित्समापतेत्' ।।

इति वचनाच्च ।। २० ।।

### इयदामननाधिकरणम् ३-३-२१

न चैकस्मादेको विशिष्टो दृष्ट एवेति प्राणाद्विशिष्टजीवाभावे दृष्टवैरूप्यमिति दोषः । 'यः सर्वमवजानीयादृते देवं नारायणं देवीं च परमां श्रियम् । स प्राणानवरुध्येमं मन्त्रमावर्तयीत' । 'आत्मा देवानां भुवनस्य गर्भो यथावशं चरति देव एषः । घोषा इदस्य भृण्विरे न रूपं तस्मै वाताय हविषा विधेम' इति । 'स ह्येषां भूतानां वरिष्ठो न ह्येतस्मात्कश्चनोपरि विना देवं नारायणं देवीं च परमां श्रियम्' इति प्रतिक्रियाविधानादिविरोधात् ।। २१ ।।

### व्यतिहाराधिकरणम् ३-३-२२

'अस्ति भगवः प्राणाद्भूयः' इति प्रश्नाद्यभावात्प्राणस्यैवोन्नति-प्रतीतेर्न विष्णोरपि ततः परत्वमिति न मन्तव्यम् । 'एष तु वा अतिवदति' इति विशेषणात्प्रश्नप्रतिवचनप्रतिसन्धानोपपत्तेः ।। २२ ।।

### सत्याधिकरणम् ३-३-२३

न च सत्यादीनामभेदानुक्तेरन्यत्वम् ।

'सत्यं पूर्णं विज्ञानं पूर्णं कृतिः पूर्णा निष्ठा पूर्णा श्रद्धा पूर्णा मतिः पूर्णा सुखं पूर्णं भूमा पूर्णोऽहं पूर्ण आत्मा पूर्णो नात्र किञ्चिदूनं पूर्णमेवाधस्तात्पूर्णमुपरिष्टात् पूर्णं मध्यतः पूर्णं सर्वतः । तदेष श्लोको भवति ।

'पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते ।
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते' ।।

इति श्रुतेः सर्वेषामनूनत्वात् ।

'सत्याद्या अहमात्मान्ता यद्गुणाः समुदीरिताः ।
तस्मै नमो भगवते यस्मादेव विमुच्यते' ।।

इति वचनाच्च ।। २३ ।।

### कामाधिकरणम् ३-३-२४

न च श्रियोऽप्रयत्नत्वादनुपासनं संसारो वा । नित्यं भगवदुपस्थितेरतिप्रियत्वात्संस्कारापाटवान्नित्योपासोपपत्तेश्च ।। २४ ।।

### निर्धारणाधिकरणम् ३-३-२५

न च बन्धदार्ढ्ये श्रवणादीनामफलता । अन्यथोपासां विनैव श्रवणादिज्ञानमात्रेण मुक्तिरिति दोषः ।

'श्रवणादित्रयोत्पन्नदृष्ट्यैव स्वेच्छया हरिः ।
प्रसन्नो मुक्तिदो नित्यमन्यथा न कथञ्चन' ।।

इतीश्वरेच्छानियतिश्रुतेः ।। २५ ।।

### प्रदानाधिकरणम् ३-३-२६

न च गुर्वधीनत्वे ज्ञानमोक्षयोर्ज्ञानिनोऽपि कदाचिद्गुरुकोपाज्ज्ञानपराभवेनामुक्तिप्रसङ्गान्न गुर्वधीनत्वमिति ।

'ज्ञानिनो गुरुशापेऽपि नामुक्तिः संसृतेः क्वचित् ।
आनन्दह्रासदोषेण सैव मुक्तिर्विदुष्यति' ।।

इति वचनान्मुक्तिदूषणेनैव गुरुशापादेः कृतार्थत्वात् । ज्ञानिनो ब्रह्मवस्तुवैभवेन मुक्तिः स्यादिति गुरोर्वरेण वा मुक्त्युपपत्तेः ।। २६ ।।

### लिङ्गभूयस्त्वाधिकरणम् ३-३-२७

शिष्यस्यापि पुरुषत्वसाम्याद्धारणादेस्तत्प्रयत्नस्य न दौर्बल्यमिति न मन्तव्यम् । 'गुरुप्रसादो बलवान्' इत्यादिविशेषोक्तेः ।।२७।।

### पूर्वविकल्पाधिकरणम् ३-३-२८

न चोत्तमगुरुस्वीकारार्थत्वेन प्राप्तसन्त्यागनिमित्तदोषः । तत्र दोषे मानाभावात् ।। २८ ।।

### विद्याधिकरणम् ३-३-२९

न च विद्याकर्म वा संसारनिवृत्तिकारणमिति कारणानिर्णयः । 'नान्यः पन्था अयनाय विद्यते' इत्यवधारणात् विद्यावचनस्य प्राधान्यात् ।। २९ ।।

### श्रुत्यधिकरणम् ३-३-३०

न च विद्यावचनस्य प्राधान्यं भ्रमः । 'प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः' इति भगवतस्तस्मिन्नेवाभ्यधिकप्रीतिवचनात् । 'यमेवैष वृणुते तेन लभ्यः' इति तत्प्रीतेरेव मोक्षवचनाच्च ।। ३० ।।

### अनुबन्धाद्यधिकरणम् ३-३-३१

न च कस्यचिद्विशेषज्ञानोपपत्तेर्भक्त्यादिकं विना मुक्तिः ।

'भक्त्यैवैनं जानाति भक्त्यैवैनं पश्यति भक्त्यैव बन्धाद्विमुच्यते' 'भक्त्यैवाऽनन्दी भवति,' 'यमेवैष वृणुते तेन लभ्यः' 'भिनत्ति कर्मसङ्घातं प्रसन्नो भगवान् हरिः' इत्याद्यागमात् ।। ३१ ।।

### प्रज्ञान्तराधिकरणम् ३-३-३२

न च 'दृष्ट्वैव तं मुच्यते नापरेण' 'यावान् यश्चास्मि तत्त्वतः' । 'ततो मां तत्त्वतो ज्ञात्वा' इत्यादिसामान्यालापमात्रेण दर्शनस्याविशेषः । 'यथायोग्यमेवैष आत्मानं दर्शयति यथाऽधिकारं देवेभ्योऽतो ब्रह्मैवैनमभिपश्यत्यथाऽऽत्मैवात्मानमभिपश्यति, सुस्थिरो ह्येष नियमः' इति दर्शनविशेषनियमस्य सुस्थिरत्ववचनात् । 'यावान्यश्चास्मि' इति ब्रह्मण एव ज्ञानोपपत्तेः । 'यावान्' इत्यत्रापि सामान्यविशेषज्ञानोपपत्तेश्च ।। ३२ ।।

### न सामान्याधिकरणम् ३-३-३३

न च भगवतः सर्वत्र गुणसाम्याद्यस्य कस्यापि रूपस्य

दर्शनात्सर्वेषां मुक्तिः । 'समोऽपि भगवान् स्वबिम्बदर्शन एवैनं मोचयति । यथा समेष्वपि कर्मसु स्वकृतमेवैनं भोजयति' इति श्रुत्युक्तस्वकृतप्राप्तिदृष्टान्तात् ।। ३३ ।।

**परेणाधिकरणम् ३-३-३४**

'भक्तिरेवैनम्' इति भक्तेरेव पृथङ् मोचकत्वदर्शनात् नेशकृत्यमिति न मन्तव्यम् ।

'अनादितो गुणाः सन्तो भक्त्याद्या न ह्यमूमुचन् ।
जीवं तद्गुणसुव्यक्तिं कृत्वैनं मोचयेद्धरिः ।।
कश्चिन्न मोचयेद्वाऽसौ स्वातन्त्र्यं तेन तस्य हि ।
भक्तिवाक्करणत्वेन सावकाशेशवागथ ।।
भक्त्यैनं मोचयेद्विष्णुरिति मानत्वमेष्यति' ।।

इति ब्रह्मतर्कवचनादनादिगुणविस्तरे सत्यपि अव्यक्त्यादिना तदिच्छां विना मोक्षाप्राप्तेः ।। ३४ ।।

**एकाधिकरणम् ३-३-३५**

न चांशिमार्गस्यांशेनागम्यत्वात्तयोर्भेदः । साधनोत्तमस्यादृष्टस्यांशिकृतस्यांशेन भुज्यमानत्वात् । अन्यथाऽदृष्टं विना शरीरानुपपत्तेः ।। ३५ ।।

**अङ्गावबद्धाधिकरणम् ३-३-३६**

न च गुणान्तरसन्धानस्य क्वापि दर्शनमात्रेण समाधिकाङ्ग-

देवतान्तरगुणा अप्यङ्गदेवतान्तर उपसंहर्तव्याः । नानागुणत्वेन तेषां श्रुतिषु दृष्टेः । अनिषिद्धगुणानां वाक्यान्वयन्यायेनोपसंहारात् 'न शाखासु' इत्यादिविशेषः । उत्तमेष्वधमगुणापेक्षया 'मन्त्रादिवद्वा' इति ।। ३६ ।।

## भूमाधिकरणम् ३-३-३७

न च भूमगुणस्योपासकं प्रति विशेषाभावेऽपि तत्तदिष्टगुणानुसारेण फलोपपत्तिरित्यविशेषः। 'भूमैव देवः परमो ह्युपास्यो नैवाभूमा फलमेषां विधत्ते' । इत्यादिशिष्टेः ।। ३७ ।।

## नानाशब्दाधिकरणम् ३-३-३८

न च भूमगुण उपासकानामेकप्रकारेणैव प्रतीयत इत्यङ्गीकार्यम् । विशेषस्य कल्पनोपपत्तेरिति न मन्तव्यम् ।

'यावानेवाधिकारेषु विशेषोऽनून एव हि ।
ततो भूमत्वदृष्टौ च ब्रह्मादीनां पृथक् पृथक्' ।।
इति विशेषस्यानूनत्ववचनात् ।। ३८ ।।

## विकल्पाधिकरणम् ३-३-३९

न च शुद्धमोक्षसाधनवैरूप्यान्मोक्षसाधनत्वेनोपदिष्टं विना विष्णावेवोपासनान्तरस्याकर्तव्यता । अविघ्नतासाधनत्वात् ।।३९।।

## काम्याधिकरणम् ३-३-४०

न च काम्यसाधनानामपि गुणानामङ्गत्वादेवोपसंह(हारक)र्त-

व्यतानियमः । अनुपसंहारे विरोधाभावात् । काम्यानाम-
नियताङ्गत्वाच्च । 'अर्थादिधर्मसिद्धौ हि न नियत्याङ्गमिष्यते' ।
इति ब्रह्मतर्के ।। ४० ।।

## अङ्गाधिकरणम् ३-३-४१

न च देवादीनामिति तत्रैव विशेषवचनाभावाद्ब्रह्मा शिरसि ललाटे रुद्र इत्यादीनां नावश्योपास्यता देवादीनामेव । 'ध्याये-दङ्गेष्वङ्गदेवताः परस्य विशिष्टा हि गुणा मुक्तौ देवानां भवन्ति ते हि तादृशास्ते हि हरेरनुरूपाः' इति श्रुतेर्गुणवैशेष्यात्
।। ४१ ।।

## नवाधिकरणम् ३-३-४२

न च क्रियात्वादुपासनायाः अग्निष्टोमादिवत्प्रतिशाखं वक्तव्यता ।

'उपासना यजनं चेति साम्यं तत्तद्विशेषान् संहरेत्सर्वतश्च ।
तथा कर्तॄणां तत्फलानां विशेषाद्व्यर्था हि शाखा अन्यथैवं च
सार्थाः' ।।

इत्युपासनाविशेषाणां त्वधिकारिविशेषाणां चागमेऽवगमात्
।। ४२ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीमद्ब्रह्मसूत्रानुव्याख्यान्यायविवरणे तृतीयाध्यायस्य तृतीयः पादः ।।

# तृतीयाध्यायस्य चतुर्थः पादः

## पुरुषार्थाधिकरणं असार्वत्रिकाधिकरणं च ३.४.१-२

न च ज्ञानिन औदार्यात् मोक्षादन्यफलेच्छाया एवासम्भवात्तदुक्तिः प्रशंसामात्रमिति वाच्यम् । प्रायशो न सम्भवत्येव । कस्यचित्सौभर्यादिवद्भवति चेत् ज्ञानेनैवाशेषमीप्सितं भवतीति व्यवस्थोपपत्तेः ।। १-२ ।।

## अविशेषाधिकरणम् ३-४-३

न चाधिकारे समेऽपि तेषामेवोच्चावचशक्तियोगात्फलभेदोपपत्तेरधिकारविशेषकल्पनं व्यर्थम् । भक्त्याद्यधिकारानुसारेण शास्त्रात् फलप्राप्तेः सर्वेषामविशेषात् । दृश्यमानत्वाच्च भक्त्याद्यधिकारतारतम्यस्य । उच्चावचशक्तेरपि तन्निबन्धनत्वात् ।।३।।

## स्तुत्यधिकरणम् ३-४-४

न च ज्ञानिनामात्मस्वरूपदार्ढ्यात्सत्प्रवृत्तिविपरीतप्रवृत्त्योरविशेषः ।

'एतावतोऽधिका नास्ति प्राप्तिरित्यन्ततः स्थिता ।
या स्थितिस्तां समाप्नोति यथाशक्ति प्रयत्नतः ।
विपरीतप्रवृत्तेस्तु तस्य ह्रासोऽधिकं भवेत्' ।।
इति वचनात् स्थितिविशेषोपपत्तेः ।। ४,५ ।।

### उभयलिङ्गाधिकरणं आधिकारिकाधिकरणं च ३.४.५-६

न च सर्वजीवानामेकप्रकार एव निजस्वभावश्चैतन्यमिति फलेऽप्यविशेषः । निषेधसामान्यविधिक्रियाणां विभक्तत्वात् । 'नादेवो देवपदमन्विच्छेदन्विच्छन् यात्यधरं तमः । न देवः स्वीयं पदमन्विच्छन्विदुष्यति । तदेव ह्यस्य स्वम्' इति निषेध-विभागः ।

'स्थिरं ज्ञानं स्थिरो हरावभिषङ्गः स्थिरमोजो बलं विराग एतद्धि सामान्यं देवानाम् । अन्येषामस्थिराण्येतानि सर्वाण्यथापि यथायोगं विनेयानि'इति सामान्यविभागः ।

'ज्ञानदानमेव देवानां विहितम् । तप एवर्षीणाम् । आचार एव मनुष्याणां तदविरोधेनान्यानि करणीयानि' इति विधिविभागः ।

'चरन्ति देवा विहितं समस्तमर्धमेव मुनयो दशांशतो मनुष्याः' । इति क्रियाविभागः ।। ६ ।।

### फलश्रुत्यधिकरणम् ३-४-७

न च स्वातन्त्र्याद्देवानामेव ज्ञानादिफलं, न किञ्चिदन्येषामिति वाच्यम् ।

त्वरयैव मनुष्याणां सिद्धिरत्वरयैव तु ।
देवानां तत्प्रसादेन मुक्त्या एव सतां नृणाम् ।।

इति मानुषमुक्त्यर्थमेव देवानामत्वरया सिद्धिश्रुतेः ।। ७ ।।

### कृत्स्नभावाधिकरणम् ३-४-८

न च गृहस्थानामशेषकर्मविशेषयोग्यत्वादाधिक्यं मुक्तौ । त्वरयैव गृहिणः साधयन्ति मुक्तिमत्वरयैव यतयस्तेभ्यश्चात्वरया देवास्तेषु च ब्रह्मा । तदेष श्लोकः ।

'शतं परानभिपश्यैव देवं ब्रह्माऽचरद्दुश्चरं यत्तपोऽग्र्यम् ।
विहाय रागं मनसश्चोपरिष्टं ततोऽभवत्परमेष्ठी स मुक्तौ' ॥
इति ।

'यो हि त्वरया साधयेत्स मन्दं सुखमाप्नुयात् । यो ह्यत्वरया स महत्' इति श्रुतेर्गृहिभ्यो यतीनां तेभ्यो देवानामत्वरया सिद्धेः । बहुकालसाधनाद्बहुकर्माधिकारमात्रस्य दुर्बलत्वात् ॥ ८ ॥

### अन्वयाधिकरणम् ३-४-९

न चाविष्कारेण कथनादशेषतोऽपि योग्या ज्ञानिनो भवन्तीत्यास्थानचत्वरादिषु स्थित्वैव प्रकथनीयम् । न ह्येवं त्वरमाणे सिद्धिर्भवति । अयोग्यानामपि श्रवणप्रसङ्गात् । तस्माद्विचार्य योग्यानामेवात्वरयैव कथयित्वा सिद्धिर्भवति । 'त्यक्त्वा त्वरां ब्रह्मविद्यां वदेत जनाय योग्याय सदैव विद्वान्' इति श्रुतेः । 'मानस्तेनेभ्यः' इत्यादेश्च ॥ ९ ॥

### ऐहिकाधिकरणं मुक्तिफलाधिकरणं च ३-४-१०,११

न च विरोधाभावात्साधनानुष्ठानजन्मन्येवापरोक्षज्ञानं मुक्तिश्चेति नियमः। प्रतिबन्धे सति तन्निरासेनात्वरयैव सिध्युपपत्तेः ।

'यद्यारब्धं कर्म निबन्धकं स्यात्प्रेत्यैव पश्येद्योगमेवान्ववेक्ष्य' इत्यादिश्रुतेः । 'अनेकजन्मसंसिद्धस्ततो याति परां गतिम्' इति भगवद्वचनम् ।। १०-११ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्ब्रह्मसूत्रानुव्याख्यान्यायविवरणे तृतीयाध्यायस्य चतुर्थः पादः ।।

।। तृतीयाध्यायः समाप्तः ।।

## चतुर्थाध्यायस्य प्रथमः पादः

### आवृत्यधिकरणम् ४-१-१

न च श्रवणाद्यनावृत्याऽपरोक्षज्ञानोदये सर्वेषां सुशक्यत्वमिति गुणः । महाफलत्वात् सर्वेषामशक्यताया एवोपपन्नत्वात् । अन्यथा सर्वसुशक्यस्यैव साधनतया सर्वेषां मोक्षापत्तेः ।। १ ।।

### आत्माधिकरणम् ४-१-२

न च शश्वदतिप्रसिद्धत्वादात्मशब्दोदितं स्वामित्वं न नित्यश उपास्यम् । अन्येभ्योऽधिकफलत्वेन सविशेषत्वादात्मत्वस्य ।। २ ।।

### न प्रतीकाधिकरणम् ४-१-३

तर्हि विशेषवत्वादेव प्रतीकमपीश्वर इत्युपास्यमिति न । यत्र सन्धिरुपपत्तिर्विद्यते तस्यैव ग्राह्यत्वात् । अन्यस्येशत्वग्रहणस्य मिथ्याज्ञानत्वादेवानुपपत्तेः ।। ३ ।।

### ब्रह्माधिकरणम् ४-१-४

न च प्रतिदिनं विविधगुणन्यासेन भगवत्प्रीत्युपपत्तेर्न ब्रह्मतादृष्टिनियम इति वाच्यम् । अशेषगुणान्तर्भावेन तस्यैवाधिकसाधनत्वात् ।। ४ ।।

### आदित्याधिकरणम् ४-१-५

न च विविधस्थानेष्वादित्यादीनां चरणाद्भिष्ण्वङ्गेष्वादित्यादिमतिनियमो नास्तीति वाच्यम् । तत्कृतावेव कृत्यस्याप्तत्वादादित्यादीनाम् ।। ५ ।।

### आसीनाधिकरणम् ४-१-६

न च ज्ञानस्य सम्यक्तद्विषयत्वमात्रेण पूर्तेरासनादिना न कार्यमिति वाच्यम् । आसनादिना निश्चलत्वादिविशेषकार्योपपत्तेः ।। ६ ।।

### आप्रायणाधिकरणम् ४-१-७

न चान्यस्यापि साधनस्य कर्तुं शक्यत्वान्न यावन्मुक्तिध्यानं कार्यमिति वाच्यम् । ध्यानं विनाऽपरोक्षज्ञानाख्यविशेषकार्यानुपपत्तेः ।। ७ ।।

### तदधिगमाधिकरणम् ४-१-८

न च ज्ञानोदयेऽशेषकर्मक्षये कृतकृत्यत्वात्तदैव मुक्तिः, न चेत्कर्माक्षय इति वाच्यम् । प्रारब्धस्यैव कृतस्य यावद्भोगं संस्थितेः ।

'यद्यारब्धं कर्म निबन्धकं स्यात्प्रेत्यैव पश्येद्योगमेवान्ववेक्ष्य' इत्यादिश्रुतेः । 'अनेकजन्मसंसिद्धस्ततो याति परां गतिम्' इति भगवद्वचनम् ।। १०-११ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्ब्रह्मसूत्रानुव्याख्यान्यायविवरणे तृतीयाध्यायस्य चतुर्थः पादः ।।

।। तृतीयाध्यायः समाप्तः ।।

## चतुर्थाध्यायस्य प्रथमः पादः

### आवृत्त्यधिकरणम् ४-१-१

न च श्रवणाद्यनावृत्याऽपरोक्षज्ञानोदये सर्वेषां सुशक्यत्वमिति गुणः । महाफलत्वात् सर्वेषामशक्यताया एवोपपन्नत्वात् । अन्यथा सर्वसुशक्यस्यैव साधनतया सर्वेषां मोक्षापत्तेः ।। १ ।।

### आत्माधिकरणम् ४-१-२

न च शश्वदतिप्रसिद्धत्वादात्मशब्दोदितं स्वामित्वं न नित्यश उपास्यम् । अन्येभ्योऽधिकफलत्वेन सविशेषत्वादात्मत्वस्य ।। २ ।।

### न प्रतीकाधिकरणम् ४-१-३

तर्हि विशेषवत्वादेव प्रतीकमपीश्वर इत्युपास्यमिति न । यत्र सन्धिरुपपत्तिर्विद्यते तस्यैव ग्राह्यत्वात् । अन्यस्येशत्वग्रहणस्य मिथ्याज्ञानत्वादेवानुपपत्तेः ।। ३ ।।

### ब्रह्माधिकरणम् ४-१-४

न च प्रतिदिनं विविधगुणन्यासेन भगवत्प्रीत्युपपत्तेर्न ब्रह्मतादृष्टिनियम इति वाच्यम् । अशेषगुणान्तर्भावेन तस्यैवाधिकसाधनत्वात् ।। ४ ।।

### आदित्याधिकरणम् ४-१-५

न च विविधस्थानेष्वादित्यादीनां चरणाद्विष्ण्वङ्गेष्वादित्यादिमतिनियमो नास्तीति वाच्यम् । तत्कृतावेव कृत्यस्याप्तत्वादादित्यादीनाम् ।। ५ ।।

### आसीनाधिकरणम् ४-१-६

न च ज्ञानस्य सम्यक्तद्विषयत्वमात्रेण पूर्तेरासनादिना न कार्यमिति वाच्यम् । आसनादिना निश्चलत्वादिविशेषकार्योपपत्तेः ।। ६ ।।

### आप्रायणाधिकरणम् ४-१-७

न चान्यस्यापि साधनस्य कर्तुं शक्यत्वान्न यावन्मुक्तिध्यानं कार्यमिति वाच्यम् । ध्यानं विनाऽपरोक्षज्ञानाख्यविशेषकार्यानुपपत्तेः ।। ७ ।।

### तदधिगमाधिकरणम् ४-१-८

न च ज्ञानोदयेऽशेषकर्मक्षये कृतकृत्यत्वात्तदैव मुक्तिः, न चेत्कर्माक्षय इति वाच्यम् । प्रारब्धस्यैव कृतस्य यावद्भोगं संस्थितेः ।

कर्माणि क्षपयेद्विष्णुरप्रारब्धानि विद्यया ।
प्रारब्धानि तु भोगेन क्षपयन् स्वं पदं नयेत् ।।
इति वचनाच्च ।। ८ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीमद्ब्रह्मसूत्रानुव्याख्यान्यायविवरणे चतुर्थाध्यायस्य प्रथमः पादः ।।

## चतुर्थाध्यायस्य द्वितीयः पादः

### वाङ्मनसाधिकरणम् ४-२-१

न च 'वाक्पूर्वरूपं, मन उत्तररूपं 'मनः पूर्वरूपं वागुत्तररूपं' इत्युक्तेर्व्यामिश्रत्वादनिर्णीतिरेव । 'वाक्पूर्वरूपं मन उत्तररूपं' इति वाचः पूर्ववर्णदेवतात्वनिर्देशमात्रेण 'मनः पूर्वरूपं', इत्यनेन साम्यम् । 'मनसा वा अग्रे सङ्कल्पयत्यथ वाचा व्याहरति' इति युक्तितो विशेषो मनःपूर्वकत्वस्यैव श्रुत इति प्राधान्यं मनस एवेति हि ज्ञायते ।

'सृष्टौ च विलये चैव सदा पूर्वप्रवर्तने ।
नियन्तृत्वे च वचसो मनोऽधीशं शिवो हि तत्' ।।
इति श्रुतेश्च ।। १ ।।

### मनःप्राणाधिकरणम् ४-२-२

न च मनःपूर्वकत्वनियमादशेषदृष्टादृष्टव्यापाराणां तस्य प्राणादनूनता ।

'इन्द्रियस्थैः स्वरूपैस्तु ज्ञानानि जनयत्यसौ ।
मनःस्थेन विशेषेण कामैः कर्मकृदेव च ।।
पृथक्स्थितेन रूपेण जीवं धारयति प्रभुः ।
जीवस्थितेन रूपेण वेदयत्यहमित्यपि ।।
प्राण एको वशी नित्यं बाह्यान्तःकरणेश्वरः ।
तान्येतान्यवशान्येव तथाऽपि कृपयैव सः ।।
पृथक्शक्तोऽपि तद्वैस्तु स्वरूपैस्तद्गकार्यकृत् ।
तस्येशो भगवान् विष्णुरेवमेष यथाऽन्यगः' ।।

इत्यादिश्रुतेः प्राणस्यैवाढ्यतावगमात् ।। २ ।।

### अध्यक्षाधिकरणं ४-२-३

'सोऽध्यक्षे' इत्यस्याप्येवमेवाशङ्का परिहारश्च । श्रुतिबाहुल्यमेव शङ्कायां परिहारे च विशेषहेतुः ।। ३ ।।

### भूताधिकरणं नैकस्मिन्नधिकरणम् च ४-२-४,५

न च भूतानामुत्पत्तिक्रमवैपरीत्येन लयोक्तेर्मुक्तिलययोर्विशेषाभावाच्चैकस्मिन्नेव भूते सर्वेषां लयोऽर्थतः क्लृप्त इति वाच्यम् । तत्तद्भूतोद्भवत्वात्तत्तद्देवानां तत्समानानां च विशेषवचनाभावे स्वसमानलयस्थान एव लयोपपत्तेः । विशेषश्रुतेश्च ।। ४,५ ।।

### समनाधिकरणम् ४-२-६

न च प्रकृतेः संसाराभावादिनेशेनाप्यन्यथाकर्तुमशक्यत्वेन सुदृढत्वात्सर्वसाम्यमेवेश्वरेण । न चेत् संसारित्वमिति युक्तम् ।

ईश्वरस्य महामहिमत्वात् । नित्यमसंसारित्वस्य नित्यं तदनुग्रहेणैवोपपत्तेः ।

'सदाऽनित्यतयाऽनित्यं नित्यं नित्यात्मना यतः ।
नित्ययैव स्वशक्त्येशो नियामयति नित्यदा ।।
द्रव्यं कर्म च कालश्च स्वभावश्चेतना धृतिः ।
प्रकृतिः पुरुषश्चैव न सन्ति यदुपेक्षया ।।'
इत्यादिश्रुतेश्च ।। ६ ।।

### पराधिकरणम् ४-२-७

न चान्यदेवादीनां प्राणाधीनत्वात्तत्प्राप्तिनियमात्परप्राप्तिर्नास्त्येव ।

'प्राणं प्राप्य परं देवास्तदन्ये चैव तद्गताः ।
प्राप्नुवन्ति परं देवं वसन्ति च यथासुखम्' ।।

इति विशेषश्रुतेः ।। ७ ।।

### अविभागाधिकरणम् ४-२-८

न च सत्यसङ्कल्पत्वादेरीश्वरसङ्कल्पाद्यनुसारित्वनियमे संसारसमानधर्मत्वं मुक्तेरिति वाच्यम् । कृतार्थत्वेनैव विशेषोपपत्तेः ।

'अपूर्णतादिभावो वा दुःखं वा नास्ति किञ्चन ।
मुक्तस्य पारतन्त्र्येऽपि तारतम्येऽप्यतः सुखी' ।।

इति च श्रुतिः ।। ८ ।।

### तदोकोऽधिकरणम् ४-२-९

न च प्रारब्धकर्मशेषवत्वादुत्क्रान्तावविशेषो ज्ञानिनः । ज्ञानोदयानन्तरं सर्वदा ज्ञानफलस्यानुवृत्तेः ।

'प्रारब्धकर्मशेषस्तु विरजातरणावधिः ।
स्वोदयात् फलदं ज्ञानमादेहं कर्म वाऽऽरवेः ।
तथापि प्रकृतेर्बन्धो ब्रह्मणा सह भिद्यते' ।। इति श्रुतिः ।

'शरीरे पाप्मनो हित्वा सर्वान् कामान् समश्नुते' ।

'स तेजसि सूर्ये सम्पन्नो यथा पादोदरस्त्वचा विनिर्मुच्यत एवं हैव पाप्मना विनिर्मुक्तः' 'स प्राप्नोति विरजां नदीम् । तत्सुकृतदुष्कृते विधूनुते' ।

'ते ब्रह्मलोके तु परान्तकाले परामृतात्परिमुच्यन्ति सर्वे' इति च । 'अन्यथाभावनियमोऽनृतता कार्यकारणे' इति च ।। ९ ।।

### योग्यधिकरणम् ४-२-१०

न च कृष्यादिलौकिकसाधनस्य फलस्मरणानपेक्षत्वात् स्वर्गमोक्षयोरपि तथात्वमिति वाच्यम् ।

'क्रियानुवृत्तिर्लौकिके साधने तु मनोऽनुवृत्तिर्वैदिके साधने स्यात् ।
फलं भवेत्सर्वथेत्येव तस्मात्स्मरेत्सदा निश्चितत्वेन विद्वान्' ।।

इति श्रुतेस्तदनुसार्यनुवृत्तेर्लौकिकवैदिकयोः साम्यात् । अतोऽत्र

फलानुस्मरणं लवनादिकृष्यनुवृत्तिवद्द्रष्टव्यम् । वचनप्रामाण्यात्
॥ १० ॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीमद्ब्रह्मसूत्रानुव्याख्यान्यायविवरणे चतुर्थाध्यायस्य द्वितीयः पादः ॥

# चतुर्थाध्यायस्य तृतीयः पादः

**अर्चिराद्यधिकरणम्, वायुशब्दाधिकरणम्,**
**तटिदधिकरणम्, आतिवाहिकाधिकरणम् ४-३-१-४**

न च तत्र तत्र मार्गस्यान्यथोक्तेरधिकारिभेदेन पृथङ्मार्ग-सुक्रमोपपत्तिरिति वाच्यम् ।

'सर्वे वा एत उत्क्रामन्ति तेऽर्चिषमेवाभिसंयन्ति ततो वायुं ततोऽहः पूर्वपक्षमित्येष उ एव ब्रह्मपथः । द्वे सृती अशृणवं पितॄणामहं देवानामुत मर्त्यानाम् । ताभ्यामिदं विश्वमेजत्समेति यदन्तरा पितरं मातरं च' इति विशेषश्रुतितो ज्ञानिनामेकमार्ग-स्यैव प्राप्तेः । 'एष एव ब्रह्मपथः' इत्यवधारणविरोधादन्यथा । एजदिति वैदिकानुष्ठानवत उक्तेर्नाधोगतिविरोधः ।

'पुनरावर्तिनो ये तु तेषां धूमपथो ध्रुवः ।
अन्येषामर्चिरादिश्च तद्भेदो मध्यसंस्थितिः ॥
धूमार्चिरादिदेवेभ्यः प्राप्यानुज्ञां तु मध्यगाः ।
विहृत्य स्वेष्टदेशेषु तदूर्ध्वं याति चाधरम् ॥

अत्यल्पानामविज्ञाताऽप्यनुज्ञावर्तिनां भवेत् ।
पुंद्वारेण स्वदृष्ट्या वा यथायोग्यं विमुच्यताम् ॥
अतो न मार्गभेदोऽस्ति न हि मार्गोऽत्र सम्भवः ।
प्रेतत्वं चाधरो मार्गः पापजत्वात्तयोः पृथक्' ॥
इति स्मृतेश्च ॥ १-४ ॥

### वैद्युताधिकरणम् ४-३-५

न च सोमादग्निमग्नेरिन्द्रमिति सोमादग्नेरेवमस्यापि प्राप्तेः प्रधानवायोरप्यवरोऽन्यः प्राप्योऽस्त्विति वाच्यम् । उत्तमत्वात्तस्यैव ब्रह्मप्रापयितृत्वशक्तेः । 'वायुरेव ब्रह्म गमयति तस्य ह्येषा शक्तिः । न ह्यन्यो ब्रह्म गमयति प्रियो ह्येनद्गमयति । न ह्यन्यः प्रियो ब्रह्मणः' इति श्रुतेः ।

मार्गे त्ववरस्यापि यथामार्गं पश्चात्प्राप्तिर्भवति लोकवत् । न हि राजानं यःकश्चित्प्रापयति क्लृप्तमतिप्रियं चापहाय ॥ ५ ॥

### कार्याधिकरणम् ४-३-६

न च चतुर्मुखस्य प्राप्तिपर्यन्तं सन्तततत्वनियमाद्बन्धस्य तावद्भगवत्प्राप्तिर्नास्तीति नियमः ।

'यान्ति देवं परं केचित् पूर्वं केचिल्लये विभुम् ।
योग्यतातारतम्येन विशेषोऽयमपीष्यते' ॥

इति श्रुतेस्तथाप्राप्तत्वात् । न च परब्रह्मण एव ब्रह्मशब्द-

मुख्यार्थत्वेन प्रथमप्राप्तत्वादपोहायुक्तेस्तस्यैव प्राप्तिनियमः । 'यान्ति देवं परं केचित्' इति प्रमाणप्राप्तत्वादेव । न च परप्राप्तिर्यस्याभीष्टा तस्य तत्प्राप्तिरिति नियमः ।

'क्रमानुरागी भगवान् क्रमात् पुम्भिरवाप्यते ।
अतः क्रमात् समृद्धे तु ज्ञाने ब्रह्मलये नरैः ।
प्राप्यते नियमेनैव कैश्चिदेवाप्यते मृतौ' ।।

इति भगवतः क्रमानुरागित्वश्रुतेः । न च बहुधाश्रुतेर्यथासौकर्यं चतुर्मुखस्य परस्य वा प्राप्तिरिति वाच्यम् । श्रुत्युक्तानुवृत्तेरेव न्याय्यत्वात् । 'सप्रतीकाश्चतुर्मुखमप्रतीकाः परममु हैते गच्छन्त्यागच्छन्ति च चतुर्मुखात् परमं परमाच्चतुर्मुखं यावद्विलयमथ सह चतुर्मुखेन विमुच्यन्ते आनन्दीभवन्ति' इति हि श्रुतिः । अन्तर्भेदाधिकरणत्वात् समुदायोक्तिः ।। ६ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीमद्ब्रह्मसूत्रानुव्याख्यान्यायविवरणे चतुर्थाध्यायस्य तृतीयः पादः ।।

## चतुर्थाध्यायस्य चतुर्थः पादः

### संपद्याधिकरणम् ४-४-१

न च 'एतं सेतुं तीर्त्वा' इत्यत्रातिक्रमोक्तेर्मुक्तो ब्रह्म तीर्त्वा गच्छति । तरतीति सामान्यप्रतीतेः । ब्रह्म तीर्त्वेदं गच्छतीति विशेषानुक्तेः । 'इमां घोरामशिवां नदीं तीर्त्वा ब्रह्म सम्पद्यते' इति विशेषोक्तेश्चैतं सेतुं प्रत्यन्यत्तीर्त्वेत्यन्यथोपपत्तेः ।। १ ।।

## मुक्ताधिकरणम् ४-४-२

न च कृतिमत्वादमुक्त एवोच्यते । 'स तत्र पर्येति' इत्यादौ स्वेन रूपेणाभिनिष्पद्यत इति मुक्तस्य स्पष्टं प्रतिभातत्त्वात् श्रुतौ । स तत्र पर्येतीति श्रुत्यैक्यप्रतीतेश्च एवंभूतस्यापि प्रकरणत्वं प्रकल्प्य श्रुतिबाधाङ्गीकारे सा श्रुतिरप्येवं विभज्य किं योजयितुं न शक्यत इति श्रुतेरेवाभावप्रसङ्गः । सत्यं ज्ञानमित्यादावपि सत्यमित्यस्यान्यमित्यनेनान्वय इत्यादिप्रसङ्गात् ।। २ ।।

## आत्माधिकरणम् ४-४-३

न च परंज्योतिःशब्देनादित्यज्योतिरङ्गीकारे, 'स तेजसि सूर्ये सम्पन्नो यथा पादोदरस्त्वचा विनिर्मुच्यत एवं हैव स पाप्मना विनिर्मुक्तः' इत्यादिनैकार्थतेति प्रयोजनम् । 'अथ किमुच्यते परंज्योतिरित्यात्मैव परं ज्योतिः । स हि परमो द्योतते जीवाच्चाजीवाच्च तस्मादाहुः परं ज्योतिरिति तमेवैष जीवोऽभिसम्पद्य स्वेन रूपेणाभिनिष्पद्यते' इति तस्यैव परंज्योतिष्ट्वोक्तेः। सावकाशलिङ्गान्निरवकाशश्रुतेरेव बलवत्त्वात् ।। ३ ।।

## अविभागाधिकरणम् ४-४-४

न च परमगतित्वादीश्वराभुक्ता अपि भोगा मुक्तौ भवन्ति । ईश्वरस्य स्वत एव पूर्णानन्दत्वादभोगस्यापि सम्भवादिति वाच्यम् ।

'पूर्णानन्दः पूर्णभुक् पूर्णकर्ता पूर्णज्ञानः पूर्णभाः पूर्णशक्तिः ।

(पूर्णैश्वर्यो) आश्चर्यत्वाद्भगवान् वासुदेवो विरुद्धशक्तिर्न च दोषस्पृगीशः' ।।

इति श्रुत्याश्चर्यतयैव ब्रह्मण उभयोक्तेः । सावकाशोपपत्तिमात्रान्निरवकाशश्रुतियुक्तोपपत्तेरेव बलवत्त्वात् ।। ४ ।।

**ब्राह्माधिकरणम् (चितिमात्राधिकरणम्) ४-४-५**

न च पारङ्गतत्वान्मुक्तस्य चिन्मात्रदेहोऽपि नास्तीति वाच्यम् । अकृत्रिमत्वात्तस्य देहस्यानपगमात् । 'अथ विमुक्तस्य चिन्मात्र एव देहो भवति । चिन्मात्राणि करणानि तैरीशानुगृहीतैर्भोगान् भुङ्क्ते' इति श्रुतेः ।। ५ ।।

**संकल्पाधिकरणम् ४-४-६**

न च भगवदोकसि स्थितत्वान् मुक्तस्य तस्याप्योकस्त्वसाम्येन तत्तदुपायसाध्यभोगसाधनत्वं वाच्यम् । निर्दोषत्त्वात्तदोकसो मुक्तस्य च सङ्कल्पादेवेति श्रुत्यनुसारेणोपपत्तेः ।। ६ ।।

**अनन्याधिपत्यधिकरणम् ४-४-७**

न च परगृहगतत्वादस्य राजगृहगतस्येव स्वाधमा अपि कदाचिदीशते । निर्दोषत्वादेव मुक्तस्येश्वरस्य तत्रस्थानां मुक्तान्तराणां च राजदोषवद्दोषासम्भवाद्यथायोग्यमेव स्वीकारोपपत्तेः ।

'मुक्तानां पतयो देवा देवानां च प्रजापतिः ।
तस्य विष्णुर्न चैवेदं पारावर्यं विनश्यति' ।।

इति श्रुतिः ।। ७ ।।

### अभावाधिकरणम् ४-४-८

न च देहभावे तत्कार्यदुःखादिस्तदभावे भोगासम्भव इति दोषः ।

'देहाभावाच्च भावाच्च निर्भोगित्वं च दुःखिताम् ।
यान्त्यमुक्ता नोभयं च मुक्तानां वशिता यतः ।।'

इति श्रुत्यैव विशेषक्लृप्तेः ।। ८ ।।

### जगद्व्यापाराधिकरणम् ४-४-९

न च सङ्कल्पादेव समस्तसम्भवात् सृष्ट्यादिसमस्तकार्यसम्भवः ।

'व्यापारो जगतो विष्णोर्मुक्तानां तु स्वभोगगः ।
न हि स्वर्णं शुद्धमपि वह्निकार्यकरं भवेत् ।
अयोग्यशक्तितस्त्वेव नाधिकानन्दसम्भवः ।
न हि कश्चित्सुशक्तोऽपि चकाराचेतनं चितिम् ।
न च कामस्तथा भूयात्ततः स्यात् सत्यकामिता' ।।

इति श्रुत्या विशेषक्लृप्तेरेव ।

'मुक्तानां न जगद्यत्नस्तथापि विबुधाः सदा ।
मुक्तानां तु नियन्तारस्तेषां ब्रह्माऽस्य वै हरिः' ।।

इति च विशेषक्लृप्तिः ।। ९ ।।

### स्थित्यधिकरणम् ४-४-१०

न च वशित्वान्मुक्तस्यापि वृद्धिः । कृतकृत्यत्वेन निःश्रमत्वा-

दुपासनादावभ्यासपाटवान्निर्दोषत्वात् स्नेहाधिक्याच्च तस्यैव परम-सुखरूपत्वेन फलरूपत्वात् ।

'अभ्यासपाटवात् स्नेहादश्रमत्त्वादुपासना ।
भक्तिश्च सुखरूपैव मुक्तानां न तु साधनम्' ।।

इति श्रुतिः ।। १० ।।

### अनावृत्यधिकरणम् ४-४-११

न चानन्तत्वात्कालस्य त्रयोदशी पञ्चदशीवत्कदाचित्सम-स्तस्यापि सम्भवान्मुक्तस्यापि पुनरावृत्त्याशङ्केति वाच्यम् । सत्यकामत्वादिमाहात्म्यात् ।

'अशेषकामसत्यत्वान्मुक्तानां न पुनर्भवः ।
यस्मात्स कामयेदेव नित्यमात्मापुनर्भवम्' ।।
इति च श्रुतिः ।। ११ ।।

इत्यनन्तमहान्यायमीमांसापारवारिधेः ।
उत्तारणात्यशक्त्यैव व्याकुलीकृतचेतसाम् ।।
मन्दानामुपकाराय महतां चोच्छ्रितात्मनाम् ।
तद्विशेषपरिज्ञानप्रदीप्तार्काभचेतसाम् ।।
विशेषगाढे मनसि नितरामुपकारकः ।
न्यायप्लवो मयाऽकारि सङ्क्षेपात् प्रमिताक्षरैः ।।
विस्तरोऽप्ययमेव स्यात्तद्विशेषातिवेदिनाम् ।
व्याख्यानुव्याख्ययोरेव विस्तारो यदुदीरितः ।।

अनल्पचेतसां पुंसामलं विज्ञानसिद्धये ।
तन्न्यायोद्धरणे शक्ता अपि ह्येतेन सुस्थिरम् ।।
न्यायानुगं मनः कुर्युरिति सङ्ग्रहलालसाः ।
को नामाशेषविद्योरुसागरोन्मथनोद्धृतम् ।।
साक्षाद्विद्याधिराजेन न्यायामृतमनुत्तमम् ।
अशेषतोऽधिगच्छेत वन्द्यो वृन्दारकोऽपि सन् ।।
एवं सुदुर्लभेऽप्यद्धा महान्यायपरामृते ।
केचनाधिक्रियन्तेऽत्र तत्प्रसादानुरञ्जिताः ।।
ब्रह्माद्या अमृते यद्वत्सागरोन्मथनोद्धृते ।
अहं तु तत्प्रसादैकमहास्पदबलोद्धतः ।।
न्यायामृतार्णवमिममवगाह्य विभज्य च ।
सङ्क्षेपविस्तराभ्यां च चकार व्याकृतिं कृतिम् ।।
तत्प्रसादमृते कस्य शक्तिः संसारसागरे ।
मग्नस्य चेतनस्य स्यात्तत्कृतानुकृतौ क्वचित् ।।
नित्यानन्दामृतस्यन्दितत्कटाक्षैधितस्य तु ।
का नु शक्तिर्भवेन्नैव ततः कोऽत्रातिविस्मयः ।।
विद्याऽविद्ये सुखं दुःखमशक्तिः शक्तिरेव च ।
उत्पत्तिस्थितिनाशाश्च विशेषाश्च परेऽखिलाः ।।
चेतनाचेतनस्यास्य समस्तस्य यदिच्छया ।
स मम स्वकृतेनैव प्रीयतां पुरुषोत्तमः ।।
यस्य त्रीण्युदितानि वेदवचने रूपाणि दिव्यान्यलं
बट् तद्दर्शतमित्थमेव निहितं देवस्य भर्गो महत् ।

वायो रामवचोनयं प्रथमकं पृक्षो द्वितीयं वपुः
मध्वो यत्तु तृतीयमेतदमुना ग्रन्थः कृतः केशवे ॥
नमोऽज(ब्ज)भवभूर्यक्षपुरःसरसुराश्रय ।
नारायणारणं मह्यं मापते प्रेयसां प्रिय ॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीमद्ब्रह्मसूत्रानुव्याख्यान्यायविवरणे चतुर्थाध्यायस्य चतुर्थः पादः ॥

॥ श्रीमब्रह्मसूत्रानुव्याख्यान्यायविवरणं सम्पूर्णम् ॥

॥ श्रीकृष्णार्पणमस्तु ॥

# परिशिष्टम्–१

## ।। ब्रह्मसूत्रानुक्रमणिका ।।

| सूत्राणि | अ. | पा. | सू. |
|---|---|---|---|
| अतोऽनन्तेन तथा हि लिङ्गं | ३ | २ | २७ |
| अतोऽन्यदपीत्येकेषामुभयोः | ४ | १ | १७ |
| अत्ता चराचरग्रहणात् | १ | २ | ९ |
| अथातो ब्रह्मजिज्ञासा | १ | १ | १ |
| अदृश्यत्वादिगुणको धर्मोक्तेः | १ | २ | २१ |
| अदृष्टानियमात् | २ | ३ | ५१ |
| अधिकं तु भेदनिर्देशात् | २ | १ | २३ |
| अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात् | ३ | ४ | ८ |
| अधिष्ठानानुपपत्तेश्च | २ | २ | ३९ |
| अध्ययनमात्रवतः | ३ | ४ | १२ |
| अनभिभवं च दर्शयति | ३ | ४ | ३५ |
| अनवस्थितेरसम्भवाच्च नेतरः | १ | २ | १७ |
| अनारब्धकार्ये एव तु पूर्वे तदवधेः | ४ | १ | १५ |
| अनाविष्कुर्वन्नन्वयात् | ३ | ४ | ४९ |
| अनावृत्तिः शब्दादनावृत्तिः शब्दात् | ४ | ४ | २३ |
| अनियमः सर्वेषामविरोधाच्छब्दानुमानाभ्यां | ३ | ३ | ३२ |
| अनिष्टादिकारिणामपि च श्रुतम् | ३ | १ | १३ |
| अनुकृतेस्तस्य च | १ | ३ | २२ |
| अनुज्ञापरिहारौ देहसम्बन्धाज्ज्योतिरादिवत् | २ | ३ | ४८ |
| अनुपपत्तेस्तु न शारीरः | १ | २ | ३ |
| अनुबन्धादिभ्यः | ३ | ३ | ५१ |
| अनुष्ठेयं बादरायणः साम्यश्रुतेः | ३ | ४ | १९ |
| अनुस्मृतेर्बादरिः | १ | २ | ३० |
| अनुस्मृतेश्च | २ | २ | २५ |
| अनेन सर्वगतत्वमायामयशब्दादिभ्यः | ३ | २ | ३८ |
| अन्तर उपपत्तेः | १ | २ | १३ |

| सूत्राणि | अ. | पा. | सू. |
|---|---|---|---|
| आमनन्ति चैनमस्मिन् | १ | २ | ३२ |
| आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रियते | ३ | ४ | ४५ |
| आवृत्तिरसकृदुपदेशात् | ४ | १ | १ |
| आसीनः सम्भवात् | ४ | १ | ७ |
| आह च तन्मात्रं | ३ | २ | १६ |
| **इ** | | | |
| इतरपरामर्शात्स इति चेन्नासम्भवात् | १ | ३ | १८ |
| इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः | २ | १ | २२ |
| इतरस्याप्येवमसंश्लेषः पाते तु | ४ | १ | १४ |
| इतरेतरप्रत्ययत्वादिति चेन्नोत्पत्तिमात्रनिमित्तत्वात् | २ | २ | १९ |
| इतरे त्वर्थसामान्यात् | ३ | ३ | १४ |
| इतरेषां चानुपलब्धेः | २ | १ | २ |
| इयदामननात् | ३ | ३ | ३५ |
| **ई** | | | |
| ईक्षतिकर्मव्यपदेशात्सः | १ | ३ | १३ |
| ईक्षतेर्नाशब्दं | १ | १ | ५ |
| **उ** | | | |
| उत्क्रमिष्यत एवंभावादित्यौडुलोमिः | १ | ४ | २२ |
| उत्क्रान्तिगत्यागतीनां | २ | ३ | २० |
| उत्तराच्चेदाविर्भूतस्वरूपस्तु | १ | ३ | १९ |
| उत्तरोत्पादे च पूर्वनिरोधात् | २ | २ | २० |
| उत्पत्त्यसम्भवात् | २ | २ | ४२ |
| उदासीनानामपि चैवं सिद्धिः | २ | २ | २७ |
| उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात् | १ | १ | २७ |
| उपादानात् | २ | ३ | ३५ |
| उपपत्तेश्च | ३ | २ | ३६ |

❁ ❁ ❁

# परिशिष्टम्-२

## मतत्रयानुसारीब्रह्मसूत्राणि

| अद्वैतमतरीत्या | विशिष्टाद्वैतमतरीत्या | द्वैतमतरीत्या |
|---|---|---|
| प्रथमाध्यायस्य प्रथमः पादः | प्रथमाध्यायस्य प्रथमः पादः | प्रथमाध्यायस्य प्रथमः पादः |
| **जिज्ञासाधिकरणम्-१** | **जिज्ञासाधिकरणम्-१** | **जिज्ञासाधिकरणम्-१** |
| १. अथातो ब्रह्मजिज्ञासा | १. अथातो ब्रह्मजिज्ञासा | १. अथातो ब्रह्मजिज्ञासा |
| **जन्माद्यधिकरणम्-२** | **जन्माद्यधिकरणम्-२** | **जन्माधिकरणम्-२** |
| २. जन्माद्यस्य यतः | २. जन्माद्यस्य यतः | २. जन्माद्यस्य यतः |
| **शास्त्रयोनित्वाधिकरणम्-३** | **शास्त्रयोनित्वाधिकरणम्-३** | **शास्त्रयोनित्वाधिकरणम्-३** |
| ३. शास्त्रयोनित्वात् | ३. शास्त्रयोनित्वात् | ३. शास्त्रयोनित्वात् |
| **समन्वयाधिकरणम्-४** | **समन्वयाधिकरणम्-४** | **समन्वयाधिकरणम्-४** |
| ४. तत्तु समन्वयात् | ४. तत्तु समन्वयात् | ४. तत्तु समन्वयात् |

## ईक्षत्यधिकरणम्-५

५. ईक्षतेर्नाशब्दम्
६. गौणश्चेन्नाऽऽत्मशब्दात्
७. तन्निष्ठस्य मोक्षोपदेशात्
८. हेयत्वावचनाच्च
९. स्वाप्ययात्
१०. गतिसामान्यात्
११. श्रुतत्वाच्च

## आनन्दमयाधिकरणम्-६

१२. आनन्दमयोऽभ्यासात्
१३. विकारशब्दान्नेति चेन्न प्राचुर्यात्
१४. तद्धेतुव्यपदेशाच्च
१५. मान्त्रवर्णिकमेव च गीयते
१६. नेतरोऽनुपपत्तेः
१७. भेदव्यपदेशाच्च
१८. कामाच्च नानुमानापेक्षा

## ईक्षत्यधिकरणम्-५

५. ईक्षतेर्नाशब्दम्
६. गौणश्चेन्नाऽऽत्मशब्दात्
७. तन्निष्ठस्य मोक्षोपदेशात्
८. हेयत्वावचनाच्च
९. प्रतिज्ञाविरोधात्
१०. स्वाप्ययात्
११. गतिसामान्यात्
१२. श्रुतत्वाच्च

## आनन्दमयाधिकरणम्-६

१३. आनन्दमयोऽभ्यासात्
१४. विकारशब्दान्नेति चेन्न प्राचुर्यात्
१५. तद्धेतुव्यपदेशाच्च
१६. मान्त्रवर्णिकमेव च गीयते
१७. नेतरोऽनुपपत्तेः
१८. भेदव्यपदेशाच्च

## ईक्षत्यधिकरणम्-५

५. ईक्षतेर्नाशब्दं
६. गौणश्चेन्नाऽऽत्मशब्दात्
७. तन्निष्ठस्य मोक्षोपदेशात्
८. हेयत्वावचनाच्च
९. स्वाप्ययात्
१०. गतिसामान्यात्
११. श्रुतत्वाच्च

## आनन्दमयाधिकरणम्-६

१२. आनन्दमयोऽभ्यासात्
१३. विकारशब्दान्नेति चेन्न प्राचुर्यात्
१४. तद्धेतुव्यपदेशाच्च
१५. मान्त्रवर्णिकमेव च गीयते
१६. नेतरोऽनुपपत्तेः
१७. भेदव्यपदेशाच्च
१८. कामाच्च नानुमानापेक्षा

१९. अस्मिन्नस्य च तद्योगं शास्ति

**अन्तरधिकरणम्-७**

२०. अन्तस्तद्धर्मोपदेशात्

२१. भेदव्यपदेशाच्चान्यः

**आकाशाधिकरणम्-८**

२२. आकाशस्तल्लिङ्गात्

**प्राणाधिकरणम्-९**

२३. अत एव प्राणः

**ज्योतिश्चरणाधिकरणम्-१०**

२४. ज्योतिश्चरणाभिधानात्

२५. छन्दोभिधानान्नेति चेन्न
तथा चेतोऽर्पणनिगदात्
तथाहि दर्शनम्

२६. भूतादिपादव्यपदेशोपपत्तेश्चैवम्

२७. उपदेशभेदान्नेति चेन्नोभयस्मिन्नविरोधात्

१९. कामाच्च नानुमानापेक्षा

२०. अस्मिन्नस्य च तद्योगं शास्ति

**अन्तरधिकरणम्-७**

२१. अन्तस्तद्धर्मोपदेशात्

२२. भेदव्यपदेशाच्चान्यः

**आकाशाधिकरणम्-८**

२३. आकाशस्तल्लिङ्गात्

**प्राणाधिकरणम्-९**

२४. अत एव प्राणः

**ज्योतिरधिकरणम्-१०**

२५. ज्योतिश्चरणाभिधानात्

२६. छन्दोभिधानान्नेति चेन्न तथा
चेतोऽर्पणनिगदात् तथाहि दर्शनम्

२७. भूतादिपादव्यपदेशोपपत्तेश्चैवम्

२८. उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात्

१९. अस्मिन्नस्य च तद्योगं शास्ति

**अन्तःस्थत्वाधिकरणम्-७**

२०. अन्तस्तद्धर्मोपदेशात्

२१. भेदव्यपदेशाच्चान्यः

**आकाशाधिकरणम्-८**

२२. आकाशस्तल्लिङ्गात्

**प्राणाधिकरणम्-९**

२३. अत एव प्राणः

**ज्योतिरधिकरणम्-१०**

२४. ज्योतिश्चरणाभिधानात्

**गायत्र्यधिकरणम्-११**

२५. छन्दोभिधानान्नेति चेन्न तथा
चेतोऽर्पणनिगदात् तथाहि दर्शनम्

२६. भूतादिपादव्यपदेशोपपत्तेश्चैवम्

२७. उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात्

### प्रतर्दनाधिकरणम्-११

२८. प्राणस्तथाऽनुगमात्

२९. न वक्तुरात्मोपदेशादिति
चेदध्यात्मसम्बन्धभूमा ह्यस्मिन्

३०. शास्त्रदृष्ट्या तूपदेशो वामदेववत्

३१. जीवमुख्यप्राणलिङ्गान्नेति
चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात्

इति प्रथमाध्यायस्य प्रथमः पादः

| | अत्र पादे |
|---|---|
| अधिकरणानि | ११ |
| सूत्राणि | ३१ |

## द्वितीयः पादः

### सर्वत्रप्रसिध्यधिकरणम्-१

३२. सर्वत्र प्रसिद्धोपदेशात्

३३. विवक्षितगुणोपपत्तेश्च

३४. अनुपपत्तेस्तु न शारीरः

### इन्द्रप्राणाधिकरणम्-११

२९. प्राणस्तथाऽनुगमात्

३०. न वक्तुरात्मोपदेशादिति
चेदध्यात्मसम्वन्धभूमा ह्यस्मिन्

३१. शास्त्रदृष्ट्या तूपदेशो वामदेववत्

३२. जीवमुख्यप्राणलिङ्गान्नेति
चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात्

इति प्रथमाध्यायस्य प्रथमः पादः

| | अत्र पादे |
|---|---|
| अधिकरणानि | ११ |
| सूत्राणि | ३२ |

## द्वितीयः पादः

### सर्वत्रप्रसिद्धाधिकरणम्-१

३३. सर्वत्र प्रसिद्धोपदेशात्

३४. विवक्षितगुणोपपत्तेश्च

३५. अनुपपत्तेस्तु न शारीरः

### पादान्त्यप्राणाधिकरणम्-१२

२८. प्राणस्तथाऽनुगमात्

२९. न वक्तुरात्मोपदेशादिति
चेदध्यात्मसम्बन्धभूमा ह्यस्मिन्

३०. शास्त्रदृष्ट्या तूपदेशो वामदेववत्

३१. जीवमुख्यप्राणलिङ्गान्नेति
चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात्

इति प्रथमाध्यायस्य प्रथमः पादः

| | अत्र पादे |
|---|---|
| अधिकरणानि | १२ |
| सूत्राणि | ३१ |

## द्वितीयः पादः

### सर्वगतत्वाधिकरणम्-१

३२. सर्वत्र प्रसिद्धोपदेशात्

३३. विवक्षितगुणोपपत्तेश्च

३४. अनुपपत्तेस्तु न शारीरः

| | | |
|---|---|---|
| ३५. कर्मकर्तृव्यपदेशाच्च | ३६. कर्मकर्तृव्यपदेशाच्च | ३५. कर्मकर्तृव्यपदेशाच्च |
| ३६. शब्दविशेषात् | ३७. शब्दविशेषात् | ३६. शब्दविशेषात् |
| ३७. स्मृतेश्च | ३८. स्मृतेश्च | ३७. स्मृतेश्च |
| ३८. अर्भकौस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च | ३९. अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च | ३८. अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च |
| ३९. सम्भोगप्राप्तिरिति चेन्न वैशेष्यात् | ४०. सम्भोगप्राप्तिरितिचेन्न वैशेष्यात् | ३९. सम्भोगप्राप्तिरिति चेन्न वैशेष्यात् |
| **अत्त्रधिकरणम्-२** | **अत्त्रधिकरणम्-२** | **अत्तृत्वाधिकरणम्-२** |
| ४०. अत्ता चराचरग्रहणात् | ४१. अत्ता चराचरग्रहणात् | ४०. अत्ता चराचरग्रहणात् |
| ४१. प्रकरणाच्च | ४२. प्रकरणाच्च | ४१. प्रकरणाच्च |
| **गुहाप्रविष्टाधिकरणम्-३** | ४३. गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् | **गुहाधिकरणम्-३** |
| ४२. गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् | ४४. विशेषणाच्च | ४२. गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् |
| ४३. विशेषणाच्च | **अन्तराधिकरणम्-३** | ४३. विशेषणाच्च |
| **अन्तराधिकरणम्-४** | ४५. अन्तर उपपत्तेः | **अन्तराधिकरणम्-४** |
| ४४. अन्तर उपपत्तेः | ४६. स्थानादिव्यपदेशाच्च | ४४. अन्तर उपपत्तेः |
| ४५. स्थानादिव्यपदेशाच्च | ४७. सुखविशिष्टाभिधानादेव च | ४५. स्थानादिव्यपदेशाच्च |
| ४६. सुखविशिष्टाभिधानादेव च | ४८. अत एव च स ब्रह्म | ४६. सुखविशिष्टाभिधानादेव च |

४७. श्रुतोपनिषत्कगत्यभिधानाच्च

४८. अनवस्थितेरसम्भवाच्च नेतरः

**अन्तर्याम्यधिकरणम्-५**

४९. अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात्

५०. न च स्मार्तमतद्धर्माभिलापात्

५१. शारीरश्चोभयेऽपि हि भेदेनैनमधीयते

**अदृश्यत्वाधिकरणम्-६**

५२. अदृश्यत्वादिगुणको धर्मोक्तेः

५३. विशेषणभेदव्यपदेशाभ्यां च नेतरौ

५४. रूपोपन्यासाच्च

**वैश्वानराधिकरणम्-७**

५५. वैश्वानरः साधारणशब्दविशेषात्

५६. स्मर्यमाणमनुमानं स्यादिति

४९. श्रुतोपनिषत्कगत्यभिधानाच्च

५०. अनवस्थितेरसम्भवाच्च नेतरः

**अन्तर्याम्यधिकरणम्-४**

५१. अन्तर्याम्यधिदैवाधिलोकादिषु तद्धर्मव्यपदेशात्

५२. न च स्मार्तमतद्धर्माभिलापाच्छारीरश्च

५३. उभयेऽपि हि भेदेनैनमधीयते

**अदृश्यत्वादि गुणकाधिकरणम्-५**

५४. अदृश्यत्वादिगुणको धर्मोक्तेः

५५. विशेषणभेदव्यपदेशाभ्यां च नेतरौ

५६. रूपोपन्यासाच्च

**वैश्वानराधिकरणम्-६**

५७. वैश्वानरः साधारणशब्दविशेषात्

५८. स्मर्यमाणमनुमानं स्यादिति

४७. श्रुतोपनिषत्कगत्यभिधानाच्च

४८. अनवस्थितेरसम्भवाच्च नेतरः

**अन्तर्याम्यधिकरणम्-५**

४९. अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात्

५०. न च स्मार्तमतद्धर्माभिलापात्

५१. शारीरश्चोभयेऽपि हि भेदेनैनमधीयते

**अदृश्यत्वाधिकरणम्-६**

५२. अदृश्यत्वादिगुणको धर्मोक्तेः

५३. विशेषणभेदव्यपदेशाभ्यां च नेतरौ

५४. रूपोपन्यासाच्च

**वैश्वानराधिकरणम्-७**

५५. वैश्वानरः साधारणशब्दविशेषात्

५६. स्मर्यमाणमनुमानं स्यादिति

५७. शब्दादिभ्योऽन्तःप्रतिष्ठानाच्च नेति चेन्न तथा दृष्ट्युपदेशादसम्भवात्-पुरुषमपि चैनमधीयते
५८. अत एव न देवता भूतं च
५९. साक्षादप्यविरोधं जैमिनिः
६०. अभिव्यक्तेरित्याश्मरथ्यः
६१. अनुस्मृतेर्बादरिः
६२. सम्पत्तेरिति जैमिनिस्तथाहि दर्शयति
६३. आमनन्ति चैनमस्मिन्

इति द्वितीयः पादः

| | अत्र पादे | आदितः |
|---|---|---|
| अधिकरणानि | ०७ | १८ |
| सूत्राणि | ३२ | ६३ |

५९. शब्दादिभ्योऽन्तःप्रतिष्ठानाच्च नेति चेन्न तथा दृष्ट्युपदेशाद-सम्भवात्पुरुषमपि चैनमधीयते
६०. अत एव न देवता भूतं च
६१. साक्षादप्यविरोधं जैमिनिः
६२. अभिव्यक्तेरित्याश्मरथ्यः
६३. अनुस्मृतेर्बादरिः
६४. सम्पत्तेरिति जैमिनिस्तथाहि दर्शयति
६५. आमनन्ति चैनमस्मिन्

इति द्वितीयः पादः

| | अत्र पादे | आदितः |
|---|---|---|
| अधिकरणानि | ०६ | १७ |
| सूत्राणि | ३३ | ६५ |

५७. शब्दादिभ्योऽन्तःप्रतिष्ठानान्नेति चेन्न तथा दृष्ट्युपदेशादसम्भवात्-पुरुषविधमपि चैनमधीयते
५८. अत एव न देवता भूतं च
५९. साक्षादप्यविरोधं जैमिनिः
६०. अभिव्यक्तेरित्याश्मरथ्यः
६१. अनुस्मृतेर्बादरिः
६२. सम्पत्तेरिति जैमिनिस्तथाहि दर्शयति
६३. आमनन्ति चैनमस्मिन्

इति द्वितीयः पादः

| | अत्र पादे | आदितः |
|---|---|---|
| अधिकरणानि | ०७ | १९ |
| सूत्राणि | ३२ | ६३ |

## तृतीयः पादः

### द्युभ्वाद्यधिकरणम्-१

६४. द्युभ्वाद्यायतनं स्वशब्दात्
६५. मुक्तोपसृप्यव्यपदेशात्
६६. नानुमानमतच्छब्दात्
६७. प्राणभृच्च
६८. भेदव्यपदेशात्
६९. प्रकरणात्
७०. स्थित्यदनाभ्यां च

### भूमाधिकरणम्-२

७१. भूमा सम्प्रसादादध्युपदेशात्
७२. धर्मोपपत्तेश्च

### अक्षराधिकरणम्-३

७३. अक्षरमम्बरान्तधृतेः
७४. सा च प्रशासनात्
७५. अन्यभावव्यावृत्तेश्च

## तृतीयः पादः

### द्युभ्वाद्यधिकरणम्-१

६६. द्युभ्वाद्यायतनं स्वशब्दात्
६७. मुक्तोपसृप्यव्यपदेशाच्च
६८. नानुमानमतच्छब्दात् प्राणभृच्च
६९. भेदव्यपदेशात्
७०. प्रकरणात्
७१. स्थित्यदनाभ्यां च

### भूमाधिकरणम्-२

७२. भूमा सम्प्रसादादध्युपदेशात्
७३. धर्मोपपत्तेश्च

### अक्षराधिकरणम्-३

७४. अक्षरमम्बरान्तधृतेः
७५. सा च प्रशासनात्
७६. अन्यभावव्यावृत्तेश्च

## तृतीयः पादः

### द्युभ्वाधिकरणम्-१

६४. द्युभ्वाद्यायतनं स्वशब्दात्
६५. मुक्तोपसृप्यव्यपदेशात्
६६. नानुमानमतच्छब्दात्
६७. प्राणभृच्च
६८. भेदव्यपदेशात्
६९. प्रकरणात्
७०. स्थित्यदनाभ्यां च

### भूमाधिकरणम्-२

७१. भूमा सम्प्रसादादध्युपदेशात्
७२. धर्मोपपत्तेश्च

### अक्षराधिकरणम्-३

७३. अक्षरमम्बरान्तधृतेः
७४. सा च प्रशासनात्

**ईक्षतिकर्मव्यपदेशाधिकरणम्-४**

७६. ईक्षतिकर्मव्यपदेशात्सः

**दहराधिकरणम्-५**

७७. दहर उत्तरेभ्यः

७८. गतिशब्दाभ्यां तथा हि दृष्टं लिङ्गं च

७९. धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः

**उत्तराधिकरणम्-६**

८०. प्रसिद्धेश्च

८१. इतरपरामर्शात्स इति चेन्नासम्भवात्

८२. उत्तराच्चेदाविर्भूतस्वरूपस्तु

८३. अन्यार्थश्च परामर्शः

८४. अल्पश्रुतेः इति चेत्तदुक्तम्

**अनुकृत्यधिकरणम्-७**

८५. अनुकृतेस्तस्य च

८६. अपि च स्मर्यते

**ईक्षतिकर्माधिकरणम्-४**

७७. ईक्षतिकर्मव्यपदेशात्सः

**दहराधिकरणम्-५**

७८. दहर उत्तरेभ्यः

७९. गतिशब्दाभ्यां तथा हि दृष्टं लिङ्गं च

८०. धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः

८१. प्रसिद्धेश्च

८२. इतरपरामर्शात्स इति चेन्नासम्भवात्

८३. उत्तराच्चेदाविर्भूतस्वरूपस्तु

८४. अन्यार्थश्च परामर्शः

८५. अल्पश्रुतेरिति चेत्तदुक्तम्

८६. अनुकृतेस्तस्य च

८७. अपि स्मर्यते

**प्रमिताधिकरणम्-६**

८८. शब्दादेव प्रमितः

८९. हृद्यपेक्षया तु मनुष्याधिकारत्वात्

७५. अन्यभावव्यावृत्तेश्च

**सदधिकरणम्-४**

७६. ईक्षतिकर्मव्यपदेशात्सः

**दहराधिकरणम्-५**

७७. दहर उत्तरेभ्यः

७८. गतिशब्दाभ्यां तथा हि दृष्टं लिङ्गं च

७९. धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः

८०. प्रसिद्धेश्च

८१. इतरपरामर्शात्स इति चेन्नासम्भवात्

८२. उत्तराच्चेदाविर्भूतस्वरूपस्तु

८३. अन्यार्थश्च परामर्शः

८४. अल्पश्रुतेरिति चेत्तदुक्तम्

**अनुकृत्यधिकरणम्-६**

८५. अनुकृतेस्तस्य च

८६. अपि स्मर्यते

### प्रमिताधिकरणम्-८

८७. शब्दादेव प्रमितः

८८. हृद्यपेक्षया तु मनुष्याधिकारत्वात्

### देवताधिकरणम्-९

८९. तदुपर्यपि वादरायणः सम्भवात्

९०. विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात्

९१. शब्द इति चेन्नातः प्रभवात्प्रत्यक्षानुमानाभ्याम्

९२. अत एव च नित्यत्वं

९३. समाननामरूपत्वाच्चाऽवृत्तावप्यविरोधो दर्शनात्स्मृतेश्च

९४. मध्वादिष्वसम्भवादनधिकारं जैमिनिः

९५. ज्योतिषि भावाच्च

९६. भावं तु वादरायणोऽस्ति हि

### अपशूद्राधिकरणम्-१०

९७. शुगस्य तदनादरश्रवणात्तदाद्रवणात् सूच्यते हि

९८. क्षत्रियत्वगतेश्चोत्तरत्र चैत्ररथेन लिङ्गात्

### देवताधिकरणम्-७

९०. तदुपर्यपि बादरायणः सम्भवात्

९१. विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात्

९२. शब्द इति चेन्नातः प्रभवात्प्रत्यक्षानुमानाभ्याम्

९३. अत एव च नित्यत्वं

९४. समाननामरूपत्वाच्चाऽवृत्तावप्यविरोधो दर्शनात्स्मृतेश्च

### मध्वधिकरणम्-८

९५. मध्वादिष्वसम्भवादनधिकारं जैमिनिः

९६. ज्योतिषि भावाच्च

९७. भावं तु बादरायणोऽस्ति हि

### अपशूद्राधिकरणम्-९

९८. शुगस्य तदनादरश्रवणात्तदाद्रवणात्सूच्यते हि

९९. क्षत्रियत्वगतेश्च

१००. उत्तरत्र चैत्ररथेन लिङ्गात्

१०१. संस्कारपरामर्शात्तदभावाभिलापाच्च

### वामनाधिकरणम्-७

८७. शब्दादेव प्रमितः

८८. हृद्यपेक्षया तु मनुष्याधिकारत्वात्

### देवताधिकरणम्-८

८९. तदुपर्यपि बादरायणः सम्भवात्

९०. विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात्

९१. शब्द इति चेन्नातः प्रभवात्प्रत्यक्षानुमानाभ्याम्

९२. अत एव च नित्यत्वं

९३. समाननामरूपत्वाच्चाऽवृत्तावप्यविरोधो दर्शनात्स्मृतेश्च

९४. मध्वादिष्वसम्भवादनधिकारं जैमिनिः

९५. ज्योतिषि भावाच्च

९६. भावं तु बादरायणोऽस्ति हि

### अपशूद्राधिकरणम्-९

९७. शुगस्य तदनादरश्रवणात्तदाद्रवणात्सूच्यते हि

९८. क्षत्रियत्वावगतेश्चोत्तरत्र चैत्ररथेन लिङ्गात्

९९. संस्कारपरामर्शात्तदभावाभिलापाच्च
१००. तदभावनिर्धारणे च प्रवृत्तेः
१०१. श्रवणाध्ययनार्थप्रतिषेधात्स्मृतेश्च

**कम्पनाधिकरणम्-११**

१०२. कम्पनात्

**ज्योतिरधिकरणम्-१२**

१०३. ज्योतिर्दर्शनात्

**अर्थान्तरत्वव्यपदेशाधिकरणम्-१३**

१०४. आकाशोऽर्थान्तरत्वादिव्यपदेशात्

**सुषुप्त्युत्क्रान्त्यधिकरणम्-१४**

१०५. सुषुप्त्युत्क्रान्त्योर्भेदेन
१०६. पत्यादिशब्देभ्यः

इति तृतीयः पादः

| | अत्र पादे | आदितः |
|---|---|---|
| अधिकरणानि | १४ | ३२ |
| सूत्राणि | ४३ | १०६ |

१०२. तदभावनिर्धारणे च प्रवृत्तेः
१०३. श्रवणाध्ययनार्थप्रतिषेधात्
१०४. स्मृतेश्च
१०५. (प्रमिताधिकरणशेषः) कम्पनात्
१०६. ज्योतिर्दर्शनात्

**अर्थान्तरत्वादिव्यपदेशाधिकरणम्-१०**

१०७. आकाशोऽर्थान्तरत्वादिव्यपदेशात्
१०८. सुषुप्त्युत्क्रान्त्योर्भेदेन
१०९. पत्यादिशब्देभ्यः

इति तृतीयः पादः

| | अत्र पादे | आदितः |
|---|---|---|
| अधिकरणानि | १० | २७ |
| सूत्राणि | ४४ | १०९ |

९९. संस्कारपरामर्शात्तदभावाभिलापाच्च
१००. तदभावनिर्धारणे च प्रवृत्तेः
१०१. श्रवणाध्ययनार्थप्रतिषेधात्स्मृतेश्च

**कम्पनाधिकरणम्-१०**

१०२. कम्पनात्

**ज्योतिरधिकरणम्-११**

१०३. ज्योतिर्दर्शनात्

**आकाशाधिकरणम्-१२**

१०४. आकाशोऽर्थान्तरत्वादिव्यपदेशात्

**सुषुप्त्यधिकरणम्-१३**

१०५. सुषुप्त्युत्क्रान्त्योर्भेदेन

**ब्राह्मणाधिकरणम्-१४**

१०६. पत्यादिशब्देभ्यः

इति तृतीयः पादः

| | अत्र पादे | आदितः |
|---|---|---|
| अधिकरणानि | १४ | ३२ |
| सूत्राणि | ४३ | १०६ |

## अथ चतुर्थः पादः

### आनुमानिकाधिकरणम्-१

१०७. आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च

१०८. सूक्ष्मं तु तदर्हत्वात्

१०९. तदधीनत्वादर्थवत्

११०. ज्ञेयत्वावचनाच्च

१११. वदतीति चेन्न प्राज्ञो हि

११२. प्रकरणात्

११३. त्रयाणामेव चैवमुपन्यासः प्रश्नश्च

११४. महद्वच्च

११५. चमसवदविशेषात्

## अथ चतुर्थः पादः

### आनुमानिकाधिकरणम्-१

११०. आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च

१११. सूक्ष्मं तु तदर्हत्वात्

११२. तदधीनत्वादर्थवत्

११३. ज्ञेयत्वावचनाच्च

११४. वदतीति चेन्न प्राज्ञो हि प्रकरणात्

११५. त्रयाणामेव चैवमुपन्यासः प्रश्नश्च

११६. महद्वच्च

### चमसाधिकरणम्-२

११७. चमसवदविशेषात्

११८. ज्योतिरुपक्रमा तु तथा ह्यधीयत एके

## अथ चतुर्थः पादः

### आनुमानिकाधिकरणम्-१

१०७. आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च

१०८. सूक्ष्मं तु तदर्हत्वात्

१०९. तदधीनत्वादर्थवत्

११०. ज्ञेयत्वावचनाच्च

१११. वदतीति चेन्न प्राज्ञो हि प्रकरणात्

११२. त्रयाणामेव चैवमुपन्यासः प्रश्नश्च

११३. महद्वच्च

### चमसाधिकरणम्-२

११४. चमसवदविशेषात्

११५. ज्योतिरुपक्रमात्तु तथा ह्यधीयत एके

११६. कल्पनोपदेशाच्च मध्वादिवदविरोधः

**सङ्ख्योपसङ्ग्रहाधिकरणम्-३**

११७. न सङ्ख्योपसङ्ग्रहादपि नानाभावादतिरेकाच्च

११८. प्राणादयो वाक्यशेषात्

११९. ज्योतिषैकेषामसत्यन्ने

**कारणत्वाधिकरणम्-४**

१२०. कारणत्वेन चाऽऽकाशादिषु यथाव्यपदिष्टोक्तेः

१२१. समाकर्षात्

**बालाक्यधिकरणम्-५**

१२२. जगद्वाचित्वात्

१२३. जीवमुख्यप्राणलिङ्गान्नेति चेत्तद् व्याख्यातम्

१२४. अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके

**वाक्यान्वयाधिकरणम्-६**

१२५. वाक्यान्वयात्

११९. कल्पनोपदेशाच्च मध्वादिवदविरोधः

**सङ्ख्योपसङ्ग्रहाधिकरणम्-३**

१२०. न सङ्ख्योपसङ्ग्रहादपि नानाभावादतिरेकाच्च

१२१. प्राणादयो वाक्यशेषात्

१२२. ज्योतिषैकेषामसत्यन्ने

**कारणत्वाधिकरणम्-४**

१२३. कारणत्वेन चाऽऽकाशादिषु यथाव्यपदिष्टोक्तेः

१२४. समाकर्षात्

**जगद्वाचित्वाधिकरणम्-५**

१२५. जगद्वाचित्वात्

१२६. जीवमुख्यप्राणलिङ्गान्नेति चेत्तद्व्याख्यातम्

१२७. अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके

**वाक्यान्वयाधिकरणम्-६**

१२८. वाक्यान्वयात्

**ज्योतिरुपक्रमाधिकरणम्-२**

११६. ज्योतिरुपक्रमात्तु तथा ह्यधीयत एके

११७. कल्पनोपदेशाच्च मध्वादिवदविरोधः

**नसङ्ख्योपसङ्ग्रहाधिकरणम्-३**

११८. न सङ्ख्योपसङ्ग्रहादपि नानाभावादतिरेकाच्च

११९. प्राणादयो वाक्यशेषात्

१२०. ज्योतिषैकेषामसत्यन्ने

**आकाशाधिकरणम्-४**

१२१. कारणत्वेन चाऽऽकाशादिषु यथाव्यपदिष्टोक्तेः

**समाकर्षाधिकरणम्-५**

१२२. समाकर्षात्

१२३. जगद्वाचित्वात्

१२४. जीवमुख्यप्राणलिङ्गादिति चेत्तद्व्याख्यातम्

१२५. अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके

१२६. प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः
१२७. उत्क्रमिष्यत एवंभावादित्यौडुलोमिः
१२८. अवस्थितेरिति काशकृत्स्नः

**प्रकृत्यधिकरणम्-७**

१२९. प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्
१३०. अभिध्योपदेशाच्च
१३१. साक्षाच्चोभयाम्नानात्
१३२. आत्मकृतेः परिणामात्
१३३. योनिश्च हि गीयते

**सर्वव्याख्यानाधिकरणम्-८**

१३४. एतेन सर्वे व्याख्याता व्याख्याताः

इति चतुर्थः पादः

| | अत्र पादे | आदितः |
|---|---|---|
| अधिकरणानि | ८ | ४० |
| सूत्राणि | २८ | १३४ |

१२९. प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः
१३०. उत्क्रमिष्यत एवं भावादित्यौडुलोमिः
१३१. अवस्थितेरिति काशकृत्स्नः

**प्रकृत्यधिकरणम्-७**

१३२. प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्
१३३. अभिध्योपदेशाच्च
१३४. साक्षाच्चोभयाम्नानात्
१३५. आत्मकृतेः
१३६. परिणामात्
१३७. योनिश्च हि गीयते

**सर्वव्याख्यानाधिकरणम्-८**

१३८. एतेन सर्वे व्याख्याता व्याख्याताः

इति चतुर्थपादः

| | अत्र पादे | आदितः |
|---|---|---|
| अधिकरणानि | ८ | ३५ |
| सूत्राणि | २९ | १३८ |

१२६. वाक्यान्वयात्
१२७. प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः
१२८. उत्क्रमिष्यत एवं भावादित्यौडुलोमिः
१२९. अवस्थितेरिति काशकृत्स्नः

**प्रकृत्यधिकरणम्-६**

१३०. प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्
१३१. अभिध्योपदेशाच्च
१३२. साक्षाच्चोभयाम्नानात्
१३३. आत्मकृतेः परिणामात्
१३४. योनिश्च हि गीयते

**एतेनसर्वेव्याख्यातधिकरणम्-७**

१३५. एतेन सर्वे व्याख्याता व्याख्याताः

इति चतुर्थपादः

| | अत्र पादे | आदितः |
|---|---|---|
| अधिकरणानि | ७ | ४० |
| सूत्राणि | २९ | १३५ |

## अथ द्वितीयाध्यायस्य प्रथमः पादः

### स्मृत्यधिकरणम्-१

१३५. स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात्

१३६. इतरेषां चानुपलब्धेः

### योगप्रत्युक्त्यधिकरणम्-२

१३७. एतेन योगः प्रत्युक्तः

### न विलक्षणत्वाधिकरणम्-३

१३८. न विलक्षणत्वादस्य तथात्वं च शब्दात्

१३९. अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम्

१४०. दृश्यते तु

१४१. असदिति चेन्न प्रतिषेधमात्रत्वात्

१४२. अपीतौ तद्वत्प्रसङ्गादसमञ्जसम्

१४३. न तु दृष्टान्तभावात्

१४४. स्वपक्षदोषाच्च

## अथ द्वितीयाध्यायस्य प्रथमः पादः

### स्मृत्यधिकरणम्-१

१३९. स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात्

१४०. इतरेषां चानुपलब्धेः

### योगप्रत्युक्त्यधिकरणम्-२

१४१. एतेन योगः प्रत्युक्तः

### विलक्षणत्वाधिकरणम्-३

१४२. न विलक्षणत्वादस्य तथात्वं चशब्दात्

१४३. अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम्

१४४. दृश्यते तु

१४५. असदिति चेन्न प्रतिषेधमात्रत्वात्

१४६. अपीतौ तद्वत्प्रसङ्गादसमञ्जसम्

१४७. न तु दृष्टान्तभावात्

१४८. स्वपक्षदोषाच्च

## अथ द्वितीयाध्यायस्य प्रथमः पादः

### स्मृत्यधिकरणम्-१

१३६. स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात्

१३७. इतरेषां चानुपलब्धेः

१३८. एतेन योगः प्रत्युक्तः

### नविलक्षणत्वाधिकरणम्-२

१३९. न विलक्षणत्वादस्य तथात्वं च शब्दात्

१४०. दृश्यते तु

### अभिमान्यधिकरणम्-३

१४१. अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम्

१४२. दृश्यते च

### असदधिकरणम्-४

१४३. असदिति चेन्न प्रतिषेधमात्रत्वात्

१४४. अपीतौ तद्वत्प्रसङ्गादसमञ्जसम्

१४५. तर्काप्रतिष्ठानादप्यन्यथाऽनुमेयमिति चेदेवमप्यविमोक्षप्रसङ्गः

**शिष्टापरिग्रहाधिकरणम्-४**

१४६. एतेन शिष्टापरिग्रहा अपि व्याख्याताः

**भोक्त्रापत्यधिकरणम्-५**

१४७. भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत्

**आरम्भणाधिकरणम्-६**

१४८. तदनन्यत्वमारम्भणशब्दादिभ्यः

१४९. भावे चोपलब्धेः

१५०. सत्त्वाच्चावरस्य

१५१. असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषात्

१५२. युक्तेः शब्दान्तराच्च

१५३. पटवच्च

१५४. यथा च प्राणादि

१४९. तर्काप्रतिष्ठानादपि

१५०. अन्यथाऽनुमेयमिति चेदेवमप्यनिर्मोक्षप्रसङ्गः

**शिष्टापरिग्रहाधिकरणम्-४**

१५१. एतेन शिष्टापरिग्रहा अपि व्याख्याताः

**भोक्त्रापत्यधिकरणम्-५**

१५२. भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत्

**आरम्भणाधिकरणम्-६**

१५३. तदनन्यत्वमारम्भणशब्दादिभ्यः

१५४. भावे चोपलब्धेः

१५५. सत्त्वाच्चापरस्य

१५६. असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषात् युक्तेः शब्दान्तराच्च

१५७. पटवच्च

१५८. यथा च प्राणादिः

१४५. न तु दृष्टान्तभावात्

१४६. स्वपक्षदोषाच्च

१४७. तर्काप्रतिष्ठानादप्यन्यथाऽनुमेयमिति चेदेवमप्यनिर्मोक्षप्रसङ्गः

१४८. एतेन शिष्टा अपरिग्रहा अपि व्याख्याताः

**भोक्त्रधिकरणम्-५**

१४९. भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत्

**आरम्भणाधिकरणम्-६**

१५०. तदनन्यत्वमारम्भणशब्दादिभ्यः

१५१. भावे चोपलब्धेः

१५२. सत्त्वाच्चावरस्य

१५३. असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषात्

१५४. युक्तेः शब्दान्तराच्च

१५५. पटवच्च

१५६. यथा प्राणादिः

### इतरव्यपदेशाधिकरणम्-७

१५५. इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः
१५६. अधिकं तु भेदनिर्देशात्
१५७. अश्मादिवच्च तदनुपपत्तिः

### उपसंहारदर्शनाधिकरणम्-८

१५८. उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि
१५९. देवादिवदपि लोके

### कृत्स्नप्रसक्त्यधिकरणम्-९

१६०. कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा
१६१. श्रुतेस्तु शब्दमूलत्वात्
१६२. आत्मनि चैवं विचित्राश्च हि
१६३. स्वपक्षदोषाच्च

### सर्वोपेताधिकरणम्-१०

१६४. सर्वोपेता च तद्दर्शनात्
१६५. विकरणत्वान्नेति चेत्तदुक्तम्

### इतरव्यपदेशाधिकरणम्-७

१५९. इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः
१६०. अधिकं तु भेदनिर्देशात्
१६१. अश्मादिवच्च तदनुपपत्तिः

### उपसंहारदर्शनाधिकरणम्-८

१६२. उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि
१६३. देवादिवदपि लोके

### कृत्स्नप्रसक्त्यधिकरणम्-९

१६४. कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा
१६५. श्रुतेस्तु शब्दमूलत्वात्
१६६. आत्मनि चैवं विचित्राश्च हि
१६७. स्वपक्षदोषाच्च
१६८. सर्वोपेता च तद्दर्शनात्
१६९. विकरणत्वान्नेति चेत्तदुक्तम्

### इतरव्यपदेशाधिकरणम्-७

१५७. इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः
१५८. अधिकं तु भेदनिर्देशात्
१५९. अश्मादिवच्च तदनुपपत्तिः
१६०. उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि
१६१. देवादिवदपि लोके
१६२. कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा

### शब्दमूलत्वाधिकरणम्-८

१६३. श्रुतेस्तु शब्दमूलत्वात्
१६४. आत्मनि चैवं विचित्राश्च हि
१६५. स्वपक्षदोषाच्च
१६६. सर्वोपेता च तद्दर्शनात्
१६७. विकरणत्वान्नेति चेत्तदुक्तम्

### नप्रयोजनाधिकरणम्-९

१६८. न प्रयोजनवत्त्वात्
१६९. लोकवत्तु लीलाकैवल्यम्

### न प्रयोजनवत्वाधिकरणम्-११

१६६. न प्रयोजनवत्त्वात्

१६७. लोकवत्तु लीलाकैवल्यम्

### वैषम्यनैर्घृण्याधिकरणम्-१२

१६८. वैषम्यनैर्घृण्ये न सापेक्षत्वात्, तथा हि दर्शयति

१६९. न कर्माविभागादितिचेन्नानादित्वात्

१७०. उपपद्यते चाप्युपलभ्यते च

### सर्वधर्मोपपत्त्यधिकरणम्-१३

१७१. सर्वधर्मोपपत्तेश्च

इति प्रथमः पादः

| | अत्र पादे | आदितः |
|---|---|---|
| अधिकरणानि | १३ | ५३ |
| सूत्राणि | ३७ | १७१ |

### प्रयोजनवत्वाधिकरणम्-१०

१७०. न प्रयोजनवत्त्वात्

१७१. लोकवत्तु लीलाकैवल्यम्

१७२. वैषम्यनैर्घृण्ये न सापेक्षत्वात्,
तथा हि दर्शयति

१७३. न कर्माविभागादिति चेन्नानादित्वात्
उपपद्यते चाप्युपलभ्यते च

१७४. सर्वधर्मोपपत्तेश्च

इति प्रथमः पादः

| | अत्र पादे | आदितः |
|---|---|---|
| अधिकरणानि | १० | ४५ |
| सूत्राणि | ३६ | १७४ |

### वैषम्यनैर्घृण्याधिकरणम्-१०

१७०. वैषम्यनैर्घृण्ये न सापेक्षत्वात्,
तथा हि दर्शयति

१७१. न कर्माविभागादिति चेन्नानादित्वात्

१७२. उपपद्यते चाप्युपलभ्यते च

### सर्वधर्मोपपत्त्यधिकरणम्-११

१७३. सर्वधर्मोपपत्तेश्च

इति प्रथमः पादः

| | अत्र पादे | आदितः |
|---|---|---|
| अधिकरणानि | ११ | ५१ |
| सूत्राणि | ३८ | १७३ |

अथ द्वितीयाध्यायस्य द्वितीयः पादः

**रचनानुपपत्त्यधिकरणम्-१**

१७२. रचनानुपपत्तेश्च नानुमानम्

१७३. प्रवृत्तेश्च

१७४. पयोम्बुवच्चेत्तत्रापि

१७५. व्यतिरेकानवस्थितेश्चानपेक्षत्वात्

१७६. अन्यत्राभावाच्च न तृणादिवत्

१७७. अभ्युपगमेऽप्यर्थाभावात्

१७८. पुरुषाश्मवदिति चेत्तथाऽपि

१७९. अङ्गित्वानुपपत्तेश्च

१८०. अन्यथाऽनुमितौ च ज्ञशक्तिवियोगात्

१८१. विप्रतिषेधाच्चासमञ्जसम्

**महद्दीर्घाधिकरणम्-२**

१८२. महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम्

अथ द्वितीयाध्यायस्य द्वितीयः पादः

**रचनानुपपत्त्यधिकरणम्-१**

१७५. रचनानुपपत्तेश्च नानुमानं प्रवृत्तेश्च

१७६. पयोम्बुवच्चेत्तत्रापि

१७७. व्यतिरेकानवस्थितेश्चानपेक्षत्वात्

१७८. अन्यत्राभावाच्च न तृणादिवत्

१७९. पुरुषाश्मवदिति चेत्तथाऽपि

१८०. अङ्गित्वानुपपत्तेश्च

१८१. अन्यथाऽनुमितौ च ज्ञशक्तिवियोगात्

१८२. अभ्युपगमेऽप्यर्थाभावात्

१८३. विप्रतिषेधाच्चासमञ्जसम्

**महद्दीर्घाधिकरणम्-२**

१८४. महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम्

१८५. उभयथाऽपि न कर्मातस्तदभावः

१८६. समवायाभ्युपगमाच्च साम्यादनवस्थितेः

१८७. नित्यमेव च भावात्

अथ द्वितीयाध्यायस्य द्वितीयः पादः

**रचनानुपपत्त्यधिकरणम्-१**

१७४. रचनानुपपत्तेश्च नानुमानम्

१७५. प्रवृत्तेश्च

१७६. पयोम्बुवच्चेत्तत्रापि

१७७. व्यतिरेकानवस्थितेश्चानपेक्षत्वात्

**अन्यत्राभावाधिकरणम्-२**

१७८. अन्यत्राभावाच्च न तृणादिवत्

**अभ्युपगमाधिकरणम्-३**

१७९. अभ्युपगमेऽप्यर्थाभावात्

**पुरुषाश्माधिकरणम्-४**

१८०. पुरुषाश्मवदिति चेत्तथाऽपि

१८१. अङ्गित्वानुपपत्तेः

### परमाणुजगत्कारणत्वा परमाणु-(कारणपराकरणा)धिकरणम्-३

१८३. उभयथाऽपि न कर्मातस्तदभावः
१८४. समवायाभ्युपगमाच्च साम्यादनवस्थितेः
१८५. नित्यमेव च भावात्
१८६. रूपादिमत्त्वाच्च विपर्ययो दर्शनात्
१८७. उभयथा च दोषात्
१८८. अपरिग्रहाच्चात्यन्तमनपेक्षा

### समुदायाधिकरणम्-४

१८९. समुदाय उभयहेतुकेऽपि तदप्राप्तिः
१९०. इतरेतरप्रत्ययत्वादिति चेन्नोत्पत्तिमात्रनिमित्तत्वात्
१९१. उत्तरोत्पादे च पूर्वनिरोधात्
१९२. असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा
१९३. प्रतिसङ्ख्याऽप्रतिसङ्ख्यानिरोधाप्राप्तिरविच्छेदात्
१९४. उभयथा च दोषात्
१८८. रूपादिमत्त्वाच्च विपर्ययो दर्शनात्
१८९. उभयथा च दोषात्
१९०. अपरिग्रहाच्चात्यन्तमनपेक्षा

### समुदायाधिकरणम्-३

१९१. समुदाय उभयहेतुकेऽपि तदप्राप्तिः
१९२. इतरेतरप्रत्ययत्वादुपपन्नमिति चेन्न सङ्घातभावानिमित्तत्वात्
१९३. उत्तरोत्पादे च पूर्वनिरोधात्
१९४. असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा
१९५. प्रतिसङ्ख्याऽप्रतिसङ्ख्यानिरोधाप्राप्तिरविच्छेदात्
१९६. उभयथा च दोषात्
१९७. आकाशे चाविशेषात्
१९८. अनुस्मृतेश्च
१९९. नासतोऽदृष्टत्वात्
२००. उदासीनानामपि चैवं सिद्धिः

### अन्यथानुमित्यधिकरणम्-५

१८२. अन्यथाऽनुमितौ च ज्ञशक्तिवियोगात्
१८३. विप्रतिषेधाच्चासमञ्जसम्

### वैशेषिकाधिकरणम्-६

१८४. महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम्
१८५. उभयथाऽपि न कर्मातस्तदभावः
१८६. समवायाभ्युपगमाच्च साम्यादनवस्थितेः
१८७. नित्यमेव च भावात्
१८८. रूपादिमत्त्वाच्च विपर्ययो दर्शनात्
१८९. उभयथा च दोषात्
१९०. अपरिग्रहाच्चात्यन्तमनपेक्षा

### समुदायाधिकरणम्-७

१९१. समुदाय उभयहेतुकेऽपि तदप्राप्तिः
१९२. इतरेतरप्रत्ययत्वादिति चेन्नोत्पत्तिमात्रनिमित्तत्वात्
१९३. उत्तरोत्पादे च पूर्वनिरोधात्

१९५. आकाशे चाविशेषात्

१९६. अनुस्मृतेश्च

१९७. नासतोऽदृष्टत्वात्

१९८. उदासीनानामपि चैवं सिद्धिः

### अभावाधिकरणम्-५

१९९. नाभाव उपलब्धेः

२००. वैधर्म्याच्च न स्वप्नादिवत्

२०१. न भावोऽनुपलब्धेः

२०२. क्षणिकत्वाच्च

२०३. सर्वथाऽनुपपत्तेश्च

### एकस्मिन्नसम्भवाधिकरणम्-६

२०४. नैकस्मिन्नसम्भवात्

२०५. एवं चाऽत्माकात्स्नर्यम्

२०६. न च पर्यायादप्यविरोधो विकारादिभ्यः

२०७. अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषः

### उपलब्ध्यधिकरणम्-४

२०१. नाभाव उपलब्धेः

२०२. वैधर्म्याच्च न स्वप्नादिवत्

२०३. न भावोऽनुपलब्धेः

### सर्वथाऽनुपपत्त्यधिकरणम्-५

२०४. सर्वथाऽनुपपत्तेश्च

### एकस्मिन्नसम्भवाधिकरणम्-६

२०५. नैकस्मिन्नसम्भवात्

२०६. एवं चाऽत्माकात्स्नर्यम्

२०७. न च पर्यायादप्यविरोधो विकारादिभ्यः

२०८. अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषः

### पशुपत्यधिकरणम्-७

२०९. पत्युरसामञ्जस्यात्

२१०. अधिष्ठानानुपपत्तेश्च

२११. करणवच्चेन्न भोगादिभ्यः

२१२. अन्तवत्त्वमसर्वज्ञता वा

१९४. असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा

१९५. प्रतिसङ्ख्याऽप्रतिसङ्ख्यानिरोधाप्राप्तिरविच्छेदात्

१९६. उभयथा च दोषात्

१९७. आकाशे चाविशेषात्

१९८. अनुस्मृतेश्च

### असदधिकरणम्-८

१९९. नासतोऽदृष्टत्वात्

२००. उदासीनानामपि चैवं सिद्धिः

२०१. नाभाव उपलब्धेः

२०२. वैधर्म्याच्च न स्वप्नादिवत्

### अनुपलब्ध्यधिकरणम्-९

२०३. न भावोऽनुपलब्धेः

२०४. क्षणिकत्वाच्च

२०५. सर्वथाऽनुपपत्तेश्च

### नैकस्मिन्नधिकरणम्-१०

२०६. नैकस्मिन्नसम्भवात्

२०७. एवं चाऽत्माकात्स्नर्यम्

**पत्यधिकरणम्-७**

२०८. पत्युरसामञ्जस्यात्

२०९. सम्बन्धानुपपत्तेश्च

२१०. अधिष्ठानानुपपत्तेश्च

२११. करणवच्चेन्न भोगादिभ्यः

२१२. अन्तवत्त्वमसर्वज्ञता वा

**उत्पत्त्यसम्भवाधिकरणम्-८**

२१३. उत्पत्त्यसम्भवात्

२१४. न च कर्तुः करणम्

२१५. विज्ञानादिभावे वा तदप्रतिषेधः

२१६. विप्रतिषेधाच्च

इति द्वितीयाध्यायस्य द्वितीयः पादः

| | अत्र पादे | आदितः |
|---|---|---|
| अधिकरणानि | ८ | ६१ |
| सूत्राणि | ४५ | २१६ |

**उत्पत्त्यसम्भवाधिकरणम्-८**

२१३. उत्पत्त्यसम्भवात्

२१४. न च कर्तुः करणम्

२१५. विज्ञानादिभावे वा तदप्रतिषेधः

२१६. विप्रतिषेधाच्च

इति द्वितीयाध्यायस्य द्वितीयः पादः

| | अत्र पादे | आदितः |
|---|---|---|
| अधिकरणानि | ८ | ५३ |
| सूत्राणि | ४२ | २१६ |

२०८. न च पर्यायादप्यविरोधो विकारादिभ्यः

२०९. अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषात्

**पत्युरधिकरणम्-११**

२१०. पत्युरसामञ्जस्यात्

२११. सम्बन्धानुपपत्तेश्च

२१२. अधिष्ठानानुपपत्तेश्च

२१३. करणवच्चेन्न भोगादिभ्यः

२१४. अन्तवत्त्वमसर्वज्ञता वा

**उत्पत्त्यधिकरणम्-१२**

२१५. उत्पत्त्यसम्भवात्

२१६. न च कर्तुः करणम्

२१७. विज्ञानादिभावे वा तदप्रतिषेधः

२१८. विप्रतिषेधाच्च

इति द्वितीयाध्यायस्य द्वितीयः पादः

| | अत्र पादे | आदितः |
|---|---|---|
| अधिकरणानि | १२ | ६३ |
| सूत्राणि | ४५ | २१८ |

## अथ द्वितीयाध्यायस्य तृतीयः पादः

### वियदधिकरणम्-१

२१७. न वियदश्रुतेः

२१८. अस्ति तु

२१९. गौण्यसम्भवात्

२२०. शब्दाच्च

२२१. स्याच्चैकस्य ब्रह्मशब्दवत्

२२२. प्रतिज्ञाहानिरव्यतिरेकाच्छब्देभ्यः

२२३. यावद्विकारं तु विभागो लोकवत्

### मातरिश्वाधिकरणम्-२

२२४. एतेन मातरिश्वा व्याख्यातः

### असम्भवाधिकरणम्-३

२२५. असम्भवस्तु सतोऽनुपपत्तेः

### तेजोधिकरणम्-४

२२६. तेजोऽतस्तथा ह्याह

## अथ द्वितीयाध्यायस्य तृतीयः पादः

### वियदधिकरणम्-१

२१७. न वियदश्रुतेः

२१८. अस्ति तु

२१९. गौण्यसम्भवाच्छब्दाच्च

२२०. स्याच्चैकस्य ब्रह्मशब्दवत्

२२१. प्रतिज्ञाऽहानिरव्यतिरेकात्

२२२. शब्देभ्यः

२२३. यावद्विकारं तु विभागो लोकवत्

२२४. एतेन मातरिश्वा व्याख्यातः

२२५. असम्भवस्तु सतोऽनुपपत्तेः

### तेजोधिकरणम्-२

२२६. तेजोऽतस्तथा ह्याह

२२७. आपः

२२८. पृथिवी

२२९. अधिकाररूपशब्दान्तरेभ्यः

## अथ द्वितीयाध्यायस्य तृतीयः पादः

### वियदधिकरणम्-१

२१९. न वियदश्रुतेः

२२०. अस्ति तु

२२१. गौण्यसम्भवात्

२२२. शब्दाच्च

२२३. स्याच्चैकस्य ब्रह्मशब्दवत्

२२४. प्रतिज्ञाऽहानिरव्यतिरेकाच्छब्देभ्यः

२२५. यावद्विकारं तु विभागो लोकवत्

### मातरिश्वाधिकरणम्-२

२२६. एतेन मातरिश्वा व्याख्यातः

### असम्भवाधिकरणम्-३

२२७. असम्भवस्तु सतोऽनुपपत्तेः

### तेजोधिकरणम्-४

२२८. तेजोऽतस्तथा ह्याह

**अबधिकरणम्-५**

२२७. आपः

**पृथिव्यधिकाराधिकरणम्-६**

२२८. पृथिव्यधिकाररूपशब्दान्तरेभ्यः

**तदभिध्यानाधिकरणम्-७**

२२९. तदभिध्यानादेव तु तल्लिङ्गात्सः

**विपर्ययाधिकरणम्-७**

२३०. विपर्ययेण तु क्रमोऽत उपपद्यते च

**अन्तराविज्ञानाधिकरणम्-९**

२३१. अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात्

**चराचरव्यपाश्रयाधिकरणम्-१०**

२३२. चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशो भाक्तस्तद्भावभावित्वात्

२३०. तदभिध्यानादेव तु तल्लिङ्गात्सः

२३१. विपर्ययेण तु क्रमोऽत उपपद्यते च

२३२. अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात्

२३३. चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशो भाक्तस्तद्भावभावित्वात्

**आत्माधिकरणम्-३**

२३४. नाऽत्मा श्रुतेर्नित्यत्वाच्च ताभ्यः

**ज्ञाधिकरणम्-४**

२३५. ज्ञोऽत एव

२३६. उत्क्रान्तिगत्यागतीनाम्

२३७. स्वात्मना चोत्तरयोः

२३८. नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात्

२३९. स्वशब्दोन्मानाभ्यां च

२४०. अविरोधश्चन्दनवत्

२४१. अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृदि हि

**अबधिकरणम्-५**

२२९. आपः

**पृथिव्यधिकरणम्-६**

२३०. पृथिव्यधिकाररूपशब्दान्तरादिभ्यः

**तदभिध्यानाधिकरणम्-७**

२३१. तदभिध्यानादेव तु तल्लिङ्गात्सः

**विपर्ययाधिकरणम्-८**

२३२. विपर्ययेण तु क्रमोऽत उपपद्यते च

**अन्तराधिकरणम्-९**

२३३. अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात्

२३४. चराचरव्यपाश्रयस्तु स्यात् तद्व्यपदेशो भाक्तस्तद्भावभावित्वात्

**आत्माधिकरणम्-१०**

२३५. नाऽत्माऽश्रुतेर्नित्यत्वाच्च ताभ्यः

